**अजीर्णम्।** क्लीं। अपाकरोगविशेष। आमं विदग्धञ्च यत्तदजीर्णम्। भा म ख १भ अ ख मा। तच्चात्यम्बुपान विषमभोजन-वेगविधारण दिवानिद्रा रात्रिजागरणादिभि कारणैरुत्पद्यते। उत्पन्ने चाजीर्णरोगे यथासमयं दृष्टानुरूपमपि नव भोजन न परिपाकमेति। आदौ तत्त्रिविधम्, आम विदग्ध विष्टब्धाजीर्णभेदेन। तथान्नजरसशेषाहाररसज दिनपाकित्वाद्दिनद्वयमपि कल्पितम्। तेषु कफ कोपादामाजीर्णं, पित्तकोपाद्विदग्धाजीर्णं, वायु कोपाच्च विष्टब्धाजीर्णं भवति। रसशेषतया रसशेषा जीर्णम्। माधव। वा नि १२ ब। "गोमांस भक्षको मन्दजठराग्निर्भवेन्नर। प्राजापत्य चरेत्कृच्छ्र मतिकृच्छ्र तथैव च॥" इत्यादि कर्मविपाक। See अग्निमान्द्यम्।

**अजीर्णकण्टकरस।** पु। रसौषध अजीर्ण प्रशमन। रस र। र सा स। सा कौ। भा। भैष। प्रयोगा।

**अजीर्णजरण।** पु। कर्पूरे। See कर्पूर।

**अजीर्णी।** त्रि। अजीर्णरोगयुक्ते।

**अजेय।** पु। अर्जुनवृक्षे। व निघ।

**अज्झटा।** स्त्री। भूम्यामलक्याम्। भूँई आम्ला। हि भुइ आम्वरा। भा पू १भ गु व।

**अज्झल।** पु। कोकिले।

**अञ्चकम्।** क्ली। नेत्रे। रा नि व १८।

**अञ्जन।** पु। गृहगोधिकायाम्। टिक्‌टिकी।

**अञ्जनम्** / **अञ्जनकर्म** } क्लीं। Anointing or making clear नेत्रप्रसाधने। काजल, आजनाइ, आजन् इति भाषा। सुर्मा इति पश्चिमदेशे। अञ्जन क्रियते येन तद्द्रव्य चाञ्जन स्मृतम्। तच्च पञ्चविधम्— सौवीर मञ्जन प्रोक्त रसाञ्जनमत परम्। स्रोतोऽञ्जन तद न्यच्च पुष्पाञ्जनकमेव च। नीलाञ्जनञ्चेति। तेषु सौवीरं धूम्र रक्तपित्तहरञ्च। रसाञ्जन विषहिक्का शिरोगघ्नं व्रणरोपणशोधनञ्च। स्रोतोऽञ्जनं पीताभ, पुष्पाञ्जन सित, नीलाञ्जनञ्च नीलवर्णमिति। वा। तच्च षड्विधमिति कालिकापुराणे, यथा—'सौवीरं जाम्बल तुल्य मयूर श्रीकर तथा। तुत्थिका मेघ नीलञ्च अञ्जनानि भवन्ति षट्॥ सवद्वुपन्तु सौवीर जाम्बलं प्रस्तरं तथा। मयूरं श्रीकर रक्त मेघनीलञ्च तत्समम्॥ घृततैलादियोगेन सामान्यो दीपवर्त्मिना। यदञ्जन जायते तु दग्धिका परिकीर्तिता॥" इति। गुण—नेत्रनैर्मल्यकारित्वमेव। पुनस्त्रिविध रसो वटी तथा चूर्णमिति। "यथापूर्व बल तेषु श्रेष्ठ माहुर्मनीषिण॥' इति। तत्र पुन प्रत्येक त्रिविध यथा—"तत्प्रत्येक त्रिधा प्रोक्त लेखन रोपण तथा स्नेहनञ्चेति लिङ्गानि । लेखन चारतीक्ष्णाम्ल रसैरञ्जनमुच्यते। नेत्रवर्त्मशिराजालश्रोत्रशृङ्गाटक स्थित। मुखनासाक्षिभिर्दोषमुत्क्लिश्य स्रावयेत्त त र॥ कषाय तिक्तक चापि सस्नेह रोपण मतम्। स्नेहस्य शैत्याच्च स्यात् दृष्टेश्च बलवर्द्धन। मधुर स्नेहसम्पन्न तदञ्जन स्यात्प्रसादनम्॥ दृष्टि दोष प्रसादाय स्नेहनार्थञ्च तद्धित। एरण्डमात्रा वर्त्तिस्तु लेखनी स्यात्प्रमाणत। सार्द्धैकरेणुकमिता रोपणी वर्त्तिरिष्यते। क्रियते स्नेहनीवर्त्तिर्द्विहरेणुकमानया॥ रसाञ्जनस्य मात्रा तु पिण्ड वर्त्ति मिता मता। चूर्णन्तु लेखन वैद्यैर्द्विशलाक प्रदीयते। रोपण त्रिशलाक स्यात् चतस्र स्नेहनाञ्जने॥" हेमन्ते शिशिरे मध्याह्ने ग्रीष्मे शरद्यपराह्णे वर्षासु वसन्ते च सर्वदैव काल इति। भा पू ख २भ। कज्जल। हं च। सि यो कामलाचि रक्तपित्तचि। स्रोतोऽञ्जने। भा। सु चि २५ अ। रसाञ्जने। च द अ सा चि प्रियङ्ग्वादि। रक्तपित्त चि। च ३ ब मदेहप-क्ति। नस्यनयोगेच। भा बालचि। सौवीराञ्जने। वा सू १५ अ अञ्जनादि। सु सू २८ अ। See अञ्जनविधि।

**अञ्जन।** पु। ज्येष्ठी नाम प्राणिविशेषे। टिक्‌टिकि।

**अञ्जनकेशिका** / **अञ्जनकेशी** } स्त्री। हट्टविलासिनीनाम गन्धद्रव्ये। A vegetable perfume नलिकानाम गन्धद्रव्ये उत्तरदेशे प्रसिद्धे। भा पु १भ क व।

**अञ्जनगुडिका।** स्त्री। विसूचिकायामौषध वि ये। गुडपुष्पकम, अपामार्गबीजं, अपराजिता मूल, हरिद्रा, त्रिकटु च। अञ्जन कर्त्तव्यम्। च द अग्निमान्द्यचि।

**अञ्जनत्रयम्(त्रितयम्)।** क्ली। कालाञ्जन स्रोतोऽञ्जन रसाञ्जनेषु। "कालाञ्जनसमायुक्त स्रोतो ऽञ्जनरसाञ्जने। रा नि व २२।

**अञ्जननामिका।** स्त्री। वर्त्मगतनेत्ररोगभेदे। आञ्जनी, आञ्जनाई। अत्र वर्त्ममध्ये रक्तेन ताम्रा मुद्गप्रमाणा पिडका भवति। मा उ ८१४ ब।

"दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा । मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥" मा नि ।

**अञ्जनभैरवः** । पु । सान्निपातिकज्वरे रस । यथा,—"मृत तीक्ष्ण कणा गन्धमेकांशं नयपालवं । सर्व्वंस्त्रिगुणित जम्भवारिणा च सुभेषितं । नेत्राञ्जनेन हन्त्याशु सर्व्वोपद्रवयुक्तम् ॥" भैष । अत्र एकांशमिति प्रत्येकमेकांशम् । तीक्ष्ण तीक्ष्ण लौहम् । र सा स सान्निपा ज्व । अत्याञ्जन विधि ।

**अञ्जनयुग्मम्** । क्ली । सौवीरेऽञ्जने रसाञ्जने च । वा सु प्रियङ्ग्वादि ।

**अञ्जनरसः** । पु । सान्निपातिकज्वरे नस्यम् । इङ्गुदी पारद । मरिचचूर्ण समम् । र सा स ज्व चि । अन्य सान्निपातिकज्वरन्दाहे । तत वाह्निके हिङ्गु । रसक स्फटिकारी ।

**अञ्जनविधिः** । पु । नेत्रप्रसाधनभेदे । यथा, "अथ सम्पक्वदोषस्य प्राप्तमञ्जनमाचरेत् । अञ्जन क्रियते येन तद्द्रव्य चाञ्जन मतम् ॥ रसी वटी तथा चूर्णमिति त्रिविधमञ्जनम् । यथापूर्व्व बल तेषु श्रेष्ठमाहुर्मनीषिण ॥ तत्प्रत्येक त्रिधा प्रोक्त लेखनं रोपणं तथा । स्नेहनञ्चेति" । तेषु लेखनं क्षार-तीक्ष्णाम्लरसैरञ्जनं नेत्रवर्त्मादिदोषहृत् । रोपण सस्नेह कषाय तिक्त दृष्टिबलवर्द्धनञ्च ॥ मधुर स्नेह सम्पन्न स्नेहन नेत्रस्नेहनार्थम् । हरेणुमात्रा कुर्व्वीत वटी तीक्ष्णाञ्जने भिषक् । रसक्रियानूत्तमा स्यात् त्रिविडङ्गमिता मता । मध्यमा सा द्विविडङ्गा हीना त्वेकविडङ्गिका ॥ शलाका स्नेहने चूर्णे चतस्र प्राहुरञ्जने । रोपणे तासु तिस्र स्युर्द्वे उभे लेखने स्मृत ॥ सुस्वयी कुश्चिता ग्लक्ष्णा शलाकाष्टाङ्गुलोन्मिता । अश्मजा धातुजा वा स्यात् कलाय परिमण्डला । सुवर्णरजतोद्भूता शलाका स्नेहने स्मृता ॥ ताम्रलौहाश्मसञ्जाता शलाका लेखने मता ॥ अङ्गुलीतु मृदुत्वेन रोपणे कथिता बुध ॥ अथानुलोमयन् दृष्टी कृष्णमध्यमयेच्छनै । अञ्जिते वर्त्मनी किञ्चित् चालयेच्चैवमञ्जनं । अञ्जितौषध-सम्बन्धान्निमीलं नयनं यदा । व्याधिदोषर्तु योग्याभिरद्भि प्रक्षालयेत्तदा । दक्षिणाङ्गुष्ठकेनाक्षि ततो वाम सवाससा । ऊर्द्ध्ववर्त्मानि संगृह्य शोध्य वामेन चेतरत् । निशि स्वप्ने न मध्याह्नपानाग्नी गागतस्त्रिभि । अक्षिरोगाय दोषा स्युर्वर्द्धितोत्पीडितद्रुता । प्रात सायञ्च तच्छान्तिरभ्रकेऽतोऽञ्जनेत् सदा । कण्डुजाड्ये ऽञ्जनं तीक्ष्ण धूमं वा योजयेत् पुन । तीक्ष्णाञ्जनाभितप्ततु चूर्ण प्रत्यञ्जनं हितं । नाञ्जयेद् भीत वमित विरिक्ताशितरोगिणि । क्रुद्धज्वरितभ्रान्ताक्षि शिरोरुक्शोकजागरे । अदृष्टेऽर्के शिर स्नाते पीतयोर्धूम मद्ययो । अजीर्णेऽग्न्यर्कसन्तप्ते दिवास्वप्ने पिपासिते । निर्व्वाण तर्पण योग्य शुद्धयो मूढकाययो । कार्ये साधारणे प्रात साय वोत्तानशायिन । यवमापमयी पाली नेत्रकोषाद्बहि समा । द्व्यङ्गुलोच्चा दृढा कृत्वा यथास्व सिद्धमावपेत् ॥ भा ।

**अञ्जनादिगण** । पु । अञ्जनफलिनीमांसी पद्मोत्पलरसाञ्जनमधुकनागाह्वरूपो वर्ग । स च विषान्तदाहपित्तघ्न । वा सु १५ अ । सौवीराञ्जन, रसाञ्जन, नागकेशरपुष्प, प्रियङ्गु, नीलोत्पल, वीरणमूल, नलिनं, मधुक, पुन्नागश्चेति । सु स ३८अ ।

**अञ्जनाधिका**
**अञ्जनिका** } स्त्री । कृष्णकार्पासक्षुपे । See कालाञ्जनी । अञ्जन्याम् । ओजनाई । अञ्जनी लेपकारिणी । हारा । हे च ४ का । क्षुद्रमूषिकायाम् ।

**अञ्जनाम्भ** । क्ली । अञ्जनजलं । Liquid collyrium

**अञ्जनिक** । पु । गन्धराक्षायाम् ।

**अञ्जनी** । स्त्री । कटुकायाम् । कालाञ्जन्या । रा नि व ४ ।

**अञ्जलि** । पु । प्रसृतिद्वये, ३२ तो प म १ख । कुडवमाने । रत्ना नानार्थं । भा उ वाजी । करसम्पुटे । मे लत्रिकम् ।

**अञ्जलिका** । स्त्री । लज्जालुकायाम् । क्षुद्रमूषिकायाम् । जटा ।

**अञ्जलिकारिका** । स्त्री । (Mimosa natans) लज्जालुकायाम् । रा नि व ५ । भा पू गु व । (Lycopodium imbricatum) वराहक्रान्तायाम् । वराक्रान्ता ।

**अञ्जलिनी** । स्त्री । लज्जालुकायाम् ।

**अञ्जिष्ठ** । पु । सूर्ये । उ ।

**अञ्जीर** । पु । Ficus carica, Psidium pomiferum) स्वनामख्यातवृक्षे । वङ् (पेयारा) गाछ । हि अँजीर । तत्पर्याय,— मञ्जुल, काकोदुम्बरिकाफल । फलगुण— शीतल स्वादु, गुरु, रक्तपित्तवातघ्न क्रिमिशूल हृत्पीडा-कफ कुष्ठवैरस्य नाशित्व । मद व ६ ।

वृषणौ दूषयित्वा तु शोणिता यमा संयुत । तत्र सप्तधमन्यौ को रोगी वाताण्डसनक ॥ पदाङ्ग दम्पतेऽश्वसा तेन पादेन खञ्जति । स्मग्रपृष्ठमा तस्याश्च वदना मुष्कयोर्भवेत ॥ शनका मुष्कयोर्येन रक्तता कृष्णतापि वा । भवन् पित्तेन दुष्टेन पिडकानाञ्च सम्भव ॥ यनौ पक्वौ तुरङ्गमा मुष्कौ यमा मवेदनौ । विकस्तम्भेन युक्तमा तमा पुत्ताण्डमादिशेत ॥ स्पर्शंत कठिनौ रूक्षौ स्पर्शदंवयौ मृदू । वृषणौ यमा वाहसा स रक्ताण्ड प्रकीर्त्तित ॥ तस्मिन् सम्ना प्रयोक्तव्या क्रिया पीताण्डधीधिता ॥ यनौ न कठिनौ रूक्षौ वृषणौ मन्दवेदनौ । कफञ्मुषकमा वाहसा मुष्कयोश्च गयते । श्लेष्माण्ड स तु विज्ञेय श्लीपाण्डौ वेधयच्छिरां । निरूह कटुतैलेन चाङ्ग स्वेदञ्च कारयेत् ॥ जयदत्त ५० अ ।

**अण्डहस्ती** । पु । चक्रमर्द्दक्षुपे । रा नि व ५ ।

**अण्डालु.** । पु । मत्स्ये । श च ।

**अण्डिका** । स्त्री । यवचतुष्टयपरिमाणे । च ।

**अण्डिनी** । स्त्री । सान्निपातिकयोनिरोगविशेषे । लक्षण— अतिकाय गृहीतायामकन्या स्त्वण्डिनी भवेत्॥' सु चि ।

**अण्डीर** । पु । पुरुष । मे रत्रिक ।

**अण्वस्थि** । क्ली । मणिवन्धादिस्थे सन्ध्यास्थि । सु श ।

**अण्वी** । स्त्री । अङ्गुली ।

**अतन्द्रा** । स्त्री । काफि इति ख्याते फले । चा इति च लोके । अनि ।

**अतरुणदारु** ) पु । वृद्धदारके । विज-
**अतरुणदार (क)** ) ताडक । भि विधारा ।

'अतरुणदारुरा-अपरा ।' भा म १ भ सन्धिकन्च चि ।

**अतलस्पृक्** । क्ली । जल । है च ४ का ।

**अतसी** । स्त्री । (Linum Usitatissimum) Common flax चुमावृक्षे । मसिना । क्षितिसि । ते नववगसिवेद्रु । तत्पर्याया ,—चणका, उमा, क्षौमी, रुद्रपत्नी, सुवर्चला, (र) । पिच्छिला, देवी, मदगन्धा, मदोत्कटा, क्षुमा, हैमवती, सुनीला, नीलपुष्पिका, पार्वती । गुणा —मधुरा बलकारिका कफवातवर्द्धनी, दृष्टपित्तघ्नी कुष्ठवातघ्नी च । रा नि व १६ । शुक्रदृष्टिघ्नी स्निग्धा गुरु वातामजित् । मद व १० ।

**अतसीतैलम्** । क्ली । अतसीजाततैले । मसिनार तैल । गुणा —मधुर पिच्छिलं बालन मद गन्धि कषाय कफहृत कामहरञ्च । रा नि व १५ । आग्नेयं स्निग्धोष्ण कफपित्तकृत् कटुपाकमचक्षुष्य बल्य वातहर गुरु । मलकृत् रसत स्वादु ग्राहि त्वग्दोषहृद्घनम् । वस्ती पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे । अनुपानविधौ चापि प्रयोज्य वातशान्तये ॥ भा पू तैलव ।

**अतिकटु.** । त्रि । निम्बादिद्रव्य ।

**अतिकण्ट (क:)** । पु । गोक्षुरके । दुरालभायाम् । मद व १ ।

**अतिकन्द (क)** । पु । हस्तिकन्दनाममहाकन्दशाक । रा नि व ७ ।

**अतिकाय.** । त्रि । स्थूलदेहे । स्थूल शरीर । 'अति काय गृहीताया मकन्या स्त्वण्डिनी भवेत् ।' मा नि ।

**अतिकृश.** । त्रि । अतिदुर्बल ।

**अतिकेशर.** । पु । कुब्जकापुष्पवृक्षे । कोरण्ट देशीय पुष्पविशेष । हि कुजा । रा नि व १० । भा पू पु व । कण्टकसेवत्याम् । वॉटा सेउति ।

**अतिक्रान्तावेक्षणम्** । क्ली । यत्पूर्वमभिहितं तत् । यथा चिकित्सितेषु ब्रूयात् "श्लोकस्थाने यदीरितमिति ।' सु उ ६५अ ।

**अतिगण्ड** । त्रि । वृहद्गण्डे । मे डचतुष्क ।

**अतिगन्ध'** । पु । A sort of Jasmine (Jasminum zambac) मल्लिपुष्पवृक्षे । रा नि व १० । गन्धके । रा नि व १३ । (Michelia champaca) चम्पकवृक्षे । रा नि व १०। भद्रयो । गन्धतृण । रा नि व ८ ।

**अतिगन्धक** । पु । हस्तिकर्णपलाशवृक्षे । चम्पकवृक्षे । रा नि व १० ।

**अतिगन्धा(लु)** । स्त्री । पुत्रदात्रीलतायाम् । रा नि व ४ ।

**अतिगन्धिका** । स्त्री । पुत्रदात्रीलतायाम् । जिह्वाशृङ्गा । रा नि व ४ ।

**अतिगुहा** । स्त्री । (Uraria logopoedes) पृश्निपर्ण्याम् । छोट चाकुले । रमा । शालपर्ण्याम् । मद व १ । वा मृ २९ अ । 'लघ्वीं गुहामतिगुहाम् ।

**अतिघूर्णता**। स्त्री। अतिनिद्रा। भा म ४भ मसूरिकानि। 'वपा-दाहातिघूर्णता।'

**अतिचर**। पु। पक्षिभेदे। हक्षविशेषे।

**अतिचरणा**। स्त्री। तन्नामक कफजयोनिरोग विशेषे। अतिव्यवायेन शोथयुक्ता योनिरतिचरणो च्यते। 'मैथुनातिचरणा शोफसयुक्तातिमैथुनात।' वा उ ३३ अ। See अचरणा।

**अतिचरा(ला)**। स्त्री। पद्मचारिण्याम्। मद व ३। (Hibiscus mutabilis) स्थलपद्मिन्याम। स्थलपद्म। रा नि व ५। भा पू १भ See स्थलपद्मम्। भतवर्ग।

**अतिच्छत्र**। पु। रक्तकोकिलाक्षे। ताम्रा वर्ना। नख कुलेखाडा। प सु। स्त्री। छत्रायाम्। Mushroom ব্যাঙছাতু, পোগানছাতু। स्थूलतृणविशेषे।

**अतिच्छत्रका**। पु। भूतृणे। प सु। भूतृणे। गन्धतृण। रा नि व ८ तृणसाधारणे। हक्षविशेषे। यस्य मूले पत्रे वा वचाकार कटुरसय। रा नि। सप्तपर्णवृक्षे।

**अतिच्छत्रा** } स्त्री। शताह्वायाम्। শুলফা।
**अतिच्छत्रिका** } रा नि व ४। मद व २। वा उ ३६ अ। "अतिच्छत्रा पलङ्कषा। सि यो उन्माद-चि महापैशाचघृते। मधुरिकायां। মৌরী। च चि अ। छत्रवृक्षे। यस्य मूले पत्रे वा वचाकार कटुरसय। भूतृणे। रा नि। विषाणिकायाम्। वा स २९अ। तन्नामकमहौषधी। See औषधि।

**अतिजागर**। प। नीलक्रौञ्चे। रा नि व १९।

**अतिजृम्भ**। पु। वायुरोगविशेषे। वै निघ।

**अतितपस्विनी**। स्त्री। गोरक्षदुग्धायाम्। গোরক্ষ চাকুলিয়া। भा पु १भ गु व।

**अतितर्पनम्**। क्ली। अतितृप्ती। वा सू ८अ।

**अतितीव्रा**। स्त्री। गण्डदूर्वायाम्। रा नि व ८।

**अतितीक्ष्ण**। त्रि। मरिचादौ। पु। शोभाञ्जन वृक्षे। क्ली। अजमोदायाम्।

**अतितृप्ति**। पु। पित्तजन्यरोगविशेषे। वै निघ।

**अतितेजिनी**। स्त्री। विषण्याम्। তেজবল, ঢেঙ্গবতী। मद व १।

**अतिदग्धम्**। क्ली। अग्निदग्धरोगे। अतिदग्ध मांसावलम्बनं गात्रविश्लेष शिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्र, ज्वरदाहपिपासामूर्च्छाशोपद्रवा भवन्ति। व्रणश्चास्य चिरेण रोहति रूढश्च विवर्णो भवति। प्र प्रस्याग्निप्रतपन कार्य्यमुष्ण तथौषधम्। इत्यादि। सु सू १२अ।

**अतिदाह**। पु। अतिसन्तापे। वै निघ।

**अतिदीप्ति**। स्त्री। श्वेतसुरसायाम्। শ্বেত বাবুই তুলসী। वै निघ।

**अतिदीप्य (क)**। पु। रक्तचित्रके। रा नि व६।

**अतिदुष्ट**। पु। गोक्षुरके। वै निघ।

**अतिदेश**। पु। प्रकृतस्थानागतेन साधनम्। यथा—अनेनास्य वायुर्ऊर्द्ध प्रतिष्ठते तेनोदावर्त्तमासादिति। सु उ ६५ अ।

**अतिनिद्रता**। स्त्री। कफवृद्धिजन्यरोगविशेषे। सु म १५ अ।

**अतिपक्वमासम्**। क्ली। पाकाधिकसिद्धमांसे। गुणा—अतिपक्वन्तु यन्मास विरस वातल गुरु। वै निघ।

**अतिपक्वक्षीरम्**। क्ली। अतिगतघनदुग्धे। घनावृत दुग्ध। इदम् अतिगुरु। "भवेद्गरीयोऽति शृतम्। वा टी हेमाद्री चारुपाणि।

**अतिपत्र (क)**। पु। शाकतरौ। শেগুন গাছ। रा नि व ९। उन्माद चि महापैशाचघृते। हस्तिकन्दनाममहाकन्दे। रा नि व ७।

**अतिपत्रा**। स्त्री। (Sida cordifolia) बलायाम्। বেড়লা। हि खरेन्टी।

**अतिपातितम्**। क्ली। अस्थिभङ्गविशेषे। तेनास्थि नि शेषेण भिन्न भवति। स नि १५ अ।

**अतिपिच्छ**। पु। श्वेतरक्तालुके। वै निघ।

**अतिपिच्छला**। स्त्री। कुमार्य्याम। घृत-कुमारी। वै निघ

**अतिपिञ्जर** } पु। दुष्टव्रणे। च।
**अतिपोडक** }

**अतिबला**। स्त्री। (Sida rhombifolia) पीतबलायाम्। পীতবর্ণ বেড়েলা, পীত বাকুনি। हि कंकहिया। म पिटारिणी। तत्पर्य्याया — बलिका, वाट्या, विकङ्कता, वाट्यपुष्पिका, घण्टा

शीता, शीतपुष्पा, भूरिबला, वृष्यगन्धिका। गुणा —तिक्ता कटु वातघ्नी क्रमिघ्नी दाहतृष्णाविष च्छर्द्दिक्लेदोपशमनी च। रा नि व ४। शीतला मधुरा बलकान्तिकृत्। स्निग्धा ग्राहिणी वातरक्तपित्तक्षतघ्नी च। मद व १। हरेन्मूत्रानिला कृच्छ्र भवेद्वातानुलोमनी। हन्यादतिबला मेह पयसा सितया समम्॥ भा पू १भ गु व। सु सू ३८ सशमने। च सू ४अ। सु सू क्रमिचि। चि क्र क वली स्त्रीरोगचि। वा उ ४० अ। श्वेतवाट्यालक। गोरक्षतण्डुलाया। গোরক্ষ চাকুলিয়া, বালিয়া खिरेटी। विष्णु नारायणतैले। शतावरीयो मा को। चि क्र क वल्ली केतक्यादितैले।

**अतिबलिका** / **अतिबली** — स्त्री। वाट्यालके। रा नि व ४।

**अतिभारगः**। पु। अश्वतरे। খচ্চর इति लोके।

**अतिभी**। स्त्री। वज्रप्रभायां। विश्वः।

**अतिभोजनम्**। क्ली। अतिमात्रया भोजने। गुणा—आलस्यगौरवाटोपसादाश्च कुरुतेऽधिकम्। म सू ४६अ हताद्यव।

**अतिमङ्गल्यः**। पु। (Aegle or cratoeva marmeloes) बिल्ववृक्षे। रा नि व ११।

**अतिमञ्जुला**। स्त्री। कण्टकसेवतीवृक्षे। हिसेवती गुलाब। গোলাপ, বড় গোলাপ। भा पु १भ पु व। मद व ३। See सेवती।

**अतिमण्डल**। पु। सुधामनवृक्षे। वै निघ।

**अतिमन्थ (क)**। पुं। अग्निमन्थवृक्षे।

**अतिमुक्त (कः)** / **अतिमुक्तका** — पु। Mountain ebony तिनिशवृक्षे। अम। तिन्दुकवृक्ष। টেঁদ, গাব। तत्पर्याया—पुण्ड्रक, मल्लिनी, भ्रमरानन्दा, कामुककान्ता। नवमल्लिकाभेदे। म ते मायविर। वासन्ती। (Goertnera rocemosa) माधवीलतायाम्। प सु। 'अतिमुक्तकमिन्दन्ति वासन्तीं माधवीलताम्।' हला ५४। अतिमुक्तमु नि सङ्के वासन्त्यां तिनिशेऽपि च। मे तचतुष्क। या उ १३अ। "तथाति मुक्तकैरग्।" भा पु १भ। गुणा—कषाय शीतल श्रमघ्न पित्तदाहज्वरोन्मादहिक्काच्छर्दिघ्नश्च। रा नि व १०। See तिनिश। माधवा मधुरा शीता लघ्वी दोषत्रयापहा। भा पू १भ पु व (क) हरिमन्थे। हारा।

**अतिमुक्ततैलम्**। क्ली। अतिमुक्तकबीजतैले गुणा—वातपित्तघ्न केश्य श्लेष्मल गुरु शीतलश्च वा टी हेमा।

**अतिमुक्ता**। स्त्री। अतिमुक्तकायाम्। रा नि व १०।

**अतिमोदनी(दिनी)**। स्त्री। नवमल्लिकायां रा. नि व १०।

**अतिमोदा**। स्त्री। (Jasmimum arboreum) नवमल्लिकायां। সেঁউতি। रा नि व १० गणिकारीवृक्षे स्वनाख्या कौंकणदेशे ख्याते गणिरि। रा नि व १०।

**अतियवः**। पु। निःशूकयवे। कृष्णवर्णे यवे मद व १०। निःशूकोऽतियव स्मृत। यवादतियवं न्यून। भा पू १भ धान्यव।

**अतियुक्त**। त्रि। वारवार प्रयुक्ते। भा म ख १भ अ सा। "स्नेहाद्यैरतियुक्तैः।"

**अतियोगः**। पु। अतिशयितप्रयोगे। वा सू १७ अ।

**अतिरक्त**। पु। हिङ्गुले। वै निघ।

**अतिरक्ता**। स्त्री। जवापुष्पवृक्षे। वै निघ।

**अतिरसः**। पु। पौण्ड्रके। श मा।

**अतिरसा**। स्त्री। मूर्व्वायाम्। मूवर्गा। वै निघ २भ अप चि पल्लवाद्यतैले। रास्नायाम्। मद व १। यष्टीयष्टिमधुनि। रा नि व ६। शतमूल्याम्। च सू ४।

**अतिरुहा**। स्त्री। मांसरोहिण्याम्। रा नि व १२। भा पू १भ। मद व १।

**अतिरूक्ष**। त्रि। स्नेहशून्ये, कङ्गुकोद्रवाद्रौ।

**अतिरेचक**। पु। काकोल्याम्। केंकणा। वै निघ।

**अतिरोगः**। पु। क्षयरोगे। राजयक्ष्मणि। रा नि व २०।

**अतिरोमशः**। पु। वनछागे। हारा।

**अतिरोमशा**। स्त्री। नीलबुह्नायाम्। छागल देंटे। प सु।

**अतिलङ्घितम्**। क्ली। अत्युपवासे। राजयक्ष्मे

—पञ्चभेदी ऽङ्गमर्दश्च कास शोषी सुखस्य च। चुग्मशाग्नेऽरुचिस्तृषा दौर्ब्बल्य शोतवेपथो। मनस सम्भ्रमो ऽभीच्च मूढ वात समो हृदि। देहाग्निबल-हानिश्च लङ्घनेऽतिकृते भवेत्॥ च द।

**अतिलम्बी**। स्त्री। शताह्वायाम्। भा पू १म।

**अतिलोहितगन्ध**। पु। दमनकवृत्ते। दना। प मु।

**अतिवर्त्तुल**। पु।( Sida rhombifolia ) कलायविशेषे। मटर बाटुला, कडाई। र मा।

**अतिविदाही**। त्रि। राजसर्षपादी।

**अतिविद्धा**। स्त्री। दुष्टव्यधनविशेषे। प्रमाणा तिरिक्तविद्धायाम्। सु शा ८।

**अतिविष (षा)**। स्त्री। (Aconitum heterophyllum ) स्वनामख्यातोपविषजातीयपण्य द्रव्ये। आतइच्। हि आतइस। अतिविषा सन्वत भाषा। ते अतिवसचेट्टु। तत्पर्य्याया,—शुष वल्लभा (भा)। शृङ्गिका (शब्दर) विश्वा विषा प्रति विषा उपविषा अरुणा शृङ्गी महौषध (अ) काश्मीरा श्वेता (र) प्रविषा (के) श्वेतकन्दा भङ्गुरा भङ्गुरा विरूपा श्यामकन्दा विषरूपा वीरा माद्री श्वेतवचा अमृता। अतिविषा शुक्लकृष्णारुण भेदात् त्रिधा रसवीर्य्यविपाकेषु तुल्या। गुणा— कटुका तिक्ता कफपित्तज्वरघ्नी आमातीसारकासघ्नी विषघ्नी छर्दिघ्नी च। रा नि व ६। वा सू २५ग्र वचादि। नागरातिविषाभया। च द ज्व चि पिप्पल्यादघृते। मदनपालस्तु श्यामकन्दोपविषयो श्चतुर्भदानाह श्वेत रक्त कृष्ण पीतलात् ते तासा यथापूर्व श्रेष्ठा गुणोत्तमा सन्वदोषहरा शोथघ्नी श्लैष्मिक रोगघ्नी रसायनी च। मद व १। अति विषाकटुकी प्रभृतीमाऽमागमयजनेन शुद्धिज्ञातव्या। सा कौ।

**अतिवीज**। पु। वव्वूलकवृत्ते। बाव्लागाछ। वै निघ।

**अतिवृहत्फल**। पु। पनसवृत्ते। कँटाल गाछ। भा पू १म।

**अतिव्यथा**। स्त्री। अतिशयितयन्त्रणायाम्। पीडायाम्। भा।

**अतिव्याय[illegible]**। पु। व्यायामाधिक्ये। अधिक दृष्टि कर[illegible] अतिव्यायामी न घ्न। अति व्यायामत कासी ज्वरश्छर्दि श्रम क्लम। तृष्णा चय प्रतामक रक्तपित्तञ्च जायते॥ भा पू १म।

**अतिशष्कुली**। स्त्री। तिलकृतरोटिकायाम्। गुणा—रुच्या स्त्र स्पित्तासघ्नी गुरु विष्टम्भिनी न चक्षुष्या च। भा पू कृतान्नव।

**अतिशारिवा**। स्त्री। अनन्तायाम्। अनन्त-मूल। र मा।

**अतिशूक**। पु। यवे। यव। प मु।

**अतिशूकज**। पु। गोधूमे। गम। Wheat

**अतिशृतक्षीरम्**। क्ली। अतिक्वथिते दुग्धे कवलभीश्यवत सञ्जाते। डेला क्षीर। तद्गुरु तरम्। स्यान्निजल शृत तद्विचितुरष्टाशशेषितम्। तथा श्रुततम सार गुरु वल्यतम पथ॥ वा सू ५ग्र अरु टी खरनाद।

**अतिशोष**। पु। चयरोगे। See चय।

**अतिसथ्या**। स्त्री। वल्लीयष्टिमधुनि।

**अतिसर्जनम्**। क्ली। वेधे। मे नपचक।

**अतिसान्द्र**। पु। राजमाष। बांआंशी, बरबटी। रवा।

**अतिसाम्या**। स्त्री। कृष्णमुखगुञ्जावल्ल्याम्। लतायष्टिमधुनि।

**अतिसार**। पु। पर्पटके। मद व १। हि पापडा। उदरामयरोगविशेषे। See अतीसार।

**अतिसारकी**। त्रि। अतिसाररोगिणि।

**अतिसारघ्न**। पु। चेत्रपर्पटके। क्षेत्पापड़ा। वै निघ।

**अतिसारघ्नी**। स्त्री। अतिविषायाम्। वै निघ।

**अतिसारभेषजम्**। क्ली। लोघ्रे। तद्रोगनिवारके औषधे।

**अतिसारवारणरस**। पु। अतिसारे रस। "रस क्षतकपूर्द कुमेन्द्रयवसंयुतम्। मञ्जाति सारशमन स्वात्तसीधीरभावितम्॥" भै। अत्र क्षतकपूर पक्वकपूरम्। स्वात्तसीधीरं अहि फेनम्। र मा स।

**अतिसारम्या**। स्त्री। राधायाम्। व निघ।

**अतिसूक्ष्म**। त्रि। अतिशयसूक्ष्मे।

**अतिसेवनम्**। क्ली। अधिकमात्रया सेवने।

**अतिसौम्या**। स्त्री। यष्टीयष्टिमधुक। रा नि व ६।

**अतिसौरभः** । पु । आम्रवृक्षे । भा पू फ व ।

**अतिस्कन्धा** । स्त्री । रक्तकुलत्थके । वै निघ ।

**अतिस्थूलवर्त्मा** । पु । दुष्टव्रणविशेषे । च ।

**अतिस्निग्धः** । त्रि । अत्यन्तस्निग्धे । तस्य लक्षणम् —कफप्रसेक शिरसो गुरुतेन्द्रियविभ्रम । लक्षण तदतिस्निग्धे रूक्षं तत्र प्रदापयेत् ॥ वै निघ । नस्यचि ।

**अतिस्रवा** । स्त्री । मयूरवल्ल्याम् । मूर्वा । वै निघ ।

**अतिक्षिप्तसन्धिः** । पु । सन्धेरतिशयविश्लेषे । सन्धिच्युत सदुर्वैरवस्थान । तेन सन्ध्यस्थ्नोरुभयोरेवा तिक्रान्तता वेदना च । सु नि १५ श । See भग्न ।

**अतीसारः** । पु । Diarrhœa or dysentry
अतीव सरति, प्रकृतिमतिक्रम्य गुदमार्गेण सरतीति अतीसार । स्वनामख्यातोदरामयरोगे, बहुद्रवमल निःसरणरोगे । तस्य निदान गुरुभोजनादिकम् । तस्य निरुक्ति —रसादिद्रवधातूनामग्नि मन्दीकृत्य मलेन सह मिश्रितानां वायुना चाध प्रणुन्नानां अतिनिःसरणादतीसार उच्यते । तस्य च पूर्व्वरूप —हृदयनाभिगुह्योदरादिस्थानेषु सूचीविद्धवद्वेदना, कायावसादवायुमलविबन्धतोदोदराध्मानापरिपाका-दिकञ्च । स षड्विध वातपित्तकफसन्निपातशोकामपरि पाकजभेदाद्भवति । तत्र वातजे मलस्यारुणता फेनिलता रूक्षता पक्वता तथा मुहुः सशब्दवेदनमल्पशो मुहुर्निःसरणञ्च लक्षणं भवति । पित्तजे च मलस्य हरितपीतलोहितवर्णता तृष्णामूर्च्छादाहा मल द्वारे ज्वाला पाकश्च लक्षणम् , कफजे च शुक्लगाढ सकफामगन्धिशीतलमला निःसरन्ति, रोगी मरो माञ्चश्च भवति । सान्निपातिके च वातजादि लक्षणानि दृश्यन्ते, प्रायशश्चात्र मला शूकरवसा मांस धावनवारिवद्भवन्ति । शोकजे च गुञ्जाफलसदृश शोणित केवल मलमिश्रितं मलरहित वा सरति, तच्च मलसहित चेत् दुर्गन्ध मलरहित चन्निर्गन्ध भवति । आमातिसारे च नानावर्णं वारंवारञ्चाति माल्यमल, तथा तत्रोदरशूलमतीव जायते । अतीसारस्य चासाध्यलक्षण—मलस्य कृष्णस्निग्धता, यकृत्खण्डवत् कृष्णरक्तवर्णता, घृततैलवसामज्ज दधिदुग्धमांसधावनवारिसदृशता, कृष्णनीलवर्णता, इषत्कृष्णरूक्षचिक्कणता, शिखिपुच्छवत् विविधवर्ण-चन्द्रकयुक्तता, घनशवगन्धिमस्तिष्काभता, सुगन्ध-पूतिगन्धबहुलता च, तथा तृष्णादाहान्धकारदर्शन, हिक्काश्वासपार्श्वशूलेन्द्रियचित्तमोहा गुह्याभ्यन्तर वलिपाक प्रलापश्च, तथा गुदसंवरणाक्षमता बल मांसहीनता अतीवोदराध्मान शोथ, मलद्वारस्य पक्वता सर्व्वेऽपि गात्रस्य शीतलता उपद्रवाश्च । चिकित्सा स्वस्वपर्य्याये प्रदर्शनीया । अतीसारे नाना विधद्रवधातुनिःसरणम् अत्र केवलमेव कफनिःसरणमित्यतिसारप्रवाहिकयोर्भेद । इति माधवकार सङ्ग्रहादतीसारसङ्ग्रह । शार्ङ्गधरस्तु भयजमुक्त्वा सप्तविधमाह । तस्य सम्प्राप्ति सशम्यापां धातुरन्न कृशानु वर्चोमिश्रो मारुतेन प्रणुन्न । वृद्धोऽतीवाध सरत्येव यस्माद्व्याधि घोर त त्वतीसारमाहुः ॥ हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधा । विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुर सराणि ॥ तस्य निदानम्—गुर्व्वतिस्निग्धरूक्षोष्ण द्रवस्थूलातिशीतलै । विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनै ॥ स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषा द्भयात् । शोकाद्दुष्टाम्बुमद्यातिपानात् सात्म्यर्त्तुपर्य्ययात् ॥ जलाभिरमणैर्वेगविघातै क्रिमिदोषत । नृणां भवत्यतीसारो लक्षण तस्य वक्ष्यते ॥ सु उ ४०अ । स च वातपित्तकफसन्निपातशोकामजभेदात् षड्विध इति । अथातिसार लक्षणम्—अनिलेनाथ पित्तेन श्लेष्मणा चापि वाजिन । अतीसारस्तथा चान्य सन्निपातेन जायते ॥ सङ्कोचिताङ्ग स्वानेन सकफ योऽतिसार्य्यते । अल्प तनु सशब्दञ्च पुरीष बहु वा हय ॥ तस्य वातात्मक विद्यादतीसार विचक्षण । पित्तजञ्चैव वक्ष्यामि श्लेष्मजञ्च समा सत । स्वेददाहपरीतानां लक्षयेन्मतिमान् भिषक् । मात्रेण नीलरक्तेन विस्रगन्धेन पित्तजम् ॥ मन्दा हारस्तथा वाही हृष्टरोमातिपीडित । श्याम मपिच्छिलमिश्रैर्विद्यात् श्लेष्मसमुद्भवम् ॥ सन्निपाता-त्मकञ्चैव सर्व्वेषां लक्षणैर्युतम् । त्रिरूप द्वन्द्वजं ज्ञेयमतीसार विचक्षणै । अतीसारा समुद्दिष्टा शालिहोत्रादिभि पुरा ॥ ज द ४२अ ।

**अतुल** । पु । कफे । तिलकवृक्षे । श च ।

**अतुष्टि** । स्त्री । तृतिशून्यत्वे । अपरितोषे ।

**अतेजा** । स्त्री । छायायाम् । रा नि व २१ ।

**अत्क** । पु । अङ्गे । उणा ।

**अत्न.** । पु । सूर्य्ये । वै निघ ।

**अत्य** । पु । अश्वे ।

**अत्यग्नि.** । पु । क्षुधाधिक्ये अग्निमा न्द्ये । भस्मके । विज र ।

**अत्यन्तपद्मा** । स्त्री । कमलिन्याम् । वै निघ ।

**अत्यन्तशोणित** । त्रि । अतिरक्ते । क्ली । सुवर्णगैरिके । वै निघ ।

**अत्यन्तसुकुमार** । पु । (Panicum Italicum) कन्दलीवृक्षे । कङ्ग्वाम् । रा नि व १६ ।

**अत्यम्बुपानम्** । क्ली । मात्रातिरिक्तवारिपाने । तद्दोषो यथा—अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्द्धनार्थं मुहुर्मुहुर्वारि पिवेदभूरि ॥ इति जलपानलक्षणम् । रा नि व १४ ।

**अत्यम्ल** । पु, क्ली । (Spondias mangifera) वृक्षाद्वे । टেঁতুল । रा नि व ८ । See तिन्तिडी । वनमातुलुङ्गे । मातुलुङ्गे । त्रि अत्यन्ताम्लरसयुक्ते ।

**अत्यम्ला** । स्त्री । मातुलुङ्गवृक्षे । वनबीजपूरे । मधुरलेबू, मधुरोवा वा मधुलेबू । रा नि व ११ । महाशैलेन्द्री । रवा तिन्तिड्याम् । श र ।

**अत्यम्लपर्णी** । स्त्री । वज्रिगूरण लताविशेषे । कडवडवेलि । हिंगोलि । रा नि व ८ । तत्पर्य्यायः,—तीक्ष्णा, कण्डूरा, वज्रिगूरण, करवडवल्ली, वनस्था, अरण्यवासिनी । अम्लवल्ल्याम् । आमरुल । गुणा—अत्यम्लपर्णी तीक्ष्णाम्ला शोथगुल्मविनाशिनी । वातश्लेष्मपनी रुच्या गुल्मघ्नी चामपाचनी ॥ रा नि व ३ । माता ३ माषा ।

**अत्यय** । पु । नाशे, दोषे, कृच्छ्रे । रवा अने व । म यतिक्रमे ।

**अत्यर्क** । पु । शुक्लार्कवृक्षे । श्वेत आकन्द गाछ । रा नि व १० ।

**अत्यानन्दा** । स्त्री । कफजन्ययोनिरोगविशेषे, येन स्त्री ग्राम्यधर्मेण सन्तोषं न लभते । अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण विन्दति । भा म ख ४म योनिरोगचि ।

**अत्यारक्ता** । स्त्री । जवापुष्पवृक्षे ।

**अत्याम्ल** । पु । रक्तचित्रकवृक्षे । रा ।

**अत्युग्रम्** । क्ली । हिङ्गुनि । मद व २ ।

**अत्युग्रगन्धा** । स्त्री । कृष्णजीरकाम् । कृष्णापराजितायाम् । यवानीदायाम् । मद व २ ।

**अत्युदीर्णा** । स्त्री । दुष्टव्रणविशेषे । यत्र तीव्रमहानुबन्धेन वेधो भवति । सु शा ८४ ।

**अत्यूह** । पु । कालकण्ठपक्षिणि । दात्यूहे । मे हविक ।

**अत्यूहा** । स्त्री । नीलशेफालिकायाम् । नीलिकायाम् । मे हविक ।

**अत्रि** । पु । ऋषिविशेषे ।

**अत्रिदृग्जात** । पु । चन्द्रे । हे ।

**अदनम्** । क्ली । भक्षणे ।

**अदन्त** । त्रि । दन्तहीने ।

**अदल** । पु । हिज्जलवृक्षे । श च । घृते ।

**अदला** । स्त्री । घृतकुमार्य्याम् । रा नि ।

**अदश्र** । पु । महामूलके । बड मूला ।

**अदारिका** । स्त्री । वृश्चिकाली, वृश्चीतपत्रे । ওলটে কম্বল । वै निघ ।

**अदिति** । स्त्री । गवि । के ।

**अदृक्** । त्रि । अन्धे ।

**अदृग्** । पु । सूर्ये । उ ।

**अदृढ** । त्रि । अस्थिरे । क्ली । तृणविशेषे । वै निघ ।

**अद्भुतसार** । पु । खदिरसारे । रा नि व ८ ।

**अद्यम्** । क्ली । धान्ये ।

**अद्यतन** । त्रि । अद्यभवे । আজিকার ।

**अद्यनि** । पु । अग्नौ । उ ।

**अद्यश्विना** / **अद्यश्वीना** — स्त्री । आसन्नप्रसवायां गवि ।

**अद्रक** । पु । महानिम्बवृक्षे । वै निघ ।

**अद्रि** । पु । पर्व्वते । शैलवृक्षे । मे दद्रिके । परिमाणविशेषे ।

**अद्रिकर्णी** । स्त्री । अपराजितायाम् । श्वेतापराजितायाम् । रा नि व २३ ।

**अद्रिका** । स्त्री । धान्यके । धने । महानिम्बे । भा पू १ग व ।

**अद्रिज** । त्रि । गिरिजाते । क्ली । शिलाजतुनि । रमा रवा । तुम्बुरुफले । रा नि व ११ । गैरिके ।

**अद्रिजतु** । क्ली । शिलाजतुनि । हेमा । भा ।

**अद्रिजा** । स्त्री । महत्सिंहपर्णीवृक्षे । रा नि व ६ ।

**अनिर्वाण** । पु। कफे। वे निघ ।

**अनिल** । पु। वायौ। शाकतरौ। শেগুন গাছ। रा नि व २३ ।

**अनिलकपित्थक.** । पु। स्थूलाम्रातके। वे निघ ।

**अनिलकारक** । पु। काञ्जिकभेदे। वै निघ ।

**अनिलघ्न (क')** । पु।(Terminalia belerica) बिभीतकवृक्षे। रा नि व ११।

**अनिलज्वर'** । पु। वातिकज्वरे। स च साम निरामभेदात् द्विविध । च द । See ज्वर ।

**अनिलनिर्यास'** । पु। पिशालवृक्षे। पिया-शाल। स विवना। वे निघ ।

**अनिलपर्य्यय** । पु। वायुरोगे।

**अनिलभुक्** । पु। सर्पे। वे निघ ।

**अनिलरस** । पु। रसोऽयं पाण्डुरोगे हित । रस र ।

**अनिलरिपु** । पु। एरण्डवृक्षे। वे निघ २भ सन्धि ज्व चि वाताद्दि ।

**अनिलहरम्** । क्ली। कृष्णागुरुणि। वै निघ ।

**अनिला** । स्त्री। नद्याम्। खटिकायाम्। फुल-খড়ি। र ना ।

**अनीलाजीर्णम्** । क्ली। वाताजीर्णे। वा गृ ८अ ।

**अनिलाटिका** । स्त्री। रक्तपुनर्नवायाम।

**अनिलान्तक'** । पु। इङ्गुदीवृक्षे। জিয়াপুতী। हिङ्गोट्। रा नि व ८।

**अनिलापहा** । पु। रक्तकुलत्थके। লালকুর্ত্তি। वै निघ ।

**अनिलामय** । पु। वायुरोग। वातव्याधौ।

**अनिलारिरस** । पु। वातव्याध्यधिकारे रस । 'रसेन गन्ध द्विगुणे विमर्द्य वातारिनिर्गुण्डिरसैर्दिनैक। निवेशयेत्ताम्रमये पुटे तत् सन्ध्य मदावेष्ट्य च बालुकाब्धौ। यत्ने पुटे गोमयचूर्णवह्नौ स्वभावशीत तु समुद्धरेत्तम् ॥ निर्गुण्डिकावासकराग्नितोये सचूर्ण्य यत्नेन विभावयेत्तम् ॥" अस्य वातारिरसे एरण्डमूल रसे। अग्नि चित्रक। तोये क्वाथे। र मा स

**अनिलोचित** । पु। नीलमाषके। वै निघ ।

**अनिष्टा (ष्ठा)** । स्त्री। नागबला। रा नि ।

**अनि.सारा** । स्त्री। कदलीवृक्षे। কলাগাছ। रा नि व ११। वै निघ ।

**अनिक्षु** । पु। (Chaccharum spontaneus) इक्षुविशेषे। খাগড়া। र मा। आमाक्षौ। रत्ना

**अनीकस्थ'** । त्रि। हस्तिशिक्षाविचक्षणे। मेधचतुष्क।

**अनीली** । स्त्री। काशतृणे। र मा ।

**अनुक'** । पु। कामुके। अ।

**अनुकदली** । स्त्री। कदलीविशेषे। स लोमडीकेल।

**अनुकर्णम्** । क्ली। कर्णसमीपे। वा शा ४अ ।

**अनुकर्षणम्** । क्ली। पानपात्रे। हारा ।

**अनुकल्प** । पु। An alternative अभावे तद्गुणद्रव्यान्तरग्रहणे।

**अनुकूलका** । स्त्री। लघुदन्त्याम्। वै निघ ।

**अनुकूला** । स्त्री। ह्रस्वदन्तीवृक्षे। रा नि व६।

**अनुकूलिनी** । स्त्री। क्षुद्रदन्त्याम्।

**अनुग** । पु। परिचारके। रत्ना ।

**अनुच्छ्वास** । पु। श्वासरोगे।

**अनुजम्** । स्त्री। प्रपौण्डरीक नाम गन्धद्रव्यविशेषे पुণ্ডরিয়া। रा नि व १२।

**अनुजा** । स्त्री। त्रायमाणलतायाम। গোঁওয়ালিয়া লতা। रा नि व ५। বলা-ডুমুর। भा पू १भ गु व ।

**अनुतक्रम्** । क्ली। तक्रानुपाने। जग्ध्वा तक्र पिबेदनु। मि यो पाण्डु चि हन्द ।

**अनुतर्ष** । पु। तृष्णा। सुरापानपात्रे। मेप मेधचतुष्क।

**अनुत्क्लेश.** । पु। उत्क्लेशाभावे। च स विमची।

**अनुत्थितविडा (शिरा)** । स्त्री। दुःस्थानबन्धनात् वेपमानाया यस्या शिराया शोणित सम्यक्ष्णी भवति। सु शा ८अ ।

**अनुपजा:** । त्रि। अनुपदेशजाते। ते च कुक्कुटबर्हीपरनमन्यप्लवपादिनो भवन्ति। See अनूपवर्ग ।

**अनुपदीना** । स्त्री। उपनहि। জুতা, খড়ম ইত্যাদি। ह्ला ।

**अनुपशय** । पु । What increases the disease उपशयविपरीते व्याध्यसात्म्यौषधान्न विहारादौ । यथा—हेतुव्याधिविपर्य्यस्तविपर्य्यस्तार्थ कारिणा । औषधान्नविहाराणामुपयोग सुखावहं । विद्यादुपशय व्याधे स हि सात्म्यमिति स्मृत ॥ विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञित । मा नि पञ्चनिदाने ।

**अनुपानम्** । क्ली । औषधाद्यपेयविशेषे । अनुपान । तत्र औषधपानानन्तर विलम्ब्य प्रयोज्य, रात्रौ पुन पाचनमेव व्यवस्थेयम् । विलम्ब्य च क्रामणमेतदीरित रात्रौ पुन पाचनमेतदूचिरे ।' रा नि व २० । वातेऽनुपान स्निग्धोष्णं श्लेष्मणि रूक्षोष्ण, पित्ते स्निग्ध, श्लेष्मपाने उष्णोदकमित्यादि । मद व १३ । "चूर्णावलेहगुडिकाकल्कानामनुपानकं । वातपित्तकफोद्रेके त्रिद्वेकपलमाहरेत '। शार्ङ्ग म ख ६ अ ।

**अनुपालु** । पु । पानीयालुके । वन आलू । रा नि व ७ ।

**अनुपुष्प** । पु । (Saccharum sari) शरतृणे । श च । सङ्कतृणे । वेतसे ।

**अनुबन्धी** । स्त्री । तृष्णाया । हिक्कायां । मे ।

**अनुभास** । पु । काकविशेषे । वै निघ ।

**अनुभूति** । स्त्री । विह्वतायाम । ঢেউড়ী । हि निसोत्तर । See विह्नत् ।

**अनुमतम्** । क्ली । "परमतमप्रतिषिद्धम् । यथान्यो ब्रूयात् सप्तरसा" इति सु उ ६५ अ ।

**अनुयव** । पु । यवाद्धूनोऽनुयव । वा । नि शूक यवे । क्षेमा । गुणा—इष्य स्थैर्य्यंकर मूत्रभेद पित्तकफघ्न पीनसश्वासकासोरुस्तम्भकण्ठरोगघ्नश्च । वा सूत्रधान्यवर्गे ।

**अनुरुहा** । स्त्री । नागरमुस्तायां । নাগরমুতা ।

**अनुरेवती** । स्त्री । चुन्दल्याम् । रा नि व ६ ।

**अनुलास** । पु । मयूरपक्षिणि । मयूर ।

**अनुलास्य** । पु । मयूरपक्षिणि ।

**अनुलेप** / **अनुलेपनम्** } पु, क्ली । चन्दनादौ । गन्धद्रव्यादिलेपने । চন্দনাদি-লেপন । गुणा — अनुलेपनन्तु तृष्णामूर्च्छादौर्गन्ध्यश्रमवातजित् । सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्धन ॥ मद व १३ । अपिच—अनुलेपनक वन्य तेज सौभाग्यदायकम् । लघ्व प्रीतिप्रद प्रोक्त तृण्मूर्च्छाश्रमनाशन । दौर्गन्ध्य वातह प्रोक्त पूर्व्वाचार्य्यैरिति स्मृतम् ॥ वै निघ । प्रीतिकर, ओजस्कर, शुक्रवर्द्धन, दौर्गन्ध्यहर, श्रमपापतन्द्राहरश्च । राज ।

**अनुलोमनम्** । क्ली । अनुलोमकरणे । मलादिधातूना यथामार्ग गमनोपाये । মলাদি ধাতুর যথাপথে গমনোপায় । यथा—कृत्वा पाक मलाना यद्भित्त्वा बन्धमधो नयेत । तच्चानुलोमन प्रोक्त यथा प्रोक्ता हरीतकी ॥ भा ।

**अनुल्ली** । स्त्री । हिक्कायाम् । तृष्णायाम । मे ।

**अनुवास** / **अनुवासन** / **अनुवासनक** } पु, क्ली सौरभ्ये । स्नेहवस्तौ । संवासने । धूपने । मे । "यः स्नेहो दीयते स स्यादनुवासननामक । तस्य मात्रा च पलद्वय तदर्द्ध वेति । भा ।

**अनुवासनवस्ति** । पु । स्नेहवस्तौ । मात्रावस्तौ । "अनुवासनभेदश्च मात्रावस्तिरुदीरित" । भा । स च तैलादिस्नेहोपकरणैः स्नेहकाथादिना वा साध्यते गोपुच्छाकारेण स्वर्णादिनिर्म्मितेन गजदन्तादिकृतेन वा नेत्रेण (পিচকারী বা নল) । नेत्रपरिमाण वयोभेदेन विविधम् । एकवर्षीयात षड्वर्षपर्य्यन्त षडङ्गुल । अष्टवर्षे अष्टाङ्गुल । षोडशवर्षे द्वादशाङ्गुल । प्रत्येकञ्च परिणाहो यथाक्रम कनिष्ठिकानामिकामध्यमाङ्गुलि परिमित । एतत्पात्र प्रत्येक यथाक्रम साड्ढाङ्गुल साड्ढद्व्यङ्गुल साड्ढत्र्यङ्गुलञ्च वस्तिमुखे सन्निवेश्यम् । वस्तिनाल प्रवेशनीयनेत्रमुखञ्च यथाक्रम काङ्कनेनमयूरपुच्छमध्यनाडीवत स्थूल भाव्यम् । येन च द्रव्याणस्थापन तत्परिमाण पर्व्वोक्तवयोऽनुरूपमेव यथाक्रम रोगिणो ह्यङ्गुलिपरिमाण चतुरङ्गुलिमितमष्टाङ्गुलिमितञ्च भाव्यम् । एवमुत्तरोत्तर वयोऽनुरूप नेत्रादिमानं वर्द्धनीयम् । द्वितीयञ्च—पञ्चविंशतेरूर्द्ध्व नेत्रन्तु द्वादशाङ्गुल मूलपरिणाहश्च अङ्गुष्ठोदरसन्निभो भाव्य । अधिनीपत्र नाडिकावदग्रभाग बदरास्थिमित वा कलायपरिमितं वा छिद्रवत्त्वं भाव्यम् । वस्तिसन्नाथञ्च नेत्रमूले कर्णिकाद्वयं (কাণি) कार्य्यम् । द्रव्यमानञ्च रोगिणो द्वादशाञ्जलि । अत्र कल्के माधुकतैल ग्राह्यम् । सु चि ३८ अ । एतत्प्रकरण सु चि ३५।३६।३७ अ द्रष्टव्य । विरेचनान्तराले दत्त जातबलाय च । भुक्तान्नायानुवास्याय वस्तिर्दीयोऽनुवासन । यथानुवासयत्यपि [illegible]

सदित शनै। भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः। उत्सृष्टानिलविण्मूत्रं योजयेत् स्नेह बस्तिना। सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः। कुञ्चितापरजङ्घस्य नेत्रं स्निग्धे गुदे न्यसेत्। बद्धा बस्तिमुखे सूत्रं वामहस्तेन धारयेत्। पीडयेद्दक्षिणेनैव मध्यवेगेन धीरधीः। जृम्भाकासक्षवादींश्च बस्तिकाले न कारयेत्॥ वं निघ बस्तिविधि। अथास्य यथा—अथानुवासनविधिस्नेहवाप्यापनस्य च। प्रवक्ष्यामि यथायोगं शास्त्रदृष्टेन वर्त्मना॥ काष्ठदण्डे रथोमिव शङ्खवज्जनलाग्निभिः। द्वादशाङ्गुलदीर्घन्तु परिणाहे षडङ्गुलम्॥ कोलास्थिमात्रच्छिद्रन्तु कुर्य्यान्नेत्रं विचक्षण। मूलादनुक्रमश्लक्ष्णमग्रतन्तु विशेषतः। त्यक्त्वाङ्गुलानि चत्वारि कर्णिकास्य कारयेत। पुटकस्य प्रवन्धाय मूले द्वे चापि कर्णिके॥ अनेनास्थापनं कुर्य्यादनुवासनमेव च। यथायोग्य भिषक् प्राज्ञ सर्व्वरोगोपशान्तये॥ अनुवासनविधि रथम्—त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा। भोजयित्वा त्र्यहं प्राज्ञो रसकञ्चेह भोजने॥ भोजित भोजनोक्तेन दिनान्ते चानुवासयेत्। निरूहदानं द्वारसपरान्ते विचक्षण॥ त्रिभिरारे प्रदातव्यो निरूह शास्त्रकोविदे। दृष्टसौख्य प्रयोक्तव्य प्रथम पुटकोविदे॥ द्वितीयं तृतीयं तौ चैव प्रकोर्त्तितौ॥ ज द १६ अ।

**अनुवासनोपगवर्ग** । पु। षड्विंशदशक नाम कषायवर्ग। यथा—रास्नासुरदारुबिल्वमदनशतपुष्पवृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योणाका इति दशेमानि॥ वृचीर श्वेतपुनर्नवा। च सू ४अ।

**अनुवासाख्य.** । पु। अनुवासने। व निघ।

**अनुवेल्लितम्** । क्ली। शास्त्रवासु व्रणबन्धनभेदे। सु सू १८अ।

**अनुशयी** । स्त्री। क्षुद्ररोगान्तर्गत पादरोग विशेषे। तल्लक्षण यथा—गम्भीरामल्पशोथाञ्च सवर्णामुपरिस्थिताम्। पादस्यानुशयीं तान्तु विद्यादन्तःप्रपाकिनीम्॥ चि—हरेदनुशयीं यश्च क्रियया श्लेष्मविद्रधेः। भा पाद रो चि।

**अनुशस्त्रम्** । क्ली। त्वक्सारस्फटिककाचजलौकाग्निक्षारनखादिरूपशस्त्रेषु। तानि च शिशुभीरुप्रभृत्यर्थम्। सु सू ८अ।

**अनुष्णम्** । क्ली। उत्पले। नीलपद्मे। रा नि।

**अनुष्णवल्लिका** } स्त्री। नीलदूर्व्वायाम्। रा नि व ८।
**अनुष्णवल्ली** }

**अनुसार्य्यकम्** । क्ली। सुगन्धद्रव्यविशेषे। मे कडीला।

**अनूचान** । पुं। छन्दोवेदे साङ्गवेदाध्यायिनि।

**अनूप** । पु। मद्दिषे। मे पतिक। अनूपप्राय देशे। मे। तल्लक्षण यथा—"बहम्बुर्बहुवृक्षश्च वात श्लेष्मामयान्वितः। देशोऽनूप इति ख्यातः॥ तथा नदीपल्वलशैलान्तपुष्पोत्पलकुलैर्युतः। हंससारसकारण्डचक्रवाकादिसेवितः। सरो वराहमहिषरुरुरोहितकुलाकुल। मधूकद्रुमगुल्माढ्यो नाना शस्यफलान्वितः। अनेकशालिकेदारकदलीचुविभूषितः। अनूपदेशो ज्ञातव्यो वातश्लेष्मामयान्वित मान्"। भा। गुणा —गुरु, सान्द्र, पिच्छिल, मधुर, श्लेष्मल, स्निग्ध, प्रमेहगलगण्डश्लीपदकृद्ध्रिं-करय। रा नि। राजवल्लभस्तु स्निग्ध शीतल वातश्लेष्मल गुरुश्चाह।

**अनूपजम्** । क्ली। आर्द्रके। रा नि व ६। वि। अनूपदेशोत्पन्नद्रव्यमात्रे। पुं। वृक्षविशेषे। আদা বগ গাছ। वै निघ।

**अनूपदेश** । पु। अनूपलक्षणयुक्तप्रदेशे। See अनूप।

**अनूपमासम्** । क्ली। अनूपदेशस्थजन्तुमांसे। See आनूपमासम्।

**अनूष्णम्** । क्ली। उत्पले। শুন্দিফুল, শালা। रा नि व १०।

**अनृजु** । त्रि। शठे। असरले। पु। तगरपुष्पवृक्षे।

**अनेकदिग्वायु** । प। नानादिग्भवविसङ्कुलवाते। এলো মেলো বাতাস।

**अनेकप.** । पु। गजे। হাতী। मद व ११।

**अनेकान्त** । पु। क्वचित्तथा क्वचिदन्यथेति य म। सु उ ६५अ।

**अनेडमूक** । त्रि। वाक्श्रुतिरहिते। मे। अन्धे।

**अनोकह.** । पु। वृक्षे। গাছ।

**अन्तःकाण्डशल्यावलोकिनी** । स्त्री। नाडीयन्त्रविशेषे। सा च दशाङ्गुला भवति। अत्रि।

**अन्तःकरणम्** । क्ली। अन्तरिन्द्रिये, मनसि।

**अन्त.कुटिलः** । पु। शङ्खे। শাঁক।

**अन्त.कोटरपुष्पी (ष्पिका)** । स्त्री। नील वुह्नायाम्। छागलवेँटे। प मु। रत्ना।

**अन्तःपदवी** । स्त्री । सुषुम्नाख्यनाडिकायाम् ।

**अन्तःसत्त्वा** । स्त्री । भल्लातकवृक्षे । गर्भिण्याम् । श च ।

**अन्तक** । पु । काचमारवृक्षे । वङ्गदेशे कालकाश्चन । भा गु व । यमे । सन्निपातज्वरविशेषे । तल्लक्षणं— यथा—दाहं करोति परितापनमातनोति, मोहं ददाति विदधाति शिरःप्रकम्पम् । हिक्कां करोति कसनञ्च समातनोति, जानीहि तं विबुधवर्जित मन्तकाख्यम् । भा म १भ ।

**अन्तरम्** । क्ली । अवकाशे । छिद्रे । मध्ये । मे दिनिः ।

**अन्तरापत्या** । स्त्री । गर्भिण्याम् ।

**अन्तरायाम** । पु । आक्षेपकभेदे । लक्षणं यथा —अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः । स्नायु प्रतानमनिलो यदा क्षिपति वेगवान् ॥ विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् । अभ्यन्तरे धनुरिव यदा नमति मानवः । तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली ॥ भा । मा नि ।

**अन्तरि(री)क्षम्** । क्ली । आकाशे । रा नि व १२ ।

**अन्तरिक्षजलम्** / **अन्तरीक्षजलम्** । क्ली । आकाशजले । वृष्टिर जले । See गगनाम्बु ।

**अन्तरुहा** । स्त्री । श्वेतदूर्वायाम् ।

**अन्तर्जठरम्** । क्ली । कोष्ठे । कुक्षिमध्ये । अम ।

**अन्तर्दधनम्** । क्ली । सुराबीजे । श च ।

**अन्तर्दाह** । पु । शरीराभ्यन्तरदाहे । गात्रेर ভিতরে জ্বালা । कोष्ठसन्तापे । रा नि व २० । सन्निपातज्वरविशेषे । लक्षणं यथा—अन्तर्दाहः शैत्यं बहिः श्वयथुररतिरपि श्वासः । अङ्गमपि दग्धकल्पं सोऽन्तर्दाहादितः कथितः ॥ भा म १भ ।

**अन्तर्धूम** । त्रि । मृन्मुखरुद्धगडिकाभ्यन्तरे अग्नि दग्धे । च द ग्रहणी चि चित्रकचारे ।

**अन्तर्मल** । पु । मलान्तवृक्षे । कश्चिदत्ति ।

**अन्तर्महानाद** । पु । शङ्खे ।

**अन्तर्मुखम्** । क्ली । व्रणविस्रावणास्त्रविशेषे । लक्षणं यथा—तद्वदन्तर्मुखं तस्य मध्यमध्यर्द्धमङ्गुलम् । अर्द्धचन्द्राननं चैतत् तथाध्यर्द्धाङ्गुलं फलम् ॥ कश्चिदत्ति ।

**अन्तर्मुखी** । स्त्री । स्त्रीयोनिरोगविशेषे । लक्षणं—व्यवायमतितृप्ताया भजन्त्यास्त्वन्न पीडितः । वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः ॥ वक्रयत्याननं योन्याः सास्थिमांसानिलार्त्तिभिः । भृशार्त्तिर्मैथुनाशक्ता योनिरन्तर्मुखी मता ॥ च चि ।

**अन्तर्वत्नी** । स्त्री । गर्भिण्याम् । अम ।

**अन्तर्वमि** । स्त्री । अपरिपाके । त्रिका ।

**अन्तर्विद्रधि** । पु । जठराभ्यन्तरस्थविद्रधिरोगे । लक्षणं यथा—पृथक् सम्भूय वा दोषाः कुपिता गुल्म रूपिणम् । वल्मीकवत् समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ॥ गुदे बस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा । वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ । एषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः ॥ भा ।

**अन्तर्वृद्धि** । पु । अन्त्रवृद्धिरोगे ॥ See अन्त्र वृद्धि ।

**अन्तर्वेध** । पु । मर्मवेधे । मर्मपीडायाम् ।

**अन्तशय्या** । स्त्री । मरणे । मे ।

**अन्तःस्नेहफला** । स्त्री । श्वेतकण्टकार्य्याम् ।

**अन्तावसायी** । (इन्) । पु । नापिते । मे ।

**अन्तिका** । स्त्री । सातलायाम् । চাকলতা । चुल्ल्याम् । मे दिनिः ।

**अन्त्य** । पु । मुस्तायाम् । मे ।

**अन्त्यपुष्पा** । स्त्री । धातकीवृक्षे । वै निघ ।

**अन्त्रम्** । क्ली । पुरीतति । নাড়ীভুঁড়ি । रा नि व १८ । उक्तं सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः । अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्दिशेत् ॥ सार्द्धत्रिव्यामान्यन्त्राणि पुंसां स्त्रीणा-मर्द्धव्यामहीनानि । सु शा ५अ । असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः । तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति । ततोऽस्यान्त्राणि जायन्ते गुद बस्तिश्च देहिनः ॥ इति तदुत्पत्तिः । सु शा ४अ ।

**अन्त्रकूज** । पु । वायुरोगविशेषे । नाडीशब्दे । सु नि १अ ।

**अन्त्रकूजनम्** । क्ली । अन्त्रध्वनौ । আঁতডাকা, বায়োর্ধ্বনি इति भाषा । नि ।

**अन्त्रपाचम्** । क्ली । स्थावरविषान्तर्गतलक्षार-निर्यासविशेषे । सु कल्प २अ ।

**अन्त्रवल्लिका** । स्त्री । महिषवल्ल्याम् । रा नि व ३ ।

**अन्त्रवल्ली** । स्त्री । सोमवल्लीलतायाम् ।

**अन्त्रवृद्धिः** । स्त्री । Hernia स्वनामख्यात रोगविशेषे । तल्लक्षण यथा—वातकोपिभिराहारै शीततोयावगाहनै । धारण रणभाराध्वविषमाङ्ग-प्रवर्तने ॥ चोभणै चोभितोऽन्यैश्च चुद्रान्त्रावयव यदा । पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् । कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभ श्वयथु तदा ॥ उपे च्यमाणस्य च मुष्कवृद्धिम् आध्मानरुक्स्तम्भवती स वायु । प्रपीडितोऽन्त स्वनवान् प्रयाति प्रध्मापय न्नेति पुनश्च मुक्त ॥ अन्त्रवृद्धिरसाध्योऽय वातवृद्धि समाकृति । मा नि ।

**अन्त्राद** । पु । आभ्यन्तरकृमौ । मा नि । शार्ङ्ग ७ अ । See कृमि ।

**अन्त्रालजी** (मा) } स्त्री । वातश्लेष्मजन्यक्षुद्र
**अन्त्रालजी** (सु) } रोगविशेषे । तल्लक्षण—
घनामवक्त्रा पिडकामुन्नता परिमण्डला । अन्त्रालजी मल्पपूया ता विद्या कफवातजाम् ॥ मा नि ।

**अन्त्री** । स्त्री । वृद्धदारकलतायाम् । च टी ।

**अन्त्यकम्** । क्ली । अङ्गारे । रत्ना ।

**अन्दिका** । स्त्री । चुल्ल्याम् । च टी ।

**अन्ध.** । त्रि । नेत्रहीने । क्ली । तिमिरे । मे धद्विक । (न्धस्) अन्ने । रा नि व २० । जले । भरत ।

**अन्धक** । पु । तुम्बुरी । वाँचाधने' । भा पू १भ ह व ।

**अन्धकाक** । पु । काकाकारे पक्षिणि । पाण ्दोडि । स भेदशुया । त्रिका ।

**अन्धकार** । पु । आलोकाभावे । तत्पर्याय,—ध्वान्त तमिस्र तिमिर तम (अ), भूच्छाय (रा), अन्धतमास अवतामास सन्तमस अवतमस । गुणा —भयदृष्टितेजोऽवरोधकर रोगजनकञ्च । राज ।

**अन्धकूप** । पु । नरके ।

**अन्धता** । स्त्री । चित्तरोगे । वै निघ ।

**अन्धपूतना** । स्त्री । बालकग्रहपीडाविशेषे । लक्षणम्—यो हेटि स्तनमतिसारकासहिक्काच्छर्दी भिर्ज्वरसहिताभिरर्द्यमान । दुर्वर्ण सततमध शयी ऽम्लगन्धिस्त ब्रुयुभिषजोऽन्धपूतनार्तम् ॥ चि—तिक्तद्रव्यपञ्चसिद्धजले स्नान । गरान्त्सिाधिततैलम् । पिप्पल्यादिसिद्धघृतादिकञ्च । सु उ २७।३१ अ ।

**अन्धमूषा** । स्त्री । वज्रमूषापरनामके औषध पाकार्थ यन्त्रविशेषे । तस्य लक्षण यथा—अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा । सैव च्छिद्रान्विता मध्ये गम्भीरा सारणोचिता ॥ द्वौ भागौ तुषदग्धस्य एका वल्मीकमृत्तिका । लौहकिट्टस्य भागैक श्वेत पाषाणभागिकम् । नरकेशसम किञ्चित् छागीक्षीरेण पेषयेत् ॥ यामद्वय दृढ मर्द्य तेन मूषा सुसम्पुटाम् । शोषयित्वा रस चिप्त्वा तत्कल्कै सनिरोधयेत् । वज्र मूषा समाख्याता सम्यक्पारदसाधिका । र सा स । कश्चिदति ।

**अन्धमूषिका** । स्त्री । देवताड़वृक्षे । देयाताड़ा । तृणविशेषे । श च ।

**अन्धाहि** । पु । कुँचिया मीने । कुँचेगाछ, जलटोटे । त्रिका ।

**अन्धाहुली** । स्त्री । आहुल्यनामकशिम्बीफल वनस्पतिविशेषे ।

**अन्धिका** । स्त्री । सर्षप्या । स्त्रीविशेषे । मे कत्रिक । नेत्ररोगविशेषे । श र ।

**अन्धु** । पु । कूपे । त्रिका ।

**अन्धुल** । पु । शिरीषवृक्षे । श च ।

**अन्नम्** । क्ली । शस्ये । व्रीहियवादौ खाद्यद्रव्य मात्रे । चर्व्यचोष्यलेह्यपेयभेदेन अन्न चतुर्विधम् । केऽपि च निष्पेयचर्व्यचोष्यखाद्यभेदेनाष्टधा वदन्ति। राजनिघण्टुकारोऽपि अन्नमष्टविधमाह चर्व्यादिभेदेन। व २० । भक्ते । भात । तत्पर्याय',—भक्त अन्ध भिस्सा (अटी), अद्य कसिपु जीवातु (ज), मूर (रा), जीवनक (हे), कूर आपूपिक जीवन्ति प्रसादन (शब्द र) । तत्र तण्डुलपरिमाणापेक्षया पञ्चगुणजले सिद्धम् । अन्न पञ्चगुणे साध्यम् । च द ज्व चि । प्र प्र २ख । स्विन्नतण्डुले यथा—शस्यक्षेत्रगत प्राहु सतुष धान्यमुच्यते । आम वितुषमित्युक्त स्विन्नमन्नमुदाहृतम् ॥ वशिष्ट । तथा जलदानप्रमाणतोऽन्न चतुर्विधम् । चतुर्विध भवेद्भक्त जलदानप्रमाणत । तत्र भक्त विलेपी च यवागू पेयया सह ॥ प्रयोगरत्नाकर' । अन्नगुणा —अग्निकर पथ्य तर्पण मूत्रल लघु च । तत्र अधौतमन्नमसुतधाम—शीतल गुरु रुच्य कफजनक । सुधौतमन्न उष्ण विशद गुणाकरञ्च । भृष्टतण्डुलज मन्न —रुच्य सुगन्धि कफघ्न लघु च । अतिक्लिन्न —ग्लानिकर, तण्डुलान्वित—दुर्जरम् । म म ११।१ । धान्याम्ले पाचित भक्त लघु अग्निप्रदी पक रुचिप्रदञ्च । वै निघ । दधियुक्त भक्त—

स्वादु शीतलं रुच्यं अग्निदीपनं पाचकं पुष्टिकरं वृष्यञ्च श्रमघ्नं । धानी भर्जितं—रुच्यं तृप्तिकरं दीपनमर्शोघ्नञ्च । मुद्गयूषयुक्तं—कफज्वरे, शर्करा मिश्रितं—पित्तज्वरे हितम् । लाजभक्तं—लघु शीतलं तृप्तिकरं मधुरं हृद्यं निद्राकरं रुचिकरं व्रणशोधनञ्च । यावकान्नं—गुरु स्वादु हृद्यं स्निग्धं गुल्मज्वरकण्ठरोगकासमेहघ्नञ्च । चिपिटान्नं—तर्पणं गुरु हृद्यं धातुवर्द्धकम् । गोधूमान्नं—गुरु घनं कासश्वासघ्नञ्च । कोद्रवान्नं—रुचिकरं मधुरं प्रमेहघ्नं मूत्रदीपनं तृष्णाघ्नं छर्दिकफवातामदाहघ्नञ्च । श्यामाकान्नं—रुच्यं लघु रुचं दीपनं बल्यं वातकरं मेहगलरोगमूत्रकृच्छ्रघ्नञ्च । नीवारान्नं—रुचिदं लघु दीपनं गुरुवातकृत् यकृत्प्लीहश्वासव्रणघ्नञ्च । कुलत्थान्नं—मधुरं रुचम् उष्णं लघु कटुपाकि दीपनं कफवातहृत् निश्वासहरञ्च । माषान्नं—दुर्जरं मांसवृद्धिकरं गुरु वातघ्नं हृद्यञ्च । शिम्ब्यन्नं—मधुरं रुचं वातपित्तकोपनञ्च । वैदलान्नं—गुरु रुचिकरं । आढक्यन्नं—गुरु कफपित्तघ्नञ्च । मत्स्यौदनं—कफकरं त्रिदोषकरं अग्निमान्द्यकरञ्च । शाकान्नं—लेखनं रुचमुष्णं दोषद्रावकञ्च । मांसौदनं—धातुवर्द्धकं स्निग्धं गुरु च । फलान्नं (फलान्नं)—रुच्यं गुरु फलसमगुणञ्च । षष्टिकसाधारणशाल्यन्नं—दीपनं बल्यं पाचनं त्रिदोषघ्नं सर्वविषघ्नञ्च । नवान्नं मधुरं स्निग्धं गुरु मलस्तम्भनं रक्तपित्तघ्नञ्च । उष्णान्नं—दीपनं लघु श्रमकरं मदात्ययरक्तपित्तप्रमेहवातकरं कासश्वासक्लम्याध्मानगुल्मजाड्यचतकामहरञ्च । शीतान्नं—शीतलं लालास्रावकम् अग्निमान्द्यमेहमूर्च्छादिहरञ्च । वै निघ । क्लिन्नान्नं—दुर्जरं ग्लानिकरञ्च ।

**अन्नकाल** । पु । भोजनसमये । तल्लक्षणं,—"क्षुत् सम्भवति पक्वेषु रसदोषमलेषु च । काले वा यदि वाकाले सोऽन्नकाल उदाहृत ॥" भा ।

**अन्नकोष्ठ** । पु । तण्डुलधान्यादिरक्षणाधारे । গোলা, মরাই ।

**अन्नगन्धि** । पु । अतिसाररोगे । त्रिका । মলভেদ । सं हगवण ।

**अन्नजम्** । क्ली । त्रैदिवसिकान्नमण्डे । स तिन दिवसाची शिलीदेज ।

**अन्नजा** । स्त्री । हिक्काभेदे । पलान्नै रतिसंयुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्द्धगो भूत्वा तां विद्यादन्नजां भिषक् ॥ भा ।

**अन्नद्रवशूल** । पुं, क्ली । परिणामशूले । तल्लक्षणं यथा,—"यदा जीर्णेऽप्यजीर्णे वा यच्छूलमुप जायते । पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च । न शमं याति नियमात् सोऽन्नद्रव उदाहृत ॥" मा नि ১৩৩ परिणामशूलम् ।

**अन्नद्रवाख्य** । पु । अन्नद्रवशूले । मा नि ।

**अन्ननाडी** । स्त्री । अन्नपाकनाड्याम् । सा च २० हस्तमिता कलापेशीनिर्म्मिता । तदुक्तं—हस्तविंशतिप्रमाणा कलापेशीविनिर्म्मिता । अन्नपाकक्रियायां च पाकनाडी प्रकीर्त्तिता ॥ ऊर्द्ध्वांशो मुखनामाऽस्य अधोऽंशो गुदनामकः । कण्ठादामाशयं यावदन्ननाडी तु कथ्यते ॥ ततश्चामाशयस्तस्मात् स्थूलान्त्रं स्थूलमन्त्रकं । आमाशयात् समारभ्य भागः प्रथम आन्त्रिकः । ग्रहणी चाग्न्यधिष्ठानं बुधैराद्यं प्रकीर्त्तितं । ततः पक्वाशयः प्रोक्तः पक्वान्नपरिधारणात् ॥ स्थूलान्त्रस्याप्यधोभागः सरलो गुदसंज्ञकः । अन्नकिट्टं मलं सर्व्वं वहिर्निःसारयत्ययम् ॥ आमनाड्यां स्थिता पश्चादन्ननाड्यन्नवाहिनी । अधस्तात् कुण्डलीभूता नाडी चोदरमध्यगा ॥ कण्ठादधोगतिर्नाडी भित्त्वा वक्षःस्थलाश्रया । पेशीसुखस्थवर्त्ती प्रविष्टेयमधोगुह्याम् । इत्यादि । आत्रेय ।

**अन्नप्राशनम्** । क्ली । षष्ठे अष्टमे वा मासि बालस्यान्नभोजने । भा ।

**अन्नमण्ड** । पु । भक्तमण्डे । ভাতের মাড । गुणा—क्षुद्बोधनो बस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायुञ्जयेदष्टगुणो हि मण्डः ॥ च द अग्निमा चि ।

**अन्नमय** । पु । स्थूलशरीरे ।

**अन्नमयकोश** । पु । शरीरे ।

**अन्नमलम्** । क्ली । पुरीषे । मद्ये ।

**अन्नरस** । पु । भक्तमण्डे ।

**अन्नलिप्सा** । स्त्री । अन्नभोजनेच्छायाम् । क्षुधायाम् । वै निघ । प्रकृतिगामिमनोऽन्नलिप्सा । च द ।

**अन्नवहा** । स्त्री । धमनीद्वयम् । याभ्यां भुक्तमन्नमुदरं नीयते । सु शा ९ अ । तयोर्मूलमामाशय, अन्नवाहिधमन्यश्च ।

**अन्नवाहिस्रोत** । क्ली । गलनाड्याम् । গলার নলী ।

मिलितपलद्वयम् )। यथाविधि पाच्यम्। च द उ स चि। अत्रेद्दधि अष्टतक्र ग्राह्यम्। रस र।

**अष्टकर्म्म।** क्ली। अष्टादश रसकम्मणा मध्ये स्वेदनादि दीपनपर्य्यन्ते रसस्याष्टविधसंस्कारे। स्वेदन मर्द्दनञ्चैव मूर्च्छनोत्थापनन्तथा। पातन बोधनञ्चैव नियामनमतः परम्। दीपनञ्चेति संस्कारा सूतस्याष्टौ प्रकीर्त्तिता॥ र सा स। त्रिकटु त्रिफला चित्रकसकन्यायुक्ते काञ्जिके चतुर्गुणवस्त्रेण दिन स्वेदनम्। गृहधूमेष्टकाजाजीदग्धोर्णागुड सैन्धवं षोडशांशं सकाञ्जिकं त्रिदिनं मर्द्दयेत्। त्रिफला चित्रककन्या वा मूर्च्छना। इत्यादि।

**अष्टका।** स्त्री। इचभेदे। हे च।

**अष्टगाध।** पु। ऊर्णनाभे। शाकडशा। शरभे।

**अष्टगुणमण्ड:।** पु। अष्टसुद्गतण्डुलान् चतुर्दशगुणे तोये पक्का, तत्र हिङ्गुसैन्धवधान्यशुण्ठी मरिचपिप्पलीचूर्णानि भमिश्र असिक्थके ग्रहीते मण्डे। गुणा —सुधावहन बलकर वस्ति शोधनश्च। वै निघ। अत्र तण्डुलस्याष्टभागा सुद्गस्य च चत्वार।

**अष्टधातु:।** पु। स्वर्णरौप्यताम्रसीसपित्तलरङ्ग कान्तलौहमुण्डलौहतीक्ष्णलौहेषु। र सा स टी।

**अष्टपटी।** स्त्री। वेल इति ख्याते पुष्पक्षुपे। বেলফুলের গাছ। गुणा —शीता लघु कफपित्त विषघ्नी च। मद व ३।

**अष्टपलम्।** क्ली। शरावमाने। এক সের। भा।

**अष्टपलघृतम्।** क्ली। ग्रहणीरोगे। पाकविधि — मरिचादि १ प गुड १ प घृत ८ प वारि ३२ प एकत्र पाच्यम्। च द।

**अष्टपात् (द)।** पु। काश्मीरदेशीयशरभे। मद व १२। ऊर्णनाभे। ह च ४का।

**अष्टपादप।** पु। वृक्षभेदे। वै निघ।

**अष्टपादिका।** स्त्री। शारदमल्लिकायाम्। दार्थेनल्लिका। रत्ना। आस्फोतायां। शंपरमाली। प मु व ११।

**अष्टभाव।** पु। स्तम्भ स्वेद रोमाञ्च स्वरभङ्ग वैस्वर्य्य कम्प वैवर्ण्याश्रुपातेषु। वै निघ।

**अष्टमङ्गल।** पु। पञ्चभद्र, खुरलग्नास्थे शुभे वाजिनि। हे च। यस्य पादा सिता सर्व्वे पुच्छं वक्षो मुखं तथा। मूर्द्ध्नश्च सिता यस्य स विद्यादष्टमङ्गलम्॥ ज द ३अ। क्ली। ब्राह्मणगवाग्नि स्वर्णघृतसूर्य्याश्वनृपचामरचर्य्यासु। वै निघ।

**अष्टमङ्गलघृतम्।** क्ली। बालरोगशमने सर्पिषि। तद्धाष्टौषधिपक्व बालानां हितम्। वचाकुष्ठ ब्राह्मीसर्षपशारिवासैन्धवपिप्पलीकल्केनाष्टम घृत घृतपाकविधिना पाच्यम्। घृत ४ श कल्कद्रव्य वचादीना मिलितशराव दत्त्वा जलाढक पाच्य। च द बाल चि। भा रस र।

**अष्टमधुजाति'।** स्त्री। माक्षिक भ्रामर क्षौद्र पौत्तिक छात्रकार्घ्यौद्दालकदालेषु। वै निघ।

**अष्टमानम्।** क्ली। प्रसृतिद्वये, ३२ तो। অর্দ্ধ সের। प प्र १ख।

**अष्टमिका।** स्त्री। तोलचतुष्टयपरिमाणे। प।

**अष्टमी।** स्त्री। चीरकाकोल्याम्। वै निघ।

**अष्टमूत्रम्।** क्ली। गोच्छागमेषमहिषाश्वहस्त्युष्ट्र गर्द्दभीमूत्रेषु। वै निघ।

**अष्टमूलम्।** त्रि। त्वङ्मांसशिरास्नाय्वस्थिसन्धि कोष्ठमर्म्ममूलेषु। सु चि १अ।

**अष्टमौक्तिकस्थानम्।** क्ली। शङ्खहस्तिसर्प मत्स्यमेघवंशशूकरशुक्तिषु। वै निघ।

**अष्टलौहकम्।** क्ली। स्वर्णरौप्यताम्ररङ्गसीस पित्तलकान्तलौहमुण्डलौहतीक्ष्णलौहेषु। पञ्चलौह समायुक्त कान्तमुण्डकतीक्ष्णकम्। कल्पित कथितो धीरैरष्टलौहाभिधो गण॥ रा नि व २२।

**अष्टवर्ग।** पु। A class of eight principal medicaments, Rishabhaka &c मेदाद्यष्टौषधिवर्गे। यथा—मेदामहामेदाजीवकर्षभकऋद्धिवृद्धिकाकोलीचीरकाकोलीषु। प कृ। जीवकर्षभकौ मेद काकोल्यावृद्धिवृद्धिकौ। एकत्र मिलितैरेतैरष्टवर्ग प्रकीर्त्तित॥ रा नि व २२। गुणा —"शीतलोऽतिशुक्रल बृंहण दाहपित्तरक्त शोषघ्न स्तन्यकृत गर्भदायक।" मद व १। "रक्तपित्तव्रणवायुपित्तनाशकर।" राज। "हिम स्वादु बृंहण गुरु भग्नसन्धानकृत् कामवर्द्धकबल वर्द्धक तृष्णादाहज्वरमेहक्षयहरश्च।" भा पू १भ।

**अष्टवर्गप्रतिनिधि।** पु। मेदादीनामभावे तत्तद्गुणद्रव्यग्रहणे। तत्र मेदामहामेदाभावे शतावरी, जीवकर्षभकस्थाने भूमिकुष्माण्डमूलं, काकोलीचीरकाकोल्यभावे अश्वगन्धामूल, ऋद्धि

**असुरा**। स्त्री। रजन्याम्। रात्रि। हरिद्रायां। मे दनिक।

**असुराह्वम् (ह्वा)**। क्ली, स्त्री। कांस्ये। र च।

**असुराह्वपतङ्ग**। पु। तेलपायिपतङ्ग। (तेला पोका आरशोला। "असुराह्वपतङ्गस्य विट्चूर्ण मधुसंयुतम्।" वैद्यकम्।

**असुराह्वविट्**। पु। कांस्यमल। वै निघ रभ ज्य असुराह्वघ्ने। [ अ टी भ।

**असुरी**। स्त्री। राजिकायां। नाम्निमनिया।

**असुस्थ**। त्रि। रोगयुक्त।

**असृक्**। क्ली। पुङ्कानामगन्धद्रव्ये। कुङ्कुम। रा नि व १२। रक्ते। रा नि व १८।

**असृकर**। पु। शरीरस्थरसधातौ। ह च।

**असृक्प (पा)**। पु,स्त्री। जलौकायाम्। अ टी भ।

**असृगुत्थ**। पु, क्ली। केशरे।

**असृग्गद**। पु। कोष्ठे। वै निघ।

**असृग्दर**। पु। असृग्दार्यते व्यज्यते अनेनेति भा रक्तप्रदरे। स्त्रीरोगरोग। छि प्रदरौना। लक्षण "विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च। यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयना द्दिवा च॥ असृग्दरं भवेत्सर्वं साङ्गमर्द्दं सवेदनम्। तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा। दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः।" मा नि। वातजादिभेदात् स चतुर्विधः। ऋतु कालभिन्नान्यकालेऽपि अधिकार्त्तवस्रावोऽसृग्दर एव। स शा २अ। यच्चाथ्य यदपथ्य वा रक्तपित्तेषु कीर्त्तितं। प्रदरेऽपि तथा दोषं तत्तथापि भजेत्त्यजेत्॥ इति पथ्यापथ्यम।

**असृग्दरशैलेन्द्ररस (सर्व्वाङ्गसुन्दर)**। पु। रक्तप्रदरौषधरसे। पाठो यथा—गगनं शोधितं ग्राह्यं पलकमिष्टकासमं। टङ्कणं व्याघ्रतुण्डं शाणार्द्धं विसुगन्धिकं। कर्पूरजलदश्चैव जातीकोष फलं घनं। नागरं लवङ्गञ्च कुष्ठं सचिक्कणं तथा। जलेन वटिकां कार्यां छायाया शोषयेत्तु ताम्। प्रदरस्य विनाशाय हृष्टं सर्व्वाङ्गसुन्दरं॥ प्रयोगा अ दर चि।

**असृग्ध(ग्धा)रा**। स्त्री। चर्म्मणि। अ टी भ।

**असृणम्**। क्ली। स्वर्णगैरिके। स्वर्ण गिरि माटि। हि सोनगरु। वै निघ।

**असृतम्**। त्रि। अमिश्रे। अपक्व। रत्ना।

**असृपाटी**। स्त्री। रक्तधारायाम्। अ टी भा।

**अस्तम्**। क्ली। मृत्यौ। ह च।

**अस्तमती**। स्त्री। शालपर्ण्याम्। श र।

**अस्त्रम्**। क्ली। आयुधे, चापे। करवाले। म रविक। व्याघ्रनखे।

**अस्त्रचिकित्सक**। पुं। शल्यवैद्ये। सु।

**अस्त्रचिकित्सा**। स्त्री। शस्त्रादिना व्रणघातादि प्रतिकारे। सु। [ इति भाषा। रत्ना।

**अस्त्रजित्**। पु। कवाटवक्रकचे। कवाटिबेडे

**अस्त्रवैद्य**। पुं। शस्त्रचिकित्सके। वै निघ।

**अस्त्राघात**। पु। शस्त्रप्रयोगे। अस्त्रकर्म्म। वै निघ।

**अस्थि (कम्)**। क्ली। बीजे। मेदोजधातौ। हाड। रा नि व १८। अस्थिस्वरूप—"मेदो यत् स्वाग्निना पक्वं वायुना चातिशोषितम्। तदस्थिसंज्ञां लभते स सारः सर्वविग्रहे॥" तत्कर्म च धारण। तत्संख्या च मानवदेहे ३००। तेषां १२० शाखासु, ११७ श्रोणिपार्श्वपृष्ठोदरोरःसु, ६३ ग्रीवायां प्रत्यूर्द्ध्वमिति। एकैकस्याम्पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश। तलकूर्च्चगुल्फसंश्रितानि दश। पार्ष्ण्यामेकं, जङ्घायां द्वे जानुन्येकमूरावेकमिति। त्रिंशदेवमेकस्मिन् सक्थिनि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ। श्रोण्यां पञ्च तेषां गुदभग नितम्बेषु चत्वारि त्रिकसंश्रितमेकं, पार्श्वे षट्त्रिंशत्, एवमस्मिन्, द्वितीयेऽप्येवं। पृष्ठे त्रिंशत्। अष्टावुरसि। द्वे अक्षकसंज्ञे। ग्रीवायां नवकं। कण्ठनाड्यां चत्वारि, द्वे हन्वोः, दन्ता द्वात्रिंशत्, नासायां त्रीणि, एकं तालुनि, गण्डकर्णशङ्खेषु एकैक, षट् शिरसि। तत्र पञ्चविधम्—कपाल रुचक तरुण वलय नलकभेदेन। तत्र जानुनितम्बस्कन्ध तालुशङ्खमस्तकास्थीनि कपालपदवाच्यानि। दन्तास्थि रुचकमिति, नासाग्रीवाकर्णनेत्रास्थीनि तरुणमिति, हस्तपादपार्श्वपृष्ठोदरवक्षोऽस्थीनि वलयमिति, अव शिष्टानि च नलकमिति उच्यते। सु शा ५अ।

**अस्थिकृत्**। पु। मेदोधातौ। हे च।

**अस्थिगतज्वर**। पु। तदाश्रितज्वरे। लक्षण यथा—"भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च। विक्षेपणञ्च गात्राणां विद्यादस्थिगते ज्वरे॥"

वै निघ । वात्तिनौषध, वस्तिकर्म, अभ्यङ्गीदत्तने च प्रतीकार ।

**अस्थिग्रन्थि** । पु, स्त्री । ग्रन्थिरोगे ।

**अस्थिच्छलितम्** । क्ली । तन्नामककाण्डभग्न विशेषे । हृदस्थ्नः क्षुद्रखण्डच्युतौ । 'पार्श्वयो रस्थि हीनीन्नतम् ।' सु नि १५श्र । See भग्नम ।

**अस्थिज** । पु । मज्जायाम । रा नि व १८ ।

**अस्थिजननी** । स्त्री । वसाधातौ । मेदोधातौ वै निघ ।

**अस्थितुण्ड** । पु । पक्षिविशेषे । श मा ।

**अस्थितोद** । पु । अस्थिनि सूचीविद्धवद्वेदनायाम् । अस्थिपीडायाम् । व निघ ।

**अस्थिपञ्जर** । पु । कङ्काल । रा नि व १८ ।

**अस्थिफल** । पु । पनसवृक्षे ।

**अस्थिभङ्ग** । पु, क्ली । तन्नामधेयरोगे । अस्थि विश्लेषे । स द्विविध सन्धिमुक्तकाण्डभग्नभेदेन । तयो सन्धिमुक्त षड्विध । काण्डभग्नश्च द्वादश विध । सु चि ३श्र । विशेषा स्वस्वपर्यायेषु द्रष्टव्या । अस्थिसंहारे । हाडभाङ्गा । See भग्नम् ।

**अस्थिभक्ष** । पु । कुक्कुरे । श्रृगाले । हारा ।

**अस्थिभक्षा** । स्त्री । औषधिविशेष । घायमारी इति महाराष्ट्रादौ । व निघ ।

**अस्थिमर्म** । क्ली । तदष्टसंख्यकम् । तत्र कटीतरुणसंज्ञके द्वे, नितम्बे द्वे, अंसफलके द्वे, शङ्खयोश्च द्वे इति । सु शा ५श्र ।

**अस्थिराङ्कि्क** । पु । हिन्तालवृक्ष ।

**अस्थिशृङ्खला (लिका)** । स्त्री । अस्थि संहारे । हाडजोड़ा । हि अस्थिशृङ्खल । गुणा —रुक्षा श्लेष्मला मधुरा पित्तरक्तानिलघ्नी च । मद व ११ ।

**अस्थिसङ्घात** । पु । अस्थिमिलनस्थलेषु । तानि अष्टादश—"गुल्फ़े पञ्च जानुन्येकम् वङ्क्षण कटिदेश मनश्चैवैकम् । चतुर्दशान्यो सङ्घाता । तथा तयो गुल्फ़जानुवङ्क्षणेषु । एतेनेतरसक्थिव्याख्यातौ । त्रिकशिरसोरेकैक ।" सु शा ५श्र ।

**अस्थिसन्धानकर** । पु । अस्थिने । वै निघ ।

**अस्थिसन्धानजननी** । स्त्री । अस्थिसंहारे । हाड़जोड़ा । वै निघ ।

**अस्थिसन्धि** । पु । अस्थिसम्मेलनस्थाने । मर्म स्थानेषु । ते द्विधा स्थिरा अचलाश्चेति । सु शा ५श्र । See सन्धि ।

**अस्थिसन्धिक** । पु । अस्थिसंहार । भैष ।

**अस्थिसमुद्भव** । पु । मज्जनि । वै निघ ।

**अस्थिसम्बन्धन** । पु । रास्नि । स्नायौ । वै निघ ।

**अस्थिसम्भव** । पु, क्ली । मज्जनि । शुक्रधातौ । व निघ ।

**अस्थिसम्भवस्नेह** । पु । मज्जनि । वै निघ ।

**अस्थिसंहृति** । पु । अस्थिसंहारे । मद व ७ ।

**अस्थिसंहार (क)** । पु । Vitis quadrangularis, Syn Cissusquadrangularis) स्वनामख्यातवृक्षे । হাড়োচ, হাড়জোড়া, হাড়ভাঙ্গা हि हरसङ्करी, हरजोडी हरसंहारि । तत्पर्याय—वज्रवल्ली ग्रन्थिमान् कुलिश अमर (र), शिरालक (श), अस्थिसंहारी वज्राङ्गी अस्थिशृङ्खला । गुणा—शीतल रुक्ष वातघ्न अस्थिसन्धानकृच्च । मद व १ । अस्थियोजन वात श्लेष्महर उष्ण सर कृमिघ्न नेत्ररोगघ्न रुच स्वादु रुक्ष लघु पित्तलश्च । भा पु म । काण्ड त्वग्विरहितमस्थिशृङ्खलाया माषाद् द्विदलमकञ्चुक तदङ्कम सम्पिष्ट तदनु तत्तिलस्य तैले सम्पक्व वटकमतीव वातहारि ॥ भा । च द अ पि भग्न गुडी । माचा शुष्कचूर्ण १८ र । हस्तिगुण्डाम् । হাড়জোড় । इति नाके ।

**अस्थिसंहारिका (री)** । स्त्री । अस्थि संहारे । भ पु १म ।

**अस्थिसंहृत्** । पु । अस्थिसंहारे । च न । भैष भग्न चि ।

**अस्थिसार** । पु । मज्जायाम् । रा नि व १८ ।

**अस्थिसारस्थिता** । स्त्री । मज्जायां ।

**अस्थिस्नेह** । पु । मज्जनि । रा नि व १८ ।

**अस्थिस्नेहसञ्ज्ञ** । पु । मज्जायाम् । नरक इति लोके । रा नि व १० ।

**अस्थिस्नेहसञ्चार** । पु । मज्जनि । न्यास ।

**अस्निग्धदारु (कम्)** । क्ली । देवदारुणि । देवदारुविशेष । रा नि व १२ ।

**अस्त्रशर्या**। क्ली। आकाशवल्ल्याम्। आलोक लता। रा नि व २।
**अस्फोत**'। पु। काञ्चनवृक्षे। वै निघ।
**अस्मन्तम्**। क्ली। चुल्ल्याम्। উনন, আকা। इति लोके। म चुल। अ टी भ।
**अस्मित**.। त्रि। विकसिते। फूटेछ। वै निघ।
**अस्रम्**। क्ली। शोणिते। रा नि व १८। केशर। कुङ्कुम्। चद। नयनजल। रक्षा। पु। आसाव। विज र। कोण। केश। मे।
**अस्रकण्टः**। पु। वाणे। ह। वाण।
**अस्रखदिर**.। पु। रक्तखदिरवृक्ष। लाल खयेर। म रक्तखैर। रा नि व ८।
**अस्रघ्न**.। पु। तेजवल। तेजवल। व निघ
**अस्रजम्**। क्ली। मांसे। रा नि व १७।
**अस्रजित्**। पु। वनस्पतिविशेष। कपाट बेटू इति भाषा। र मा।
**अस्रपः**। पु। जलौकायाम्। জোঁক। मत्कुणे। छारपोका, উকুন। रा नि व २३।
**अस्रपत्र**' (क)। पु। भेण्डावृक्षे। रा नि व ४।
**अस्रपा**। स्त्री। जलौकायाम्। জোঁক। मे।
**अस्रफला (ली)**। स्त्री। शल्लकीवृक्षे। शालूई गाछ। रा नि व ११।
**अस्रमातृका**। स्त्री। रसधातौ। रा नि व १८।
**अस्ररेणु**। पु। सिन्दूर। मे।
**अस्ररोधिका (नो)**। स्त्री। लज्जालुका लतायाम्। लज्जावती लता। रा नि व ५।
**अस्रविन्दुच्छदा**। स्त्री। लक्ष्मणाकन्दे। रा नि व ५। [ वै निघ।
**अस्रबिम्बी**। स्त्री। रक्तबिम्ब्याम्। वाडाशिम्।
**अस्रसायक**। पु। नाराचास्त्रे। लोहार बाण।
**अस्रसुती**। स्त्री। रक्तस्रावे। वै निघ।
**अस्रार्जक**। पु। रक्ततुलसीवृक्षे। बाडी-तुलसी। श्वेततुलस्याम्। शादा तुलसी। म पाढ़री तुलस। वै निघ।
**अस्राह्व**'। पु, क्ली। कुङ्कुमे। मद व ७।
**अस्रु**। क्ली। नेत्रवारिणि। अमुनिरोधात् पीनसा द्युत्पत्ति। वा सू,४७।
**अस्रुकः**। पु। अङ्कोटवृक्षे। আউচ গাছ। रवा।
**अस्रुवाहिनी**। स्त्री। अश्रुवाहके धमनीद्वये। सु शा ९अ।
**अस्वन्त**'। पु। चुल्लाम्। উনন।
**अस्वास्थ्यम्**। क्ली। पीडायाम्।
**अहः**। क्ली। दिवसे। अम।
**अहङ्कार**'। पु। चैतन्यपुरुषस्य चतने, इन्द्रियादिनिखिलशरीरव्यापी योऽहमभावस्तद्विशिष्टप्रवृत्तिरेव। स च त्रिविध वैकारिकतैजसभूतभेदेन। तल्लिङ्गाश्च सत्त्वतल्लिङ्ग एवाहङ्कार उत्पद्यते। तत्र वैकारिकादहङ्कारात् तैजससहायात्तल्लक्षणान्येव एकादशेन्द्रियाणि उत्पद्यन्ते। भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राणि उत्पद्यन्ते।' सु शा १अ।
**अहतम्**। क्ली। नूतनवस्त्रे। हला।
**अहरट्टक्**। पु। गृध्रे। शकुनि। वै निघ।
**अहर्ज्जव**.। पु। सम्वत्सरे। के।
**अहर्पण**'। पु। मांसे। हारा।
**अहर्बान्धव**। पु। अर्कवृक्षे। हे च। [ह च।
**अहर्मणि**। पु। अर्कवृक्षे। आकन्द गाछ।
**अहर्मुखम्**। क्ली। प्रातःकाले।
**अहल्य**। त्रि। अनाकृष्ट भूमौ।
**अहस्कार**। पु। अर्कवृक्षे। हे च।
**अहस्पति**। पु। अर्कवृक्षे। सूर्य्ये। अम।
**अहि**। पु। सीसके। शीषा। प्रयोगा, वसन्त-कुसुमाकररस। र सा स। सर्पे। मद व २२। उदरावर्त्ते। हारा। मधीवृक्षे। नजना शिजू। हे च
**अहिंस्रा**। स्त्री। ( Capparis sepiaria ) कण्टकपालीवृक्षे। কাঁটা গুড়কাঁটিনী। रवा। आमवातप्रशमने। गुणा —विषशोथहरत्व। राज।
**अहिक (का)**। पु, स्त्री। शाल्मलीवृक्षे। शिमुल गाछ। म सांवरी। श च।
**अहिकान्त**। पु। वायौ। हे च।
**अहिकुटी**। पु। भारद्वाजपक्षिणि। वै निघ।
**अहिगन्धफला**। स्त्री। सप्तकीवृक्षे। रा नि व ११। [ म सापगध। व निघ।
**अहिगन्धा**। स्त्री। सर्पगन्धायाम्। रास्नाविशेषे।

**অহিচ্ছত্র** । পু। মেষশৃঙ্গ্যাং। মেড়াশিঙে। ইষ।

**অহিচ্ছত্রা** । স্ত্রী। শর্করাভেদে। মৌরী। গুলফা। রা নি ব ৪। শর্করায়াম্। চিনি। রা নি ব ১৪। [বৈ নিঘ।

**অহিজালক** । পু। কৃকলাসে। কাঁকলাস।

**অহিজিহ্বিকা** । স্ত্রী। মহাশতাবর্য্যাম্। বড় শতমূলী। ব নিঘ।

**অহিতদ্রব্যম্** । ক্লী। স্বভাবত এবাহিত দ্রব্যেষু। যথা—শিম্বীধান্যেষু শৌর্ষে মাষকলায় ফলেষু ডহুক, শাকেষু সর্ষপশাকম্, মাংসেষু গোমাংস বসাসু মাহিষী, দুগ্ধেষু মেষীদুগ্ধ, তৈলেষু কুসুম্ভতৈল, ইক্ষুবিকারেষু ফাণিতঞ্চ। ভা পূ ১ম।

**অহিতপদার্থ** । পু। চঙ্ক্রমণা, পুতিমাংসে, প্রভাতনিদ্রায়াং, মৈথুনে, দধনি চেত্যাদৌ।

**অহিতাহার** । পু। অহিতকরদ্রব্যভক্ষণে। গুণ—পীড়াজনকত্বম্। বা সূ ৯অ।

**অহিত্থ** । পু। বনমেথিকায়াম্। বনমেথি। অহিত্থোঽল্পগুণস্তদ্বাজিনাং স তু পূজিত। মদ ব ২।

**অহিদ্বিট্** । প। নকুলে। ময়ূরে। ম, ষচতুষ্ক।

**অহিনির্মোক** । পু। সর্পনির্মোকে। ভা।

**অহিপত্রক** । পু। নির্বিষ সর্পবিশেষে।

**অহিপুলক** । পু। তরালী। হারা। নৌকাবিশেষ।

**অহিপুষ্পম্** । ক্লী। নাগকেশরপুষ্পে। চ দ। কুম্ভীকাতৈল। সু চি ২০অ।

**অহিপূতন' (না)** । পু, স্ত্রী। বালরোগান্তর্গতে রোগবিশেষে। শিশুর গুহ্যক্ষত। যথা—'শকৃন্মূত্রসমাযুক্তেঽধৌতেঽপানে শিশোর্ভবেৎ। স্বিন্নে বাস্নাপ্যমানে বা কণ্ডূ রক্তকফোদ্ভবা॥ কণ্ডূয়না ততশ্চিপ্রং স্ফোটঃ স্রাবশ্চ জায়তে। একীভূত ব্রণ ঘোরং তং বিদ্যাদহিপূতনম্॥" মা নি ক্ষুদ্ররোগ।

**অহিফল (লা)** । পু স্ত্রী। দোষককটিকায়াম্। লম্বা কাঁকুড়। মটরকাকড়ী।

**অহিফেনম্ (কম্)** । পু, ক্লী। Opium poppy, Papaver somniferum স্বনাম খ্যাতসারজবর্গীয়োপবিষ। প সু। আফিম্। হি অফিম্। মং অফুকাডরী, অফুন। আফম ইতি মালবে প্রসিদ্ধ। ত নলমন্ডু। "উক্ত খসখসফলক্ষীর মাফুকমহিফেনকম্।" ভা পূ ১ম। অহিফেনং চতুর্ব্বিধ জারণ মারণ ধারণ সারণভেদাৎ। তত্র শ্বেতবর্ণং জারণ, কৃষ্ণবর্ণং মারণং, পীতবর্ণং ধারণ, কর্ব্বুরং সারণঞ্চ। জারণমন্ন জারয়েৎ, মারণ মৃত্যু কারয়েৎ, ধারণং বয়স্তম্ভ, সারণ মলসার ঞ্চ করোতি। সামান্যতো গুণা —সন্নিপাতঘ্ন হৃদ্য বল্য মোহদঞ্চ। রা নি ৬। আফুকং শোষণ গ্রাহি শ্লেষ্মঘ্ন বাতপিত্তকরঞ্চ। মদ ব ১।

**অহিফেনবটিকা** । স্ত্রী। যোগোঽয় রক্তাতিসারে। খর্জ্জুরং পিণ্ডখর্জ্জুরম্। র সা স। [থাকি।

**অহিফেনবীজম্** । ক্লী। খসখসে। পোস্ত,

**অহিফেনাসব** । পু। আসবোঽয়মতীসার বিসূচ্যোর্হিত। মাত্রার্দ্ধমাষকমিতা। অত্র মধূক মদ্যম্ (মউয়ার মদ) পলশত (১২॥০ সের)। অহিফেন ৪ প মুস্তক জাতীফলেন্দ্রযবৈলানাং প্রত্যেক পলমেকঞ্চাতপাবে মাসমেকং স্থাপয়েৎ। ভৈষ।

**অহিভয়দা** । স্ত্রী। ভূম্যামলক্যাম্। ভুঁই আমলা। রা নি ব ৫।

**অহিভুক্** । পু। ময়ূরে। রা নি ব ১৯। তার্ক্ষ্যে। স্ত্রী। ক্ষুদ্রসাপসদ ইতি প্রসিদ্ধে ক্ষুপে। নাকুলীনাম মহাকন্দশাকে। রা নি ব ৩। গন্ধনাকুল্যাম্। রা নি ব ৩। See নাকুলী।

**অহিমর্দ্দনী** । স্ত্রী। গন্ধনাকুল্যাম্। রাস্না বিশেষ। অহিলতাবিশেষে। সাপসদ ইতি পাশ্চাত্যে। রা নি ব ৩। See নাকুলী।

**অহিমার (ক)** । পু। বিট্খদিরে। গুয়ে বাবলা। মং গন্ধীহিবর। রা নি ব ৮।

**অহিমেদ (ক)** । পু। বিট্খদিরে। গুয়ে বাবলা। ম গন্ধীহিবর। রা নি ব ৮।

**অহিরিপু** । পু। ময়ূরে। রত্না।

**অহিলতা** । স্ত্রী। সাপসদ ইতি খ্যাতলতায়াম্। গন্ধনাকুল্যাম্। রা নি ব ৩। See নাকুলী। তাম্বূল্যাম্। পান গাছ। রা নি ব ১১

**অহিলোকিকা** । স্ত্রী। ভূম্যামলক্যাম্। ভুঁই আমলা। বৈ নিঘ। [বৈ নিঘ।

**অহিল্যা** । স্ত্রী। বনমেথিকায়া। বনমেতি।

**অহিবল্লী** । স্ত্রী। নাগবল্ল্যাং। ভৈষ ভ ভ বি।

**अहिविषापहा।** स्त्री। अहिलतायाम्। सासमद। व निघ।
**अहिस्कन्धः।** पु। गुल्फे। পায়ের গুল্ফে।
**अही।** स्त्री। गवि। গাভী।
**अहीन्द्रः।** पु। शारिवायाम्। अनन्तमूल। च द यच्म चि लवङ्गादिचूर्णे।
**अहीरणिः।** पु। द्विमुखसर्पे। শঙ্খিনী इति लोके। हारा।
**अहीरुह.।** पु। शाकवृक्षे।
**अहेरु।** स्त्री। शतमूल्याम्। अम।
**अहोरात्रम्।** क्ली। दिवारात्रे।
**अह्वाटः।** पु। ওকড়া इति प्रसिद्ध क्षुपे। प मु।
**अह्वला।** स्त्री। भल्लातकवृक्ष। ভেলা গাছ। श च।
**अक्ष.।** पु। (Teminalia belerica) A tree bearing medicinal fruit विभीतकवृक्षे। বয়ড়া গাছ। हितिनाम। रा नि व ६। भा म ४भ अञ्जने, 'अभ्याक्षकाले मल मायसन्।" सियो सिद्धमतयोगे कु काम हन्द। यच्चा एलादिमन्थे हन्द। कर्षपरिमाणे। प प्र। इन्द्राक्षे। सर्प॥ मे। रुद्राक्षवृक्षे। भा अने व। व्यासे। कयसके। देवगिरीपवृक्षे। शिवीषविशेष। रा नि व ९। क्ली। विषयेन्द्रिये। रा नि व १८। वा शा ३४। सौवर्चललवणे। तुत्थके। তুঁতে। मे पदिर्को। पद्मबीजे। विभीतकफले। रा नि व ११।
**अक्षक।** प। विभीतकवृक्षे। भा पु १भ। तिनिशवृक्षे। र मा। "धिन्यमक्षमभ पिवेत।" च द ज्वरातिसा चि। रुद्राक्षवृक्षे। श र। इन्द्राक्ष वृक्षे। सर्पे। तोलकर्षपरिमाणे। मे पदिर्के।
**अक्षकारका।** स्त्री। घृतकुमार्याम्। घृत कुमारी। वै निघ। [पाण्डु चि।
**अक्षकाष्ठम्।** क्ली। विभीतककाष्ठे। च द
**अक्षगण.।** पु। शौचादीन्द्रियसङ्घात।
**अक्षगन्धिनी।** स्त्री। अतिबलायां। वै निघ।
**अक्षत।** पुं। यवे। (बहु) आतपतण्डुले। रा नि व १९। गन्धमाले। षटीभाग। क्ली। लाजेषु। यवे। मे। यवे। प मु। "लाजेषु विच छिडिते। यवेऽपि क्वचित्।" मेदिनिक। क्वचित् अखण्डतण्डुला अक्षतमित्याहु। त्रि। अक्षते। अहिंसिते। मे। अखण्डिते। श र। [वि ४।
**अक्षतखण्डुला।** स्त्री। महासमङ्गाक्षुपे। रा नि
**अक्षतरोगः।** पु। उपनखरोगे। আঙুল হাড়া। लक्षण—"कुर्यात्पित्तानिल पाक न्ख मासे सरुग्ज्वर। चिप्पमक्षतरोगञ्च विद्यादुपनखञ्च तम्॥" वा उ ३१अ। [श च।
**अक्षता।** स्त्री। ककटशृङ्ग्या। কাঁকড়াশৃঙ্গী।
**अक्षतैलम्।** क्ली। विभीतकतैले। বয়ড়া বীজের তৈল। वा उ १३अ। See विभीतक तैलम्।
**अक्षधर।** पु। (Trophis aspera,) शाखोटवृक्षे। শেওড়া গাছ। भूरिप्र।
**अक्षधूर्त (र्त्तिल)।** पुं। ষাঁড়। हि वेल। हारा।
**अक्षपाक।** पु। सचललवणे। वै निघ।
**अक्षपिण्ड।** पु। शङ्खपुष्प्याम्। वै निघ।
**अक्षपीड।** पु। श्वेतगुञ्जायां। श्वेतगुञ्जामूले। रसेन्द्र चि ९अ। दुरालभायां। सु चि ९अ।
**अक्षपीडका (डा)।** स्त्री। श्वेतगुञ्जायां। प मु। यवतिक्तलतायाम्। रा नि व ३।
**अक्षम।** पु। स्थूलमूलके। वनचटके। वै निघ। स्त्री (मा)। अक्षान्तौ। ईर्ष्यायाम्। श र।
**अक्षर।** पु। अपामार्गे। हे च। क्ली। जले।
**अक्षरुचकम्।** क्ली। रुचिकालवणे। সোরা। म मीरमिट। वै निघ।
**अक्षवीर्य्यवान्।** पु। श्वेतकरवीरे। वै निघ।
**अक्षशिरोधिजा।** स्त्री। मन्दाग्निरोगायां। वै निघ।
**अक्षसस्यम्।** क्ली। कपित्थफल। मं कविठ। व निघ।
**अक्षारलवणम्।** क्ली। अकृत्रिमसैन्धवादौ। यथा—"सौवीर सौष्ठवञ्च धान्य मुद्गादिका यवा। सामुद्र सैन्धवञ्च अक्षारलवण स्मृतम्।" हारलता।
**अक्षि।** क्ली। नेत्रे। रा नि व १८।
**अक्षिक।** पु। (Dalbergia oujeinensis) स्यन्दनवृक्षे। আউচ গাছ। रत्ना।

**अक्षिकूटः (क)** । पु । Eye ball इति कायां । চক্ষের তারা । वा सू २अ । गजाक्षिपुटके । हे च ।

**अक्षिकूणितम्** । क्ली । अपाङ्गदृष्टौ ।

**अक्षिगोल** । पु । The ball or globe of the eye नेत्रतारके ।

**अक्षिच्छादनम्** । क्ली । अक्षिवर्त्मनि । रत्ना ।

**अक्षिपञ्चकम्** । क्ली । श्रोत्र त्वक् रसना नेत्र नासा चेति । रा नि व १८ ।

**अक्षिपटलम्** । क्ली । A coat of the eye नेत्रपटले ।

**अक्षिपक्ष्म** । क्ली । The eye lash नेत्रलोम्नि । চক্ষের পাতার লোম ।

**अक्षिपाकात्यय** । पु । कृष्णगत अक्षिरोगविशेषे । लक्षणम्—"उच्चाश्रुपात पिडका च नेत्रे यस्मिन् भवेत् मुद्गनिभञ्च शुक्लम् । तदप्यसाध्य प्रवदन्ति केचित् अन्यच्च यत्तिमिरपचतुल्यम् । श्वेत समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डलञ्च । तमक्षिपाकात्ययमक्षिरोग सर्वात्मक वर्जयितव्यमाहु ॥" मा नि ।

**अक्षिपोलु** । पु । महानिम्बे । वै निघ ।

**अक्षिभेषजम्** । क्ली । श्वेतलोध्रे । मद व १ । पट्टिकालोध्रे । रा नि व ६ ।

**अक्षिरोग** । प । नेत्ररोगे । See नेत्ररोग ।

**अक्षिव.** । पु । (Guilandina or Hyperanthera morunga) शोभाञ्जनवृक्षे । शज ना । हि शिगु । मरिचे । रा नि व ७ । क्ली । सामुद्रलवणे । श टी भ ।

**अक्षिविचूर्णितम्** । क्ली । अपाङ्गदृष्टौ । हे च ।

**अक्षिवैराग्यम्** । क्ली । नेत्रविरक्ततायां । "चकोरस्याक्षिवैराग्यम् ।" वा सू ७अ । [श ।

**अक्षिसेचनम्** । क्ली । नेत्रनिर्म्मोदे । वा सृ २२

**अक्षिहुण्डनम्** । क्ली । नेत्रवृदासे । मा नि शिज र । [रत्ना ।

**अक्षीक** । पु । वृक्षविशेषे । আউচ । इति लोके ।

**अक्षीव.** । पु । वक्रिरे । वक । शोभाञ्जनवृक्षे । সজিনা । मे वक्रिके । च सू ४अ कृमिघ्र व । चि १अ । महानिम्बे । भा पू १भ । त्रि । अमत्ते । मे । क्ली । सामुद्रलवणे । পাঙা । भा पू १भ । मरिचे ।

**अक्षेय** । पु । रक्तार्के । अर्कमन्दारे । वै निघ ।

**अक्षोट (क) (की)** । पु, स्त्री । (Juglans regia) गिरिजपीलौ । আক্রোট্ इति लोके । आखोट इति हिमवति प्रसिद्ध । प्रा अक्रोड़ । कौ अखोड । हि खरोटनामपाली । तत्पर्य्याय,—अक्षोट, अक्षोटक, आखेट, पर्व्वतपीलु, कपराल कन्दराल आक्षोड (ख), आस्फोटक (शा र) । गुणा —मधुर बल्य स्निग्धोष्ण वातपित्तघ्न रक्तदोषहर शीतल कफकोपनञ्च । रा नि व ११ । मधुरं बल्य गुरु उष्ण सारक वातघ्नञ्च । मद व ६ । अक्षोटकोऽपि वातादसदृश कफपित्तकृत् । भा मि ।

**अक्षोटतैलम्** । क्ली । अक्षोटफलोत्थतैले । আক্রোটের তেল । गुणा सूक्षकतैलवत् ।

**अक्षोडक** । पु । अक्षोटवृक्षे । र मा ।

**अक्षोहार** । पु । मधुखर्जूर्य्याम् । वै निघ ।

**अक्ष्यम्** । क्ली । सौवर्च्चललवणे ।

---

## आ ।

**आकर** । पु । खनौ । খনি । अम ।

**आकरजम** । क्लो । रत्न । वै निघ ।

**आकर्णनम्** । क्ली । श्रवणे । কাণ, শোনা ।

**आकल्प** । पु । इन्द्रिये । मे पलिक ।

**आकर्षक** । प । शिलाभेदे । চুম্বক পাথর । अमा ।

**आकल्नी** । स्त्री । चटकायां । চড়াই । वै निघ ।

**आकाल्प** । पु रोगे । हे च ।

**आकालपक** । पु । तमसि । मोहे । दन्तोत्कलिकायाम् । म कचतुष्क ।

**आकाश (क)** । पु । अकर्करायां । आकरकरा । वै निघ २भ परी वि आकरकरादिचूर्णे ।

**आकषः** । पु । निकषप्रस्तरे । शर ।

**आकारः** । पु । आकृतौ । मूर्त्तौ । अम ।

**आकारकरभः (भा)** । पु, स्त्री । अकरकरके । आकरकरा । भा म १भ ज्वरघ्नीवटी (शार्ङ्ग)।

**आकाशः** । पु, क्ली । अभ्रधातौ । रा नि व १३ । पञ्चभूतान्यतमभूते । शून्य, आकाश । तत्पर्याय — द्यौ द्यौ अभ्र व्योम पुष्कर अम्बर नभ अनन्त सुरवर्त्म अन्तरीक्ष अन्तरिक्ष गगन ख वियत् विष्णुपद विहाय (स), नाक अनङ्ग नभस मेघवेश्म महाबिल (ज), मरुद्वर्त्मन् मेघवर्त्म त्रिपिष्ट (शब्दर)। अस्य विशेषगुण शब्द, स नित्य अशरीरो च, तस्येन्द्रिय कर्ण ।

**आकाशपटलम्** । क्ली । अभ्रधातौ । वै निघ ।

**आकाशमांसी** । स्त्री । Small veriety of जटामांसी produced in Kedára mountain सूक्ष्मजटामांस्याम् । आकाशजटामांसी । तत्पर्याय,—निरालम्बा खसम्भवा सूक्ष्मपत्री गौरी पर्व्वतवासिनी अभ्रमांसी । अस्या उत्पत्ति केदारभूमौ । गुणा —शीतला शोफघ्नी व्रणनाडीघ्नी लूतागर्द्दभजालादिरोगघ्नी वर्णकरी च । रा नि व १२ । प मु ।

**आकाशमूली** । स्त्री । जलौषधौ । पाना । धारा ।

**आकाशवल्लरी (ल्लिका) (ल्ली)** । स्त्री । Cassayta filiformis खवल्लीविशेषे । आलोक लता, आकाशबेल । कों अमरवेल् । आकाशवेलि, नलसुदवेलि इति च पाश्चात्ये । खवल्ली दुःस्पर्शा व्योमवल्लिका अमरवल्लरी । गुणा —ग्राहिणी तिक्ता पिच्छिला नेत्ररोगघ्नी अग्निवर्द्धनी हृद्या पित्तश्लेष्मामनाशिनी च । भा पु १भ । मद व १ ॥ मधुरा कटु पित्तघ्नी शुक्रवृद्धिकरी रसायनी वन्ध्या । रा नि व ३ ।

**आकाशसलिलम्** । क्ली । आन्तरीक्षजले । वर्षोदके । वृष्टिर जल । मं पावसाचेपाणी । गुणा —मधुरं रुच्य दीपनं पथ्यं तृष्णार्त्तं श्रमघ्न मेहघ्न । तथा "सद्यो हृद्यमनभिष्यन्द कफ दीपदायक । चिरस्थिरं लघु स्वच्छ पथ्य स्वादु सुखावहम् ।" रा नि व १४ ।

**आकुञ्चनम्** । क्ली । मरीचौ । ए मू २५५ ।

**आकुल** । पु । अश्वभेदे । ३०० अश्व ।

**आकुलकृत्** । क्ली । अकरकरायाम् । आकरकरा । भा म १भ त्रिपुरकल्प चि । "किरातत्तिक्ताकुलकृत् कुलिञ्ज ।"

**आकुला** । स्त्री । तत्रापकगोधूमादौ । इशपोडा । इति भाषा । "तत्र रपकगोधूमराकुला परिकीर्त्तिता । आकुला गुरवी हृद्या मधुरा बलकारिण ।" रा नि व १६ ।

**आकृतिः** । स्त्री । रूपे । शरीरे । लक्षणे । मैतविक ।

**आकृतिच्छत्रा (त्री)** । स्त्री । जलौषधौ । पाना । कोषातकीलतायां । श्वेत घोषा । र मा ।

**आक्रन्दः** । पु । क्रन्दने । आह्वाने । मेंदविर्क ।

**आक्रीड** । पु । गमान्तोद्याने । अम ।

**आक्रोश (नम्)** । पु, क्ली । अभिषङ्गे । शापे । हे च । अम ।

**आक्लेदिभावः** । पु । आर्द्रकादिलगुदर्द्दनी । च द विदग्धाजीर्ण चि ।

**आखनिकः** । पु । शूकरे । मूषिके । मे ।

**आखुक** । पु । मूषिके । रवा । वन्यमूषिके । मद व १२ । शूकरे । हे च । देवताड़वृक्षे । र मा ।

**आखुकर्णपर्णिका** । स्त्री । क्षुद्रमूषिककर्ण्याम् । इन्दूरकाणी, मूषाकाणी । म लघुउन्दीरकाणी । वै निघ ।

**आखुकर्णी** । स्त्री । Salvinia cucullata जलजमूषिककर्ण्याम् । इन्दूरकाणी पाना, मूषाकाणी इति भाषा । हि म भोपली । व वल्लीदरई । तत्पर्याय,—अपिका द्रवन्ती उन्दुरुकर्णी न्यग्रोधी मूषिकपर्णी वृषिकर्णी बहुकर्णिका माता भूमीचरी चण्डा मञ्जरी बहुपादिका प्रत्यक्श्रेणी वृषा पुत्रश्रेणी अटिभू चित्रा सुपर्णी शतमूलिका आखुकर्णिका मूषिकपर्णी प्रतिपर्णशिका सहस्रमूली विक्रान्ता पत्रश्रेणी । सा द्विधा ह्रस्वा दीर्घा च । ह्रस्वगुणा —कटुष्णा कफावातहरी आनाहज्वर शूलार्त्तिहरी पाचनी च । रा नि व ६ । द्रवन्तीपर्णी । कानपटी । रा नि व ५ । दन्तीभेदे वड़पत्री । गुणा —कटुतिक्तकषाया शीता लघु कटुविपाका मूत्रकफकृमिघ्नी च । भा पु १भ । कटुका तिक्ता उष्णा शीतला रसायनी तुवरा लघु कषाया कृमिग्रन्थिमूत्रकृच्छ्रप्रमेह कुष्ठघ्नी च । हृद्यो शीतला मधुरा रसबन्धनी वस्तुका रसायन शूलघ्नी ज्वर

कृमिघ्नश्चाखुविषघ्नी च। वै निघ। राज। सि यो क्रमि चि क्रमिघ्नपूपिकायां श्लोकए।

**आखुगन्धो**। स्त्री। कर्पूरहरिद्रायां। वै निघ।

**आखुजित्**। स्त्री। भूम्यामलक्याम्।

**आखुपर्णा (र्णिका) (र्णी)**। स्त्री। स्थूल मूषिककर्णी। बड़ इन्दूरकाणी। क्षि मूषाकाणी वा उन्दुरकर्नी। रत्ना। द्रवन्त्यां। क्षुद्र दन्ती। लघुदन्त्यां। काल दन्ती। रमा। वृहद्दन्त्याम्। भा पू १भ। मण्डूकपर्ण्याम् (थुलकुड़ि)। च द क्रमि चि।

**आखुपाषाण (क)**। पु। A kind of mineral, loadstone लौहचुम्बुके। चूमुक पाथर। आखुपाषाणनामाऽय लौहसङ्करकारक। रा नि व १३ गुणा—स्निग्ध पारदस्य नियामक। लौहभेदकरश्चैव वीर्य्यकृत् कान्तिवर्द्धन। त्रिदोषमध्य व्याधीनां नाशक परिकीर्त्तित। अशुद्ध स तु विज्ञेय सप्तधातुविनाशकृत्। दाह पित्तभयश्चैव लालास्राव तथा स्मृति। अनेकवेदनाश्चैव बहु व्याधि तथा तथा। कर्गीयती मूर्खहस्ते न दातव्य कदाचन। तत्समीपे नैव वाच्य प्राणघातकरो ह्यसौ॥ वै निघ।

**आखुफला**। स्त्री। इन्द्रदन्त्याम्। वै निघ।

**आखुभुक्**। पु। रक्तापामार्गे। विडाले। मद व १२। [मूषिक।

**आखुमांसम्**। क्ली। मूषिकमांसे। See

**आखुविषम्**। क्ली। दारुमीचे। दांतमुङ्ग। पमु।

**आखुविषजित्**। पु। सप्तपर्णवृचे।

**आखुविषहा (पापहा)**। पु। देवताड़ वृचे। पमु। पीतदेवदालीलतायां। रा नि व ३।

**आखुश्रुति**। स्त्री। क्षुद्रमूषिककर्ण्यां। छोट इन्दुरकाणी। रा नि व ३।

**आखेट (क)**। पु। मृगयायां। अम। श र।

**आखेटशीर्षक**। क्ली। कुट्टिमदे। गुडण्ड।

**आखोट (ड)**। पु। अक्षोटवृक्ष। आख्रोट। रा नि व ११। See अखोट।

**आखोटक**। पु। मृग्याकुशल कुकुर। शिकारी कुकुर। सन्धान—विड्कद्। रा।

**आगति**। स्त्री। सन्धानी। सा नि।

**आगन्तु (क)**। त्रि। आगमनशीले। अम।

**आगन्तुकज्वर**। पु। अभिघाताद्युत्पन्ने ज्वरे। "एव गणित आगन्तुज इति। आगन्तुजशब्दे नाभि घातादयो हेतव उच्यन्ते। कृतविद्याधय कार्य्य कारणयोरभेदोपचारादागन्तुजा अभिघातायनेक कारणयोगादनेके भवन्ति। तथाप्यागन्तुजत्वेन साम्यादागन्तुकोऽप्यकेक एव गणित। अभिघाता भिषङ्गाध्यासभिचाराभिशापत। आगन्तुर्जायते दोषैर्यथा स्व त विभावयेत्॥ ये भूतविषवायुग्नि चतभङ्गादिसम्भवा। रागद्वेषभयाद्यश्च ते स्यु राग न्तवी गदा॥ भा म १भ ज्व चि। आगन्तुर्हि व्यथापूर्व्वो जायते पश्चान्निजैर्दोषैरनुबध्यते इति। चर।

**आगन्तुव्रण**। पु। सद्योव्रणे।

**आगम**। पु। शास्त्रे। "आगमनादागम शास्त्रम्।" सु स ४०अ।

**आगमावर्त्ता**। स्त्री। हयिकालीतृणे। विछाति गाछ। रा नि व ४। क्षुद्रसेपद्गङ्गाम्। वै निघ।

**आगस्त्यम्**। क्ली। वकपुष्पे।

**आगारम्**। क्ली। गृह। कुटी। [सु चि १भ।

**आगारगोधिका**। स्त्री। गृहगोधिकायां।

**आगारधूम**। पु। गृहधूम। झुल। वै निघ २भ था व्या लक्षुनतायाम्।

**आगारधूमाद्यतैलम्**। क्ली। उपदंश हितं। गृहधूम १भ हरिद्रा २भ सुराकिट (मदेर छाँको) २भ एभि पलचय तैल पचेत्। च द उ द चि। [वामुनहा टी। सु चि १भ।

**आगारलोमिका**। स्त्री। गृहलोमिकायां।

**आग्नेयम्**। क्ली। सुवर्ण। रा नि व १३। एन। पाणिनि। रक्ते। इ प। पु। वासायां। वै निघ ज्व लाधातक। त्रि। दिपनीदीपक, क्षुधाजनने। सद्य कटुम्ललवणम्। सु सू।

**आग्नेयवायु**। पु। अग्निकोणस्थसमीरण। अग्निकोणस्थ वायु। "वातिपत्ताकरकृद्य।" भा।

**आग्नेयी**। स्त्री। यमज्य रक्तमूषककध्यायाम्। "पञ्चाराग्निका धवमाग्नेयी परिकीर्त्तिता।" श द।

**आघमाम**। पु। चिचकवृक्षे। [अम।

**आघट्टायणिक**। पु। [illegible]

**आघट्टक**। पु। रक्तापामार्गवृक्ष। रा नि व ४।

**आघाटः** । पुं । अपामार्गे । रा नि व ४ ।
**आघातः** । पुं । हनने । छेदने । চোট্ লাগা ।
**आघातज्वर'** । पु । अभिघातजन्यज्वरे । See आगन्तुकज्वर ।
**आघार.** । पु । घृत । घृता ।
**आघ्राणम्** । क्ली । नासया घ्राणग्रहणे । শোঁকা। तृप्ता । हेच ।
**आघ्रातः** । त्रि । शिङ्घिते । मे । तृप्ते । हेच ।
**आङ्गम्** । त्रि । कोमलाङ्गे । त्रिका ।
**आङ्गारम्** । क्ली । अङ्गारसमूहे । शब्दरत्ना ।
**आङ्गिक.** । पु । अङ्गलाहवे । रा नि व ११ ।
**आङ्गुष्ठि'** । स्त्री । अङ्गुरीयके । আংটী ।
**आचः** । पु । आम्रातक पुष्पवृक्षे ।
**आचमनम्** । क्ली । शौविरे । वाला । भोजनान्त मुखक्षालने । আচান । मद व ३ ।
**आचमनक.** । पु । निष्ठीवनपात्रे । পিক্‌দানি, ডাবর ।
**आचान्त.** । त्रि । कृताचमने ।
**आचाम** । पु । आचमने । श र । भक्तमण्डे । रत्ना ।
**आचामनक** । पु । कटकोले । পিক্‌দানি । तत्पर्याय,—प्रोगण कटकोल पतद्ग्रह (हा)। हारा ।
**आचार** । पु । सदाचरणे । 'म ौ सद्भि सम कुर्यात्‌ सेह सत्सु च सर्व्वथा । सत्सर्गं साधुभि कुर्य्या दित्यादि ।" भा ।
**आचारी** । स्त्री । हिलमोचिकायाम् । হিঞ্চে शाक । हुरहुर इति लोके । गुण —शोथकुष्ठ कफपित्तघ्नी । भा पू १भ ।
**आचितम्** । क्ली । दशभारमितमानविशेषे । २८ मण । अम । ग्रथितपत्रे । "पलानामयुतद्वये । म तत्विक ।
**'आचु'** । पु । आच्छुकवृक्षे । আচকুলের গাছ । शेष कन्दर्पसारतैन । [ र मा
**आच्छुका** । पु । रक्तकद्रुमे । আচকুলের গাছ ।
**आच्छाद** । पु । वस्त्रे । কাপড ।
**'आच्छादनम्** । क्ली । कापासे । वस्त्रे । रत्ना । पिधाने । मे नचतुष्क ।
**आच्छादनफला** । स्त्री । रक्तकार्पासी ।
**आच्छादनी** । स्त्री । कार्पासाम् ।
**आच्छुकः** । पु । (Morinda tetrofolia, and morinda citrifolia, and morinda tinctoria) स्वनामख्याततरुवे । আচ্, আউচ গাছ । हि आल । र मा ।
**आच्छोदनम्** । क्ली । मृगयायाम् । अम ।
**आजम् (कम्)** । क्ली । घृते । लटा । छाग घृते । च वि र पि ।
**आजनवनीतम्** । क्ली । छागदुग्धजातनवनीते । गुणा —मधुर कषाय विदाहघ्न चक्षुष्य दीपन वल्यश्च । रा नि व १५ । नवीत्य नवनीत वय कासघ्न वल्य नेत्ररोगघ्न कफघ्न दीपनञ्च । अत्रि म्म । See छागनवनीतम ।
**आजम्भसुरभिपत्रः (त्रा)** । पु,स्त्री । मरुवक वृक्षे । গন্ধতুলসী । नागदना इति च लोके । रा नि व १० ।
**आजमूत्रम्** । क्ली । छागमूत्रे । मद व ८ ।
**आजरस** । पु । छागमासक्काथे । च द यक्ष्म ।
**आजवल्ल** । पु । वनतुलस्याम् । বনতুলসী । हि श्वेतबर्बरी । म राणतुलसभेद । प्रा आजवला । गुणा —'आजवल्ल कटुष्णोष्ण शीतो दाहकर प्रिय । रुची रुच्यो दीपक स्याल्लघु पाके च पित्तल । तिक्तश्च मधुरश्चैव सुखप्रसवकारक । व्रणो वातहरश्चैव कफनेत्रजापह । मूत्रकृच्छ्रारुचिविषं कामलाकुम्भकामला । आनाहवातशूलाग्निमान्द्य कण्ठिपरुक्रिमीन् । रक्तदोषश्वासकासदद्रुकृत्याश्च कृग्‌ ज्वरान् । कण्डूकुष्ठवमीश्चैव नाशयेदिति कीर्त्तित । सुगन्धाजवल्ल प्रोक्त कटुशीतश्च तन्मितत् । सुगन्ध पित्तकृद्विद्राजनको वान्तिवातनुत । गृह्यबाधा पार्श्वशूल कासश्वास कफाञ्जयेत् । शोथश्चाङ्गस्य दौर्गन्ध्य नाशयेदिति कीर्त्तित ॥' वै निघ ।
**आजक्षीरम्** । स्त्री । छागदुग्धे । गुणा —छाग तुल्यगुण ग्राही दीपन लघु क्षयशोषातीसारप्रदरार्श भगन्दरघ्न । एतच्च दुग्ध सर्व्वरोगघ्नम् । मद व ८ । छाग कषाय मधुरञ्च शीत ग्राहि लघु, पित्त क्षयापहारि । कासज्वराणा रुधिरातिसारे हित पयश्छागनज त्रिदोषजित् । अत्रि म्म । वा टी. रैमा ।
**आजानेय** । पु । कुलीनाश्वे । हेच । तद्गुण

—"শক্তিভিন্নহৃদয়া স্খলন্তোঽপি পদে পদে। আজানন্তি যত সত্ত্বামাজানেয়াস্তত স্মৃতা।' শালিহোত্র।

**আজ্যম্।** ক্লী। ঘৃতে। রা নি ব ৭। শ্রীবাসে। টার্পিন তৈল ইতি কথিত। শব্দকল্প।

**আঞ্জিনেয়।** পু। জন্তুবিশেষে। আজ্নাই, আঞ্জুনি। শ মা।

**আটরূষ** } পু। (Justicia adhatoda Adhatoda
**আটরূষ (ষক)** } vasica) বাসকক্ষুপে। ছোট বাসক, বড় বাসক বা বাসক্তী। হি অরুষা। ম অডুলসা। রা নি ব ৪। ভা পূ ১ভ। সি যো র পি চি সশ্রম যোগে। "আটরূষকনির্যূহে।" 'রাজবৃক্ষাটরূষকে।" সি যো জ্বরে। See বাসক।

**আটি (ঠী)।** পু স্ত্রী। (Turdus ginginianus) শরারিপক্ষিণি। শরাল পাখি। ম বগলীপক্ষীণ। মদ ব ১৩। See আড়ী।

**আটীকর।** পু। বৃষে। বৈ নিঘ।

**আঠীসুখম্ (বদনম্)।** ক্লী। ব্রণবিস্রাবণায় অস্ত্রবিশেষে। স মূ স্ক। শরারিচঞ্চুবদাকারত্বাত্ তথাভিধীয়তে। 'কুশাটীবদনে সাধ্যে দ্ব্যঙ্গুল স্যাদযী ফলম্।" অবি।

**আটোপ।** পু। উদরমধ্যে সবেদনগুড়গুড়াশব্দে। স চ বায়ুজন্যো ভবতি। মা নি। 'আটোপো গুড়গুড়াশব্দ প্রোক্তো জঠরসম্ভব।" ভা।

**আডম্বর।** পু। Eyelid নেত্রচ্ছদ। চ'খের পাতা।

**আডি।** পু। শরারিপক্ষিণি। শরাল পাখী। মদ ব ১২। মৎস্যবিশেষ। আড মাছ। গুণা—গুরু স্নিগ্ধ বাতশ্লেষ্মকোপন বলকর শুক্রমেধাবিবর্দ্ধক। রাজ।

**আডিকা (ডী) (ডীকা)।** স্ত্রী। শরালিপক্ষিণি। মদ ব ১২। গুণা—"আডী বাতবিকারকাসহননী বল্যা তথা দীপনী।' অবি ২২অ।

**আঢক।** পু ক্লী। শমীধান্যবিশেষে। অরহর। হি টোর। প মু। অষ্টশরাবমিত ধান্যমানবিশেষে। আড়ি। মং পায়লী। প্রস্থচতুষ্টয়ে। "চতুপ্রস্থমথাঢকম্ পুষ্কমচতুষ্টয়মিত মানে। দৃষ্টমানি তু চত্বারি আঢক পরিকীর্তিত। তত্পর্য্যায় —ভাজন পাত্র কাংস্যপাত্র চতুষষ্টিপলম্ ভা)।

**আঢকা।** স্ত্রী। সুরাষ্ট্রজ আঢকীবিশেষে। টুবুর। তত্পর্য্যায়—কক্ষোদ্ভবা। দ্রবদ্রোণচতুর্থ ভাগে (৮ বা ৬ সের)। See আঢকী।

**আঢকিক (কীন)।** ত্রি। আঢকমিত বপনযোগ্যক্ষেত্রে। অম।

**আঢকিকা।** স্ত্রী। আডক্যা। বৈ নিঘ।

**আঢকী।** স্ত্রী। (Cajanus indicus, syn cytisus cajan) শিম্বীধান্যবিশেষে। অড়র, আইরি। হি রহর, টর তুবরী, তুমর। তিমা। তত্পর্য্যায়,—তুবরীবৃক্ষা করবীরভুজা বৃত্তবীজা পীতপুষ্পা (রা) মৃত্তাল (শব্দর), কাক্ষী মৃত্স্না তুবরিকা মৃতালক সুরাষ্ট্রজ (অ),মৃত্তালক (অ টী)। সা শ্বেতরক্তপীতভেদাত্ত্রিধা। তত্র সাধারণ্যাঢকীগুণা —কষায়া মধুরা কফপিত্তজিত্ ঈষদ্বাতকরী রুচ্যা গুরু গ্রাহিণী চ। ইতি বিদলাঢকীগুণা। রা নি ব ১৬। "আঢকী তুবরা রুক্ষা মধুরা শীতলা লঘু। গ্রাহিণী বাতজননী বর্ণ্যা পিত্তকফাস্রজিত।" ভা পূ ১ভ। "মৃদু কষায়া চ সরক্তপিত্ত ক্ষত কফ হন্তি সুখব্রণঞ্চ। গুল্মজ্বরারোচককাসহৃদ্‌দ্রোগদুর্নামহরারবী স্যাত"। অবি ১১অ। শ্বেতাঢকী দীপকরী। রক্তা—বল্যা রুচ্যা পিত্ততাপঘ্নী চ। পীতা—দীপনী পিত্তদাহঘ্নী চ। রা নি ব ১৬। পরিমাণভেদে। আড়ি। মে কতিক। সৌরাষ্ট্রমৃত্তিকায়াম্। হে চ। গোপীচন্দনে। তন্নামকগন্ধদ্রব্যে। অ টী।

**আঢকীযূষ।** পু ক্লী। তুবরীযূষে। অড়রের ঝোল। গুণা—বল্যম্। রা নি ব ১৬। "ভবেদাঢক্যা মধুরশ্চ যূষ বিশোষণ বাতনিবারণশ্চ। শ্লেষ্মাপহং পিত্তহরং নরাণাম্।' অবি ১৩অ। [হরিদ্রাদৌ।

**আঢ্যপবন।** পু। ঊরুস্তম্ভরোগে, বা বধা

**আঢ্যবাত।** পু। বাতরক্তে, বাতরোগভেদে। লক্ষণ—"স্তম্ভ স্নিগ্ধে মৃদু শীত গৌর্ফোঽধেষু ষদ্গুরুতয়া। আঢ্যবাত ইতি শেষ মহুক্ষা মেদসা হত। অ।

**আঢ্যা।** স্ত্রী। অজমোদায়াম্। আঞ্জুনী। বৈ নিঘ।

**आणिः**। पु, स्त्री। सप्रामवामममस्थाने। इद स्नायुमर्म। तस्य च स्थानम् जानुर्ध्वोभयपार्श्वतो ऽङ्गुलित्रयमितम्। सु शा ६अ।

**आतङ्कः**। पु। ज्वरे। रोगे। रत्ना। सन्तापे। शङ्कायाम्। मे कविक।

**आतञ्चनम्**। क्ली। तर्पणे। अम। उपद्रवे। निर्वेपे। सु प्रतीवापे।

**आतनम्**। क्ली। दर्शने।

**आतप**। पु। रौद्रे। तपन्याय,—किरण तेज (नि), रौद्र प्रकाश द्योत (ख) दिनज्योति सूर्यालोक दिनप्रभा रविप्रकाश प्रद्योत तमारि तापन द्युति। एतत्सेवन स्वेदमूर्च्छारक्तहरणा दाहश्रमकर पित्तवैवर्ण्यकरश्च। मद व १२। कटु रूक्ष नेत्ररोगप्रकोपनश्च। रा नि।

**आतपतण्डुल**। पु। असिद्धतण्डुले। आलो चाल।

**आतपत्रम् (कम्)**। क्ली। छत्रे। रत्ना।

**आतपर्णिका (र्णी)**। स्त्री। चीरिकायाम्।

**आतर्पणम्**। क्ली। तृप्तौ। मे।

**आतपशुष्क**। त्रि। रौद्रशुष्के।

**आतपाभाव**। पु। छायायाम्।

**आतापि (पी)**। पु। चिल्लपक्षिणि। चिल पक्षी। म शशमारी। हला॥

**आतायी**। पु। चिल्लपक्षिणि। चिल। अम।

**आति**। पु। शरारिपक्षिणि। इला।

**आतु**। पु। उडुपे। भेला, नाव।

**आतुर**। त्रि। रोगिणि। रा नि व २०। स्मृति निर्देशकारित्वमभीरुत्वमथापि वा। ज्ञापकत्वञ्च रोगाणामातुरस्य गुणा मता॥ भेष।

**आतृप्य**। पु। (Annona reticulata) The custard apple tree आता इति प्रसिद्धफलवृक्षे। आता गाछ। हि सरीफा। म सिताफलीचेझाड। क्ली। तत्फल। फलगुणा —तद्विपक्व रक्तवर्द्धक स्वादु शीतल हृद्य बल्य मांसकर दाहघ्न पित्तवातघ्नश्च। राज।

**आत्मगन्धक**। पु। गन्धर्वे। म रत्नावोल। वै निघ।

**आत्मगन्धिहरिद्रा**। स्त्री। कर्पूरहरिद्रायाम्। म कापूरहलदी। वै निघ।

**आत्मगुप्ता**। स्त्री। (Mucuna pruriens, Carpopogon prurieus) कपिकच्छ्वाम्। আলকুশী, মর্ক্কট, বুনাব ওড, শুয়াশিম্বী ইতি च। हि कौच। म कुहिरी। ते दुलगुडि।। गुणा —शुक्रवर्द्धनी मधुरतिक्ता मांसवर्द्धका गुरु वातघ्नी बल्या कफपित्तरक्तघ्नी च। तद्बीज—वातघ्नम् अतिशुक्रवर्द्धकञ्च। भा पू १भ मद व,१। तत् फल स्त्रीषु हर्षजनकत्वात् वाजीकरणम्। वा सू १५अ दूर्वादिव। स्वादु तथा वातघ्नी शीतपित्ता स्रगी व्रणघ्नी च। रा नि व ३। दुर्व्याननलानिलवाशा त्मगुप्ता। शतावर्याम। रा नि व २।

**आत्मग्राही**। त्रि। कुक्षिम्भरौ, स्वोदरपूरके।

**आत्मघोष (षा)**। पु, स्त्री। काके। हारा।

**आत्मज**। कुक्कुटे। श च।

**आत्मजा**। स्त्री। कन्यायाम्। शुकशिम्ब्याम्। च चि ३अ।

**आत्मनीन**। पु। पथ्ये। रा नि व ३०। पु। प्राणधारे। पुत्रे।

**आत्ममूली**। स्त्री। दुरालभाया। म धामासा। श मा।

**आत्मम्भरि**। त्रि। श्वादने। अम।

**आत्मरक्षा**। स्त्री। महेन्द्रवारुणीलतायां। बड माकाल फल लता। रा नि व ३। मद द व १।

**आत्मवत्**। त्रि। यत्नवति, धृतिमति।

**आत्माविज्ञानम्**। क्ली। योगाभ्यासममाधिना परमात्मस्वरूपविज्ञाने। वा सू १अ।

**आत्मशल्या**। स्त्री। शतावर्यां। शतमूली। रा नि व ४।

**आत्महत्या**। स्त्री। स्वेनैव स्वकीयप्राणनाशे। आत्मघाते।

**आत्मा**। पु। शरीरे। मे मतिन्। जीवे। वायौ। अग्नौ। हेच। मनसि। मे।

**आत्माशी (इन्)**। पु। मत्स्यविशेषे। त्रिका।

**आत्मोद्भवा**। क्ली। (Glycine debilis) माषपर्ण्यां। मापाणि। वनमुद्गे। रा नि व ३। कन्यायाम्।

**आत्युक**। पु। वत्से।

**आत्यूहः**। पु। Gallinule दात्यूहपक्षिणि।

**आत्रेय**। पु। An essential juice of the body शरीरस्थ रसधातौ। हे च।

**आत्रेयिका (यी)**। स्त्री। ऋतुमत्यां स्त्रियां। हला। मे यत्रिकं

**आदर्श**। पु। दर्पणे। टीकायां। प्रतिपुस्तके। मे शत्रिक।

**आदर्शमण्डल**। पु। मण्डलिजातीयसर्पविशेषे। सु कल्प ५ अ। See सर्प।

**आदानम्**। क्ली। अश्वाभ्यङ्गारविशेषे। हे च। निदाने। रोगलक्षणे। रा नि व २०।

**आदाना (नी)**। स्त्री। इक्ष्वाकोपायाम्। धुन्धुल। हि तोरोई ननुआ। व भा। भैष रत्नावलि महानीलतैले।

**आदिकारणम्**। क्ली। निदाने। श्रम।

**आदित्य**। पु। अर्कवृक्षे। श्वेताकवृक्षे। आकन्द गाछ। सूर्ये। श्रम।

**आदित्यकान्ता**। स्त्री। आदित्यभक्तायाम्। हुड़हुडिया। वै निघ

**आदित्यतेजा**। स्त्री। आदित्यभक्तायां। ब्राह्मी शाके।

**आदित्यपत्र (क) (त्रा)**। पु, स्त्री। आदित्यभक्ताभेदे। हुडहुडिया भेद। गुणा — कटु उष्णवीर्य्यं कफघ्न वातरोगघ्न दीपन जाठर गुल्मघ्न अरोचकघ्नञ्च। रा नि व ४। अर्कवृक्षे।

**आदित्यपर्णिका (नी) (र्णी)**। स्त्री। आदित्यभक्तायाम्। हुडहुडिया। तन्नामकौषधिविशेषे। वाचस्पत्ये। या सूर्य्यकान्तेति भण्यते, क्षीरस्य यस्या सुवर्णाभ, पुष्पाणि च सूर्य्यमण्डलाकाराणि। च चि १अ सु चि ३०अ। तथा सपत्त्र कोमलदलहिमाख्यपत्रमूलप्रधानक्षुपे। सूर्य्यमुखोति लोके।" अस्य लक्षण यथा— मूलिनी पत्रभिः पत्र सुरक्तामृतकोमल। आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी। आदित्यपर्णिनी ज्ञेया तथैव हि हिमचर्ये॥ सु चि ३०अ।

**आदित्यपाक (गुडूचो) तैलम्**। क्ली। एतन्नाम कुष्ठहरं। मञ्जिष्ठा लाक्षा त्रिफला हरिद्रा मन शिला हरिताल गन्धकचूर्णं समभागे तत्र पात्रम्। अत्र जल विना पाकात्पमत्त तैलसम जल दत्त्वा जलशोषपर्य्यन्त सचूर्णं तैलमातपे स्थाप्यम्। तैल १श द्रव्य।० शरावांश। च द क्षुद्ररोग चि। अपर कोशरीपत्त हितम। तैलमिदं बटाङ्कुर मञ्जिष्ठाचूर्णेन गुडूचीस्वरसेन रौद्रपक्व करणीयम्। रसर त्नाकरो चि।

**आदित्यपुष्पा**। स्त्री। धातकीपुष्पवृक्षे। धाइ फुल। चौरकाकोल्यां।

**आदित्यपुष्पिका (ष्पी)**। स्त्री। अर्कवृक्षे। लोहिताकवृक्षे। रक्ताकन्द। म अर्कपुष्पी। र म।

**आदित्यबन्धु (न्धना)**। पु स्त्री। पद्मे। मण्डोवत्त। हुडहुडे।

**आदित्यभक्ता**। स्त्री। (Cleome viscosa Polanisia icosandra) स्वनामख्यातक्षुपे। वन शल्ते हुटे, हुडहुडे इति भाषा। हि हुलहुल। म सूर्य फुलवल्ली। आदिता आदित्यभक्ति इति च दृश्यविशेषभाषा। तत्पर्य्याय —वरदा अर्कभक्ता सुवर्चला सूर्य्यलता सूर्य्यावर्त्ता अर्ककान्ता मण्डूकपर्णी सुरमम्भवा सौरि भूतजा अर्कहिता वरिष्ठा मण्डूकी मतनामा देवी मार्त्तण्डवल्लभा विक्रान्ता भास्करेष्टा। सा श्वेतपीतभेदेन द्विधा। गुणा —शीतला तिक्ता कटु कफघ्नी लम्पीपकण्ड व्रण कुष्ठ भूतग्रह शीतज्वरघ्नी च। रा नि व ४। तथा स्वादुपाकरसत्व गुरुत्व क्षारसत्व अपित्तवहत्व विष्टम्भित्व वातहरत्वञ्च। कण्डूशूलघ्नी च द। हिमा रुक्षा स्वादुपाका सरा गुरु कटु रपित्तला क्षारा विष्टम्भकफवातघ्नी। अपरा च तिक्ता कषाया उष्णा सरा रुक्षा नत्र कटु कफपित्तरक्तश्वासकासरुचिज्वरघ्नी। विस्फोटकुष्ठमेहाश्मरीनिरोगकृमिपाण्डुघ्नी च। भा।

**आदित्यवल्लभा (ल्लिका) (ल्ली)**। स्त्री। आदित्यभक्तायाम्। व निघ।

**आदिबलप्रवृत्त**। त्रि। शुक्रशोणितान्वयजे। ये रोगा शुक्रशोणितान्वया कुष्ठार्शःप्रभृतय। तेऽपि पुनर्द्विविधा मातृजा पितृजाश्चेति। सु सू २४अ। ए र आध्यात्मिका इति कथ्यन्ते।

**आदिमा**। स्त्री। भूमौ।

**आदिरुच**। पु। अम्लकवृक्षे। मं आपटा। वै निघ।

**आदीनव**। पु। दोषे। क्लेशे। क्लेशे। श्रम।

**आद्य.** । पुं । मकुष्टे । रसा । क्ली । धान्ये । रा नि व १८ । त्रि । मलयोग्यद्रव्य ।

**आद्यधातु'** । पु । शरीरस्थरसधातौ । वै निघ ।

**आद्यपुष्पम्** । क्ली । त्रिभागकुङ्कुमोपेतरक्तविर चन्दने । "त्रिभागकुङ्कुमोपेत तदुक्ताद्यपुष्पकम् ।" रा नि व २२ ।

**आद्यमाषक** । पु । पञ्चगुञ्जापरिमितमाष मासे । ५ रति । अम । ८० गुञ्जायां । वै निघ ।

**आद्यमाषा** । स्त्री । माषपर्णीलितायाम् । मासानि ।

**आद्या** । स्त्री । भूमौ । वै निघ ।

**आद्यून.** । त्रि । औदरीके । अम ।

**आर्द्र (कम्)** । क्ली । ( Zingiber officinale ) Common ginger मूलविशेषे । आदा । हि अदरख् । ते अल्लम । गुणा —"कफ वातघ्न सरकर विबन्धानाहशूलघ्न कटूष्ण रुच्य हृद्य व्यस ।" सु म ४५ष्ठ । पु । गलमार्जार ।

**आधमनम्** । क्ली । स्फीतौ ।

**आधानम्** । क्ली । गर्भाधाने । [का ।

**आधानिकम्** । क्ली । गर्भधारणसंस्कारे । ब्रि

**आधार.** । पु । अधिकरणे । आलवाले । मे ।

**आधि** । पुं । मनोव्यथायां । प्रत्याशायां । मे ।

**आधिदैविक** । त्रि । दैवताधिकृते ।

**आधिभोग** । पु । अश्वगवादुपभोगे ।

**आधिभौतिक** । त्रि । चित्यादिसम्भूते ।

**आधिमन्थव** । पु । ज्वराग्नौ । हारा ।

**आधिग्रमी** । स्त्री । ग्रमीभेदे । वै निघ ।

**आधोरण** पु प । हस्तिपके । हला ।

**आध्मात:** । पु । वायुरोगभेदे । मे तविक । क्ली । उदरस्फीतौ । च द अग्निमा चि पथ्याविक । त्रि । दग्धे । स्फीत ।

**आध्मान** । पु,क्ली । वातव्याधिविशेषे । आनाह उदरस्फीतौ । (पेट फाँपा । स्वरूप यथा— साटोपमत्युग्ररुजमाध्मातमुदर भृशम् । आध्मान मानीयात् घोर वातनिरोधजम् । आध्माने मित [illegible] दीपन पाचन तत । फलवर्त्तिक्रिया छन्न पुच्छे [illegible] च शोधनम् ॥ सु नि १भ । कुर्यात्वस्तिकर्म

**आध्मानी** । स्त्री । नलिकानामगन्धद्रव्ये । रा नि व १२ ।

**आध्या (नम्)** । स्त्री, क्ली । स्मृतौ । चिन्तायाम् । अम श र ।

**आध्यात्मिक:** । त्रि । आत्मसम्बन्धीय ।

**आन:** । पुं । अन्तर्मुखश्वासे । उच्छ्वासे । बहि मुखश्वासे । हे च । [भा ।

**आनन्द.** । पु । सम्मदे । मद्ये । राजजम्बूवृक्षे ।

**आनन्दपटम्** । क्ली । नवोढावस्त्रे । हारा ।

**आनन्दप्रभवम्** । क्ली । रेतसि । वीर्ये । हे च

**आनन्दभैरव.** । पु । शीताङ्गसन्निपाते रस । व्योषं त्रिकटु, पिप्पल्या मरिचस्य च पृथग्भागद्वयम् ग्राह्यम् । "हिङ्गुलश्च विष व्योष मरिच टङ्कण तथा । जातीकोषं सम चूर्ण जम्बीरद्रवमर्द्दितम् । रक्तिमानां वटीं कुर्यात् ।' द्वितीय ज्वराति सारे । "हिङ्गुलश्च विष व्योष टङ्कण गन्धक समं । जम्बीररससंयुक्त मर्द्दयेद्यामकद्वयम् ॥" भावा १२ । तृतीय प्रमेहाधिकारे । अत्र रस पारदभस्म । "वङ्गभस्म मृत स्वर्ण रस चौरे विमर्द्दयेत् । हिगुञ्ज भक्षयेन्नित्यम् ।" र सा स ।

**आनन्दभैरवी (वटी)** । स्त्री । शीताङ्गसन्नि पाते रस । हिङ्गुल विषं त्रिकटु मरिच टङ्कण (সোহাগা) पिप्पली जातीकोष (জয়িত্রী) द्रव्याणि समभागानि । विष त्रिकटुकं गन्ध टङ्कण मृत शुल्वकं । धुस्तूरस्य च बीजानि हिङ्गुल नवम घृतम् । एतानि समभागानि दिनैक विजयाद्रव मर्द्दयेत् चणकाभान्तु वटीमानन्दभैरवीं । भक्षयेच पिबेत्तानु वटीमूलकषायक ॥" र सा स ।

**आनन्दमयकोष** । पु । कारणशरीरे । सुषुप्तौ ।

**आनन्दा** । स्त्री । विजयायां । सिद्धि । हि भाङ् । वार्षिकीपुष्पवृक्षे । (বেলফুল । हि बेला । भा पू १भ पुव । आरामशीतलायाम् । रा नि व १० । मुद्गपर्ण्याम् । वै निघ ।

**आनन्दी** । स्त्री । আকন্দ পাতা इति प्रसिद्ध वृक्षे । श च । आरामशीतलायाम् । रा नि व १० ।

**आनन्दोदयरस'** । पु । पाण्डुरोगे रस । "पारद गन्धक लौहसमक विषमेव च । समांश मरिच चाष्ट टङ्कणश्च चतुर्गुणम् । भृङ्गराजस्य

ख भावनायाम्लदाड़िमे। गुञ्जादय पञ खण्डे खादेत्पाय।" भैष पाण्डु चि।

**आननम्** । क्ली। मुखे। रा नि व १८।

**आनय** । पु। उपनयने।

**आनर्त्त** । पु। जले। मे तत्रिक।

**आनाखु** । पु। इन्दुतुल्यायाम्। प गु।

**आनाह** । पु। विण्मूत्ररोधकव्याधौ। मूर्द्धो। तस्य लक्षण—"आम शकृद्वा निचित क्रमेण भूयो विबद्ध विगुणानिलेन। प्रवर्त्तमान न यथास्वमेन विकारमानाहमुदाहरन्ति।' भा। मा नि।

**आनील** । पु। नीलवर्णाश्वे। रङ्गे। म कथिल। हेंच। वि। ईषन्नीलवर्णे।

**आनुलोमन** । वि। अनुलोमकारिणि। च द अर्श चि।

**आनुलोम्यम्** । क्ली। सारल्ये। च द अश।

**आनुवासनिकम्** । क्ली। अनुवासनवस्तौ। च चि३अ। See अनुवासनवस्ति।

**आनूप** । पु। महिषे। जटा। अनारस इति ख्यात वृक्ष। हिज्जलवृक्षे। (हिज्जलगाछ। प मु। अनूपदेशवासिप्राणिमात्रे। देशविशेषे। क्ली। भौम जलविशेषे। तन्निरुक्तिगुणा——रहस्नुबहूदकश्च वातश्लेष्मामयान्वित। देशोऽनूप इति ख्यात आनूप तद्भव जलम्॥ इति। See अनूप।जले। रा नि व १४। See जलम्।

**आनूपजलम्** । क्ली। अनूपदेशस्थजले। तद्गुणा—स्वादु स्निग्ध गुरु पित्तहर पामाकण्डूवात कफज्वरकरञ्च। रा नि व १४।

**आनूप-जाङ्गल-साधारणमासम्** । क्ली। रुरु हरिण मृगक्रोड़ सारङ्गाणा मांसेषु। तच्च लघु स्वादु बल्य हृद्य कषायञ्च। रा नि व १७।

**आनूपपक्षिमासम्** । क्ली। सारसहसचक्र वाकादिमांसे। गुणा —शीतल स्निग्ध वात कफघ्न गुरुच। रा नि व १७।

**आनूपभूमि** । स्त्री। सजलभूमौ। See अनूप।

**आनूपमासम्** । क्ली। कूलेचर प्लव कोशस्थ पादिमत्स्याणां मांसेषु। त च गवय रुरु वराहक्रोड़ गण्डकादय। रा नि व १७। गुणा—मधुर स्निग्ध गुरु अग्निमान्द्यकर कफकर मासपोषक अभिष्यन्दि प्रायेण हितञ्च। भा पू १भ। सि यो वा व्या शाल्मण स्वेद।

**आनूपवर्ग** । पु। तद्देशस्थप्राणिवर्गे। आनूप वर्गस्तु पञ्चविध। तद्यथा—कूलचरा प्लवा कोशस्था पादिनो मत्स्याश्चेति। तत्र गजगवयादय कूलचरा पशव। तन्मास वातहर हृद्य मधुर मित्यादिगुणयुक्तम्। हसमारसादय प्लवा सङ्घात-चारिणश्च—तन्मांस रक्तपित्तादिहरम्। शङ्ख शङ्खनखादय कोशस्था—तन्मास स्वादुरसपाक त्वादिगुणम्। कूर्मकुम्भीरादय पादिनश्च। सु सू ४६अ। आनूपामिषु विज्ञेया श्लेष्मला वात कोपना। अवि २०अ।

**आन्तरि (री) क्षजलम्** । क्ली। आकाश सलिले। तच्चतुर्विध भवति धार कार तौषार हैम भेदात्। तेषु धार वर्षोद्भव, वर्षोपलोद्भव कारम्, नीहारतोय तौषार तथा प्रातर्हिमोद्भव हैममिति। धारमपि द्विविध सामुद्रगाङ्गभेदात्—तयोर्गाङ्ग गुणाढ्यमदोष पाचमञ्च। तदुक्त आश्विने स्वाति विशाखस्थे रवौ मेघो यद्वर्षति वारि तद्गाङ्ग, तथा मार्गशीर्षादिनक्षत्रेषु मेघो यद्वर्षति तोय तत्सामुद्र ज्ञेयम। तत्परीक्षा दधिलिप्ते रौप्यपात्रे शाल्यो दनपिण्ड विन्यस्य वर्षायां धृत न विकारमेति मुहूर्त्तेन तदा गाङ्ग ज्ञेयम्। तच्च जल गाङ्ग स्वादु शीतल रुचिप्रद कफ पित्तघ्न निर्दोष स्वच्छ लघु नित्यगुणाधिकञ्च। तथा सामुद्रजल शीत गुरु कफवातकर। यथा चित्रानक्षत्रे पतित तद्गुणाढ्य गाङ्गवद्भवति, तथोभयविधमेव वारि रसाश्रय वशाद्भुवि पतित नानारसत्व याति। रा नि व १४। See गगनाम्बु।

**आन्त्रम्** । क्ली। अन्त्रे।

**आन्त्रिक** । वि। अन्त्रसम्बन्धीये।

**आन्दोलनम्** । क्ली। कम्पे।

**आन्धसिक** । वि। पाचके। अम।

**आन्ध्रदेशपूगभ** । क्ली। तद्देशीयपूगफले। गुणा—पाके मधुर किञ्चिदम्ल तुवर वातकफघ्न मुखजाड्यकरञ्च। वै निघ।

**आप** । (स) क्ली। जलसमूहे। पु। अष्टवसु तर्म। स्त्री। वामर्के। वार्त्ता। अम।

**आपक्कम्।** त्रि। इयत्पक्वे कालायादौ। अम। गोटिका इति कश्चित्।

**आपगाजल (वारि) (सलिलम्)।** क्ली। नदीजले। गुणा—"नादयं दीपन रुच वातम ल।" लिखन"। मदव८। See नदी।

**आपणः।** पु। हट्टे। पण्यविक्रयस्थाने। अम।

**आपतिक.।** पु। श्येनपक्षिणि। बाजपक्षी।

**आपनम्।** क्ली। मरिचे। श च।

**आपनिका'।** पु। इन्द्रनीलमणौ।

**आपन्नसत्वा।** स्त्री। गर्भवतीनाम्नि। रा नि व१८।

**आपस्तम्भिनी।** स्त्री। लिङ्गिनीलतायाम्। रा नि व३।

**आपाक।** पु। पायान् इति कुम्भकारस्य आर्द्र शुष्कमृत्पात्रदाहस्थाने। जटा।

**आपानम्।** क्ली। पानभूमौ। हला।

**आपालि.।** पु। केशकीटे। उकुण। अम।

**आपिञ्जरम्।** क्ली। स्वर्णे। सोणा। रा नि व१३।

**आपीत।** पु। तूणीवृक्षे। तूँद गाछ। गुणा—कटु कषायो मधुर लघु तिक्त ग्राही हिमो उष्ण व्रण कुष्ठ रक्तपित्तघ्न। भा पू १भ। क्ली। रौप्यमाक्षिकधातौ। स्वर्णमाक्षिके। रा नि व१३। पद्मकेशरे। मद व३।

**आपीनम्।** क्ली। ऊधसि। हला। सुवर्ण कुप्याम्। सोणाभूयी। अम। पु। कूपे।

**आपुप' (पूप)।** पु। पिष्टके। रत्ना। आनूपजन्तुमांसे। राज।

**आपूप्य।** पु। शष्कुले। चूर्णके। छातु, गन्धर्वा वेशन्। विका।

**आपूर्य्यमाण।** पु। शुक्लपक्ष।

**आपूपम्।** क्ली। रक्ते। दा, अज। रा नि व१३।

**आम।** त्रि। विद्रमवाचि। "कम्मभीषा निगुणा सर्पोन्नानदर्भन ये। यैषा विकालमभान आमसंज्ञाहर्त सदा। आमा शिष्टा वियुधान स्वां यार.मामयम्॥" चर।

**आमा।** स्त्री। अटायाम्। हारा।

**आप्यम्।** क्ली। कुष्ठौषधौ। कुड। कटौ। भा पू १भ। त्रि। जलविकारजे फेनादौ।

**आप्यायनम्।** क्ली। तर्पणे। प्रीणने। रा नि।

**आप्ल(प्ला)व. (प्लुतम्)।** पु, क्ली। स्नाने। अम। है च।

**आफिङ्गम्।** क्ली। अहिफेने। श चि।

**आफोनम्।** क्ली। अहिफेन। वै निघ।

**आफु(फू) कम्।** क्ली। अहिफेने। आफिम। भा पू १भ।

**आवाधा।** स्त्री। पीडायाम्।

**आब्दिका।** स्त्री। तिन्तिड्याम्। श र।

**आभा।** स्त्री। बब्बूले। बावला। म बाभूल। भा पू १भ टादिव। च द भग्न चि वा व्या एरुड पाके। २१ विकाराल चि। महाशतावर्य्याम्। See बर्बूर।

**आभागुग्गुलु'।** पु। भग्नाधिकारे, भग्नसन्धाने च हितकर। आभावब्बूलि। बावला। "आभा फलत्रिकव्योष सर्व्वैरेभि समीकृतै। तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधक॥ च द भग्न चि।

**आभोलम्।** क्ली। शरीरपीडायाम्। वै निघ।

**आम।** पु। व्याधिभाजे। मे। मनवैषम्यरोगे। रा नि व२०। अपक्वान्नजरसे। सियी चजी चि हन्। तल्लक्षण यथा—"आहारस्य रस सारो यो न पक्वोऽग्निलाघवात्। आमसंज्ञा स लभते बहुव्याधिसमाश्रय। आममन्नरस केचित् केचित्तु मलसञ्चयम्। प्रथमा दोषदुष्टि वा केचिदामं प्रचक्षते॥ ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्। दुष्टमामाशयगत रसमामं प्रचक्षते॥" इति। चिन्तर। षट्प्रकाराजीर्णरोगेषु। See अजीर्णम्।

**आमक।** पु। कषायके।

**आमगन्धि।** त्रि। विसगन्धयुक्ते। आँम्टे गन्धयुक्त। अम।

**आमगन्धिहरिद्रा।** स्त्री। (Curcuma reclinata) आम आदा। हि आमहलदी। वै निघ।

**आमघ्नी।** स्त्री। कटुतुम्ब्याम्। रा नि व६।

**आमचनक'।** पु। अपक्वचणके। कैंचा छोला। मे कचे आद चीनहरभरे। क रहिला

उष्णविदग्धदृष्टि । पु । दृष्टिगतरोगविशेषे ।

उष्णवीर्य्य । पु । शिशुमारे । दि च । क्ली । कटङ्कट्याप्रयधन्ते । गुणा —"लघु कफवातघ्न पित्त कर ह्यं मलवङ्गानिस्वेददाहपाकतां करोति । सु स ४१ च । दि । तीक्ष्णवीर्य्ये ।

उष्णसुन्दर । पु, क्ली । विभीतकवृक्षे । विभीतके ।

उष्णस्निग्ध । दि । तत् यथातथं वस्तु । सु सू ४१ च ।

उष्णा(ष्मा) । स्त्री । क्षयरोगे । सन्ता- । पित्ते । वै निघ । रा नि व २० ।

उष्णा(भि)गम । पु । ग्रीष्मकाल । षम ।

उष्णाङ्गलम् । क्ली । पित्तजज्वरोगे ।

उष्णाम्लम् । क्ली । उष्णमके । See अम्लम् ।

उष्णाम्बु । क्ली । सुखोदके । "उष्णाम्बु च सुखोदकम् ।" प प्र १ख । See उष्णोदकम् ।

उष्णासह । पु । शरत्काले ।

उष्णिका । स्त्री । यवागवाम् । यांडे । रस्ना ।

उष्णीष । पु, क्ली । शिरस्त्राणे । पागड़ी । धि पाग । धारणगुणा —शुचिद कैश्य रजोवातातप घ्नश्च । मद व १२ । चतुष्पमायुर्वेदकल्प शीतीष्णादि निवारणश्च । राज ।

उष्णोदकम् । क्ली । अष्टमांशावशिष्टे, चतु र्भागावशिष्टे, अर्द्धशिष्टे वा पक्वजले । प प्र १ख । तच्च त्रिविधं पादहीनार्द्धहीनत्रिभागहीनत्वात् । "तत्पादहीन वातघ्नमर्द्धहीनन्तु पित्तजुत् । कफघ्न पादशेषस्य पानीय लघु दीपनम् ॥" पादहीन हेमन्ते पादार्द्धोन शरदि, तदार्द्धावशेषित प्रावृड् वसन्तग्रीष्मेषु हित पथ्यञ्च । विशेषा स्वस्थपथ्यायपु सम्या । गुणा —सदापथ्य कासज्वरविबन्धकफ वातघ्न दीपन वस्तिशोधनञ्च । रात्रौ तत्र श्लेष्मघ्न वातकर्षिल अजीर्णजारकत्वञ्च । दिवातप्त वारि नक्त जाड्य गच्छति अतस्तन्न रात्रौ पेय । एव रात्रि ततमपि दिवा गुरु स्यात् अतस्तदपि दिवा न पेयं । सदात्वमध तत जल सग्य पेयम् । रा नि व १४ । "कफमदोऽनिलामघ्न दीपन वस्तिशोधन । श्वास कासज्वरहर पथ्यमुष्णोदक सदा ॥ यत् क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु । चतुर्भागावशेषन्तु तत्तोयं गुणवत् स्मृतम् ॥ नच पर्युषित देयं कदा चिद् वारि जानता । अम्लीभूतं कफोत्क्लेशि न हित तत् पिपासवे ॥ मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा । सन्निपातसमुत्थे च शृतशीत प्रशस्यते ॥ सुश्रु ॥

उष्णोपगम । पु । ग्रीष्मकाल । अम ।

उष्म (का) । पु । नारे । र गा । क्षयरोगे । रा नि व २० । ग्रीष्मर्त्तौ । अम । वसन्तकाले । उष्णतायां । आतुरे । मे कत्रिकं ।

उष्मजम् । क्ली । लवणसाधारणे । रत्ना ।

उष्माभ्य । पु । सूर्य्ये ।

उष्मस्वेद । पु । उष्मजन्यघर्म्मे । यथा—"उष्म स्वेद प्रयोक्तव्य लोहपिण्डेष्टिकादिभि । प्रतप्तै- रम्लसिक्तैश्च कार्य्ये रक्तकवेष्टितैः ॥ अथवा वातघ्न द्रव्यक्वाथरसाम्लिभि । उष्मघटं पूरयित्वा पार्श्व छिद्र निधाय च । विधुयात्त तिरणडाश धातुञ्जां काष्ठवञ्जाम् । । सुखोपविष्ट स्वभ्यक्तं गुरुप्रावरणावृतं । हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥ अत्र वातघ्नद्रव्यभागा — शालपर्णी १ भ पृश्निपर्णी २ भ कण्टकारी ३ भ बृहती ४ भ गोक्षुर ५ भ बिल्व ६ भ गणिकारी ७ भ श्योणाक ८ भ पाटलि ९ भ गाम्भारी १० भ । वै निघ स्वेद ।

उष्मा (ष्मन्) । पु । सन्तापे । पित्ते । क्षयव्याधौ । रा नि व २० । ग्रीष्मर्त्तौ । अ टी नीलकण्ठ ।

उष्मागम । पु । ग्रीष्मकाल । उत्तापे ।

उस्र (स्रा) । पु, स्त्री । वृषे । अञ्जन्या । गवि । उपचित्रायाम् । आखुकर्ण्याम् । इन्दूर- कार्णी । मे रत्रिक ।

उस्रोया । स्त्री । गवि । के ।

उक्ष । दि । धौते । सिक्ते ।

उक्षणम् । क्ली । सेचने ।

उक्षतर । पु । महावृषे । दि च ।

उक्षा (न्) । पु । वृषभे । भा पू १भ । ऋषभ औषधे । रा नि व ५ ।

उक्षाभद्र । पुं । वृषे । वै निघ ।

उक्षाल । पु । वानरे । वै निघ ।

पर्णी । च द कफज्व धि सिन्दुवारादि । "सिन्दुवारदलक्वाथ सोषण कफजे ज्वरे।" गुण्ड्राम्। भा पू १भ ह व । पिप्पलीमूले। भा पू १भ ह व। पु। चित्रकवृक्षे। भा पू १भ ह व ।

**ऊषणा** । स्त्री। पिप्पल्याम्। रा नि व ६। भा पू १भ ह व । चविकायाम्। प मु । See चव्यम्। शुण्ठ्याम्। वै निघ ।

**ऊषर** । पु। क्षारभूमौ। रा नि व २।

**ऊषरक(ज)म्** । क्ली। औषरके। पांशुलवणे। औषरलवणे। रोमकनामाख्यक्षारभेदे । रा नि व १२।

**ऊषरत्वणम्** । क्ली। स्वनामख्याततृणे, घास विशेषे। गुणा —मधुर रुच्य पवना हितश्च। रा नि व ८।

**ऊषवान्** । त्रि। ऊषरे। अम ।

**ऊषसूतम्** । क्ली। मृत्तिकालवणे। 'ऊषसूतं मान्दकिम शलमूलाकरोद्भव । लवण कटुक छर्दि विहितं कटु चोच्यते॥" सु सू ४६ अ ।

**ऊषक्षार** । पु। क्षारमृत्तिकायाम्। लोणा-माटी। गुणा —"ऊषोऽनिलघ्नः प्रक्लेदी ऊषक्षारो बलापह ।" सु सू ४६ अ ।

**ऊषाकर** । पु। कुक्कुटे। श र ।

**ऊषापानम्** । क्ली। प्रत्यूषजलपाने। तस्य विधिगुणा — "अभ्युदिते प्रसृतीरष्टौ रवावनुदिते पिबेत्। वातपित्तकफान् जित्वा जीवेद्वर्षशतं सुखीति ॥ तथा—अर्शःशोथग्रहण्यो ज्वरजठरजरा कुष्ठमेदोविकारा। मूत्राघातास्रपित्तश्रवणगलशिर श्रोणिशूलाक्षिरोगा । ये चान्ये वातपित्तक्षतज कफकृता व्याधय सन्ति जन्तोस्तांस्तानभ्यासयोगादपहरति पय पीतमन्ते निशाया । विगतघन निशीथे प्रातरुत्थाय नित्य पिबति खलु नरो यो नासरन्ध्रेण वारि। स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो वलिपलितविहीन सर्वरोगैर्विमुक्त ॥" भा ।

**ऊषक** । पु। पित्ते। रा नि व । ग्रीष्मर्तौ। ज्यैष्ठाषाढौ ग्रीष्मऋतु ।

**ऊषा** । पु। उषतायाम्। क्षयरोगे। वै निघ ।

**ऊषापह** । पु। हमन्तऋतौ। वै निघ ।

**ऊह** । पु। तर्के।

**ऊहिनी** । स्त्री। सम्मार्जन्याम्। झाँटा।

**ऊह्यम्** । क्ली। "यदनिर्दिष्टं बुद्धिमता तदूह्यं।" सु उ ६५ अ ।

## ऋ

**ऋक्थम्** । क्ली। स्वर्णे। धने। अम । सु सू २८ अ ।

**ऋक्थ** । पु। धने।

**ऋचो(जी)षम्** । क्ली। भ्राष्टे। ताओया। ह च।

**ऋजीक** । पु। धूम।

**ऋजुश्रेणी** । स्त्री। मूर्वायां। रत्ना ।

**ऋजुसर्प** । पु। सर्पविशेषे। दर्वीकरसर्पे। सु कल्प ४ अ । See सर्प ।

**ऋज्वासनः** । पु। मेघे। सिद्धा कौ ।

**ऋतम्** । क्ली। जले। मे । उञ्छशील।

**ऋतुः** । पु। वसन्तादिषड्विधकाले। रवे राशि सङ्क्रमात् यत्र दोषाणां चयकोपशमा भवन्ति ते ऋतव उच्यन्ते। "चयकोपशमा यस्मिन् दोषाणां सम्भवन्ति हि। ऋतुषट्क तदाख्यात रवे राशिषु सङ्क्रमात ॥' भा पू १ भ ऋतुचर्या। ते च शिशिर वसन्त ग्रीष्म - वर्षा शरद्धेमन्तसंज्ञा दोषो पचयप्रकोपोपशमनिमित्तानि भवन्ति । तदुक्तं — माघादयो द्वादशमासा द्विमासिकऋतुरूपा षड्ऋतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षा शरद्धेमन्ता । तेषां तपस्तपस्यौ शिशिर, मधुमाधवौ वसन्त, शुचिशुक्रौ ग्रीष्म, नभो नभस्यौ वर्षा, इषोर्जौ शरत्, सहसहस्यौ हेमन्त इति। भा। मार्गशीर्षौ हेमन्त

वसन्त, वैशाखज्यैष्ठौ ग्रीष्म, आषाढश्रावणौ प्रावृडिति" च मतान्तरं। सु सू ६ अ। ग्रीष्मो मेषवृषौ प्रोक्त प्रावृण्मिथुनकर्कटौ। सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत्। धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः। भा। स्रुतौ तु तस्य भेदत्रयं स्वीकुर्वन्ति यथा—शीत ग्रीष्मवर्षा। तत्र फाल्गुनादिज्यैष्ठान्ता ग्रीष्म, आषाढाद्याश्विनान्ता वर्षा, कार्त्तिकादिमाघान्ता शीत इति। ऋतुलक्षणादिकं यथा— तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्या आपश्चाप्रसन्ना क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भितानां विदह्यन्ते, विदाहात्पित्तसञ्चयमापादयन्ति, स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलापित पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात् परिणतवीर्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनां मविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मसञ्चयमापादयन्ति, स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत् स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्वी भवन्त्यापश्च ता उपयुज्यमाना सूर्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति, स सञ्चय प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति। तत्र पूर्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृष प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात्। ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणानि यथा—वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः। छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः॥ दर्पिता ध्वाङ्क्ष-खड्गाह्व महिषोरभ्रकुञ्जराः। रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये॥ शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः। शेषं हेमन्तवत् सर्व्वं विज्ञेयं लक्षणं बुधैः॥ दिशो वसन्ते विमला काननैरुपशोभिता। किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः॥ कोकिलाषट्पदगणैरुपगीता मनोहरा। दक्षिणानिलसंवीता सुमुखा पल्लवोज्ज्वला॥ ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैऋत असुखः। भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव॥ भ्रान्तचक्राह्वयुगला पय पानाकुला मृगा। ध्वस्तवीरुत्तृणलता विपर्णाङ्घ्रिपपादपा॥ प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः। अम्बुदैर्विद्युदुद्योतप्रस्तुतैस्तुमुलस्वनैः॥ कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही। कदम्बनीपकुटजसर्ज्जकेतकिभूषिता॥ तत्र वर्षासु नद्यम्भःपूरोद्भ्रान्ततटद्रुमाः। वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः॥ भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता। नातिगर्जत् स्रवन्मेघनिरुद्धार्कग्रहं नभः॥ वभुश्च शरदर्कश्वेताभ्रविमलं नभः। तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः॥ पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः। बाणसप्ताह्वबन्धूककाशासनविराजिता॥ स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः। विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनां॥ हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत्। वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात्॥" सु सू ६ अ। स्त्रीकुसुमे। अस। See पुष्प, आर्त्तव।

**ऋतुजन्मा**। स्त्री। पुनर्नवायाम्।

**ऋतुपरीक्षा**। स्त्री। आर्त्तवपरीक्षायाम्। तद्यथा —"ऋतौ कण्डूयनं योनौ क्वचिदङ्गे च वेदना। बाहुल्यं स्वल्पता वापि चानुवन्धिलमस्य वा। संदोष सर्व्वथा वापि वैद्यान्येतानि यत्नतः। आमयेष्वखिलेष्वेव भिषग्भिर्वीक्षिता सदा॥" अत्रि।

**ऋतुमती**। स्त्री। रजस्वलायां स्त्रियाम्। तत्पर्याय,—रजस्वला स्त्रीधर्म्मिणी अवी आत्रेयी मलिनी पुष्पवती उदक्या। अ। तल्लक्षणं यथा —"पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजां। नरकामा प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम्॥ स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिच। हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति॥ नियते दिवसेऽतीते सङ्कुचत्यम्बुजं यथा। ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा॥ मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्। ईषत्कृष्णं विदग्धञ्च वायुर्योनिमुखं नयेत्॥ यद्वर्षाद् द्वादशात् काले वर्त्तमानमसृक् पुनः। जरापक्वशरीराणां याति पञ्चाशतः क्षयम्॥" सु शा २।३ अ।

**ऋतुराज**। पु।

**ऋतुवैषम्यम्।** क्ली। ऋतुधर्मविपरीताचरणे। भा म ४भ। 'क्रोधर्तुवैषम्यगिरीभिघातैः।'

**ऋतुशूलम्।** क्ली। ऋतुकाले स्त्रीरोगभेदः शूलरोगे। 'पुष्पस्य वातादिभिरत्तत तस्य कारणं। बहुल पिच्छिल स्निग्ध घन वमति शोणितं। योनौ नाभौ तु शूलानि ऋतौ परमदारुणम्।" रस र यो व्या चि।

**ऋतुषट्कम्।** क्ली। हिमशिशिरवसन्तग्रीष्मवर्षा शरत्सु। "वयकोपसमा यस्मिन् दोषाणां सम्भवन्ति हि। ऋतुषट्कं तदाख्यातं रवेराशिषु संक्रमात्॥" भा।

**ऋतुसन्धिः।** पु। ऋतुद्वयसंश्लेषसमये। स च ऋतुद्वयस्याद्यन्तसप्ताहरूपः। तदुक्तं "ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः। तत्र पूर्वोविधिस्त्याज्यः सेवनीयः परो विधिरिति॥' वा।

**ऋतुसम्मिता।** स्त्री। सुनिषण्णिकायाम्। वै निघ।

**ऋतुस्नाता।** स्त्री। रजोदर्शनाच्चतुर्थेऽह्नि स्नातायाम्। "पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना। तादृशं जनयेत् पुत्रं तत पश्येत्पतिं प्रियं॥' स भा २ ष।

**ऋतुहरीतकी।** स्त्री। ऋतौ ऋतौ हरीतकी भक्षणविधौ। यथा—"सिन्धूत्थशर्कराशुण्ठीकणा मधुगुडैः क्रमात्। वर्षादिष्वभया सेव्या रसायन गुणैषिणा॥" च द। भावस्तु ग्रीष्ममधिकृत्याह। ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धाम्बरे साद्ध शर्करया शरद्यमलया शुण्ठ्या तुषारागमे। पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितामित्थं प्राश्य हरीतकीमिव रुजो नश्यन्तु ते शत्रव॥ प्रयोगा वाणी।

**ऋद्धम्।** क्ली। सम्पन्नधान्ये। अम। पक्वमर्दितधान्ये। निर्बुषीकृतधान्ये। अ टी।

**ऋद्धिः।** स्त्री। कौशयामलप्रसिद्धे ऋद्धिवृद्धीति च गौड़प्रसिद्धे स्वनामख्यातलताकन्दे। तदुक्तं 'ऋद्धिर्वृद्धिश्च द्वौ कन्दौ भवतः कौशयामले। श्वेत रोमान्वितः कन्दो लताजातः सरन्ध्रकः। तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा। प्रयोगेष्वनयोरेक यथालाभं प्रयोजयेत्॥ रा नि व ५। तत्पर्याय —योग्यं सिद्धि लक्ष्मी(अ) प्राणपदा हर्षा (र) प्राणदा जीवदात्री सिद्धा योग्या चेतनीया रथाङ्गी मङ्गल्या लोककान्ता जीवश्रेष्ठा यशस्या। गुणा—ऋद्धिगुण तुल्या बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरु र्वलेऽस्थ्यकरी मूर्च्छारक्तपित्तहरी च। भा पू १भ। महाम्लाधर्णा। वा सू १५ श पद्मकाद्ये ऋद्धय। "पद्मकपुण्ड्राह्वऋद्धिः। एतदभावे वाराही योज्या।"

**ऋद्धिजा।** स्त्री। मर्पगन्धायां। गन्धरास्नायां। प मु। अस्या कन्दोबाह्य। भा म १भ।

**ऋभुक्षः।** पु। वज्रे। स्वर्गे। रायमु।

**ऋष्य (श्यः)।** मृगे। रुरुमृगे। "ऋष्यो नीला ण्डकौ नौर्ऋश्च रोग इति कीर्तितः।" भा म १भ। तन्मांसगुणा—कषायं मधुरं वातघ्नं पित्तघ्नं हृद्यं शीतं वस्तिशोधनम्। सु स ४६ अ।

**ऋषभः।** पु। ऋषभके। कर्णरन्ध्रे। कुम्भीर पुच्छे। मे। सु चि १७ अ बलीवर्दे। वृषः। मांस गुणा—अतिगुरु स्निग्धं पित्तश्लेष्मवर्द्धनं हृद्यं वातघ्नं बल्यं पीनसघ्नं। भा पू १भ।

**ऋषभकः।** पु। One of the eight medicaments, carpopogon pru riens स्वनामख्यातौषधे। ऋषभ इति गौड़े काश्मीरे च प्रसिद्धः। ऋषभक। तत्पर्याय,—वृष ऋषभ वीर (र), पृथिवीपति (मे)। गोपति धीर विषाणी दुर्द्धर ककुद्मान् पुङ्गव वोढा शृङ्गी वृषभ धूर्य्य भूपति कामी वृषप्रियं उक्षा लाङ्गूली गौ बन्धुर बन्धूर गोरथ वनवासी। जीवकर्षभकयोरुत्पत्तिमाह मिश्रभाव—"जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ। रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ। जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत्॥" गुणा —जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ। एतदभावे विदारीमूलं प्रयोज्यम्। भा प १भ। मधुरं शीतं पित्तरक्तविषहृत्। शुक्रश्लेष्मकरी दाह क्षयज्वरहरश्च स। रा नि व ५। "ऋषभको वृषभकः।" सु चि ८ष।

**ऋषभी।** स्त्री। कपिकच्छुलतायाम्। आत्मगुप्ता। र मा। नराकारयोषिति। शिरालायाम्। विधवायाम्। श भवित।

**ऋषि।** पु। गोरक्षनाया। वै निघ।

**ऋषिकम्।** क्ली। लताविशेषे। शियाडिलता। प सु।

ऋष्पिकुल्या । स्त्री । गङ्गा । ए ।

ऋष्पिजाङ्गलक (ला) ( लिका, की )। स्त्री । ऋष्यगन्धायाम् । सर्पगन्धा । रत्ना ।

ऋष्पिपुत्रक । पु । दमनकवृक्षे । वै निघ ।

ऋष्पिप्रोक्ता । स्त्री । माषपर्णीलतायां । प र ।

ऋष्पिश्रेष्ठ । पु । पुण्डरीकवृक्ष । रत्ना ।

ऋष्पिश्रेष्ठा । स्त्री । ऋद्धा । वृद्धा । वै निघ ।

ऋष्पिसृष्टा । स्त्री । कच्छी । मद व १ ।

ऋष्पीक । पु । कामवृक्ष । मद व १ ।

ऋष्य । पु । हरिणे । श्वेतकुष्ठे । गवयमृगे । नीलहरिणे । एतन्मांस कफघ्न पित्तघ्न किञ्चिद्वात वर्द्धक लघु बल्यञ्च । भा पू १भ ।

ऋष्यगता । स्त्री । माषपर्णी । मांसानी । श र ।

ऋष्यगन्धा (न्धिका) । स्त्री । ऋषिजाङ्गलायां । र मा । तत्पर्याय—ऋष्यगन्धा ऋषि जाङ्गलिकी वृद्धदारक । अतिबलायाम् । क्षीर विदार्या । श र । श्वेतशर्करकन्दे, रक्तशकर कन्द । वै निघ ।

ऋष्यजिह्व(क)म् । क्ली । महाकुष्ठभेदे । तल्ल क्षणम्—"ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्य जिह्वानि ।" सु नि ५अ ।

ऋष्यपुष्पी । स्त्री । अतिबलायाम् । वै निघ ।

ऋष्यप्रोक्ता । स्त्री । श्वेतवाट्यालके । प मु । शतमूल्याम् । महाशतावर्य्याम् । महाबलायाम् । कपिकच्छुलतायाम् । भा पू १भ गु व । पीत वाट्यालके । रभा । माषपर्ण्याम् । च सू ४अ । "ऋष्यप्रोक्तामशतावर्यतिबलाशुकशिम्बिषु ।" मे तचतुष्क ।

ऋष्याद्या । स्त्री । नागबलायाम् । बलायाम् । বেড়েলা । वै निघ ।

ऋत्त । पु । भल्लुके । रा नि व १९ । तन्मांस गुणा—स्निग्ध गुरु हृष्य स्वादु उष्ण वातघ्नम् । मद व १२ । हरिणे । हना । हलवेधने । ঘোষা लता । मे पत्रिक । श्योणाकवृक्षे । रा नि व ९ ।

ऋत्तगन्धा । स्त्री । वृद्धदारकवृक्षे । বৌদ্ধ তাড়ক । ऋषिजाङ्गलायां । र मा च सू ४अ वृहणे । श्वेतभूमिकुष्माण्डे । वै निघ ।

ऋत्तगन्धिका । स्त्री । कृष्णभूमिकुष्माण्डे । वृद्ध दारकलतायां । वै निघ ।

ऋत्तप्रिय । पुं । ऋषभकाक्षुप । रा नि व ५ ।

ऋत्तमुखयन्त्रम् । क्ली । सन्दशतुल्ये यन्त्रविशेषे । अत्रि ।

ऋत्तर । क्ली । वारिधारायाम् । मे ।

ऋत्तविट् । स्त्री । तैलपायिविशायाम् । আর্শো-ল্যাবনাদি । वै निघ २भ अर्श चि कृष्णशिरीष लेपे ।

ऋत्ताह्वी । स्त्री । महामेदालताक्षुपे । रा नि व ५ ।

ऋत्तेप । पु । चन्द्रे । ह ।

---

# ए

एककन्द । पु । पानीयालुके । पायशाक इति प्रसिद्धे कन्दशाके । শোনাকচু । प मु ।

एककुष्ठम् । क्ली । क्षुद्रकुष्ठभेदे । लक्षणम्—"अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं । तदेक कुष्ठम् । मा नि । एककुष्ठ चर्मदलमिति कश्चित् । कृष्णारुणं येन भवेच्छरीरं । तदेककुष्ठं प्रवदन्त्य साध्यम् । सु नि ५अ ।

एकचर । पु । गण्डके । গণ্ডার । त्रिका ।

एकदृक् (ष्टि) । पु । काके । हला । त्रि । काणे । বাণা । हे च ।

एकपत्र (क) । पु । चण्डालकन्दविशेषे । रा नि व ७ । श्वेततुलस्यां । र मा ।

एकपत्रा (त्रिका) । स्त्री । सुगन्धशठ्याम् । গন্ধশটী । मालवे पलाश इति ख्यात गन्धपत्रवृक्षे । रा नि व ६ । पाण्डुरतु नसीहते ।

एकपत्री । स्त्री । नागवल्लीलतायाम् । वै निघ ।

**एकभक्तव्रतं**। क्ली। रात्रिभोजनाभाव विशिष्ट दिवाभोजने। "दिनाद्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमितिप्रोक्त रात्रौ तन्न कदाचन।" स्कन्द पु।

**एकमूल'**। पु। पुण्डरीकवृक्षे। शुण्डविग्री।

**एकमूला**। स्त्री। शालपर्ण्याम्। अतस्याम्। नलिनी। सयद्द।

**एकरजः**। पु। भृङ्गराजवृक्षे। भीमराज, ভেঙ্গরাজ। জটা।

**एकरन्ध्रः**। पु। नदीवटे। वै निघ।

**एकवर्णी**। स्त्री। वाद्यभेदे। तत्पर्य्याय— करताली। कङ्कमाला कलङ्कषा। शब्दर।

**एकवर्षीया**। स्त्री। एकहायन्यां गवि। এক বছরের বাছুর। हे च।

**एकवाद्यः**। पु। डिण्डिम वाद्ये। शब्दर।

**एकविंशतिगुग्गुलु**। पु। कुष्ठरोगे। च द कुष्ठ चि। चित्रक त्रिफला व्योषमजाजी कारवी वचाम्। सैन्धवातिविषे कुष्ठ चव्यैलायावशूकजम्। विडङ्गान्यजमोदाञ्च मुस्तान्यमरदारु च। यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलु। सङ्कुट्य सर्पिषा सार्द्धं गुडिका कारयेद्भिषक्। मात्रभोजनकाले च भक्षयेत्तु यथाबलम्। চিতামূল, ত্রিফলা, ত্রিকটু, জীরে, কৃষ্ণজীরে, বচ, সৈন্ধব, আতইচ, কুড, চই, এলাইচ, যব ক্ষার, বিডঙ্গ, যমানী, মুতা, দেবদারু প্রত্যেক সমভাগ। সর্ব্বচূর্ণসমান গুগ্গুল ঘৃতের সহিত মর্দ্দন পূর্ব্বক গুড়িকা করিবে।

**एकवीर'**। पु। स्वनामख्यातवृक्षविशेषे। এক বীর। गडुविकेक। तत्पर्य्याय,—महावीर सुवीर सुवीरक। गुणा—कटुक तीव्रवातघ्न श्लेष्म गृध्रसीकटिशूलाभिघातघ्न। रा नि व ८।

**एकवीरा**। स्त्री। वन्ध्याकर्कोट्याम्। गुणा— "एकवीरा स्मृता तिक्ता चालुष्णा वातहा स्मृता। पक्षाघात पृष्ठकटीशूलञ्चैव विनाशयत्॥" वै निघ।

**एकवृन्द**। पु। सन्नामककण्ठरोगविशेषे। येन दुष्टकफशोणिताभ्यां कण्ठे दाहकण्डूमदीपपाकी वृत्त मदुरुन्नतो शोथ शोथो जायते। लक्षण— "वृत्तोन्नतो यः श्वयथुः सदाहः कण्डूनितोऽपाक्य मृदुर्गुरुश्च। नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधिर्बलासक्षतजप्रसूत॥" सु नि १६श। मा नि।

**एकशल्यः**। पु। गलरोगे। वै निघ। स्थानभेदे। वतु कोशान्तरे—यत्र वृत्तान्तर नेष्यते।

**एकशफ'**। पु। घोटके। त्रिका। एकखुर-जन्तुमात्रे। यथा—"खरोऽश्वोश्वतरो गौर शरभ चमरी तथा। एते चैकशफा ख्याता।" भा।

**एकशफक्षीरम्**। क्ली। अविभागखुरपशुदुग्धे। খুরযোড়া পশুমাত্রের দুধ। गुणा—उष्ण लेक शफ लघु शाखावातहरं साम्लमीषल्लवण जडता करमिति। भा टी ईमा। "बल्यमेकशफ पय" इति चरक।

**एकशिखा**। स्त्री। पाठायाम्। আকনাদি। प मु।

**एकशृङ्ग'**। पु। गण्डके। গণ্ডার। वै निघ।

**एकसूत.**। पु। डमरु वाद्ये। शब्दर।

**एकहस्ती**। स्त्री। अश्वस्य शोभनवलयाभेदे। 'द्विहस्ती चैकहस्ती च शुभगा शोभना मता।" ज द ७श।

**एकहायनी**। स्त्री। एकवर्षीयाया गवि। अम।

**एकाङ्गम्**। क्ली। चन्दने। हारा।

**एकाङ्गवात.**। प। पक्षवधरोगे। পক্ষাঘাত। मा नि। See पक्षवध। अथवा वातव्याधिरोग विशेषे। 'एक प्रलम्बते कार्य शरीरार्द्ध गच्छति। शूलो भवति चाश्वय रोगे एकाङ्गसंज्ञके॥" ज द ५५श।

**एकाङ्गी**। स्त्री। मुरामांस्यां। মুরামাংসী নামক গন্ধদ্রব্যবিশেষ। गुणा—तिक्ता हिमा स्वादी लघु वातपित्तघ्नी ज्वरभूतरक्षोघ्नी कुष्ठ कासघ्नी च। भा पु १भ। कटु कषाया भ्रम मूर्च्छातृष्णाविषदाहघ्नी च। रा नि व १२।

**एकाण्ड**। पु। सन्नामकदोषान्विताश्वे। "एकेन लम्बमानेन मुष्केणैकाण्डसंज्ञक।" ज द ३श।

**एकादशशतिकमहाप्रसारणीतैलम्**। क्ली। वातव्याधौ। "शाखामूलदलैः प्रसारणितुलास्तिस्रः श्रीतुले, द्विमायाय तुले तुले मधुकतो रास्ना शिरीषाभुना। दवाद्वाय सकेतकाद्दशजते नि क्वाथ कुम्भाम्भिके, तोये तैलघटं तुषाम्बुकलसी दध्नाढक मस्तुन॥ — ग्रक्षाच्छागरसादवेञ्चरसत क्षीरात दत्वाढक, प्रक्षाकर्कटजीवकायविकथा काकोलिका

कस्तूरी । मूर्च्छा घनसारकुन्दुरुला काश्मीर मांसीनखैः, कालीयोत्पलपद्मकाह्वयनिशा कक्कोलक ग्रन्थिकैः ॥ चाम्पेयाभयचोचपूगकटुकाजातीफला भीरुभिः, श्रीवासामरदारुचन्दनवचाशैलेयसिन्धू द्भवैः । तैलाम्भोदकटम्भराद्रिमलिमाद्रजीरकक्षीरकैः, कस्तूरी दशमूल कैतक नत श्यामाश्वगन्धाम्बुभिः । कौन्ती शार्ङ्गजशल्लकीफल प्रियश्यामा शताह्वामयैः, भल्लात त्रिफलाक केशर महाश्यामा श्वदंष्ट्रान्वितैः । सर्व्वोषधिस्त्रिपलैर्महौषधि पचत्यन्देन पाचितौषिना ॥" তিলতৈল ৬৪শ কাথার্থ সমূলপত্রশা। গন্ধভাদুলিয়া ৩৭॥০শ নীলঝাঁটী গুলঞ্চ, এবং মূল প্রত্যেক ২৫ শ রাস্না, শিবীষছাল দেবদারু, কেয়ার মূল প্রত্যেকে ৬।০শ জল ৬৪০০শ শেষ ৬৪শ কাঁজি ৬৪শ দধি ৬৪শ শুক্ত ১৬শ ছাগমাংস ৮শ জল ৬৪শ শেষ ১৬ শ ইক্ষুরস ১৬ শ দুগ্ধ ১৬ শ। কল্কার্থ পিড়ি যব, কাঁকড়াশৃঙ্গী, জীবনীয় দশক বা অষ্টবর্গ, কাকোলী, মঞ্জিষ্ঠা, ক্ষীর-কাকোলী, আলাকুশীর মূল ছোট এলাইচ, কর্পূর, কুন্দুরুখোটী সরলকাষ্ঠ, কুঙ্কুম, জটামাংসী, নখী, কৃষ্ণাগুরু, নীলোৎপল, পদ্মকাষ্ঠ, হরিদ্রা, কক্কোল, গেঁঠেলা, চাঁপাকলি বা নাগেশ্বর, বেণার মূল, গুড়ত্বক্, গুপারি, জায়ফল, লতাকস্তুরী, শতমূলী, লবণখোটি, দেবদারু, শ্বেতচন্দন, বচ, শৈলজ সৈন্ধব, শিলারস, মূতা গন্ধভাদুলিমূল পুনর্নবা, নালুকা, গন্ধশটী মৃগনাভি, দশমূল, ময়না ফল, প্রিয়ঙ্গু শাল, কেয়া, তগরমূল অশ্বগন্ধা, বালা বেণুকা, রসাঞ্জন, শিমুলমূল, কট ফল, অগুরু, শ্যামালতা বা অনন্তমূল, কুড়, ভেলার মুটী, ত্রিফলা, গুল্ফা পদ্ম, নাগেশ্বর, লবঙ্গ, ত্রিকটু প্রত্যেক ৩ পল। প্রয়োগা মেঘ। ধ্যামমিতি পাঠে গন্ধতৃণম্।

**एकादशायस** । पु । अम्लद्रवाधिकारे, पाठ— "मृताय पुरुष शुल्ब खगो दरदगन्धकौ । गगन पुष्पराजश्च शोणितश्चेश्वरीरसौ । विडङ्गत्रिफला हिङ्गुयमानीजीरकद्वयं । सर्जीफलवचाशृङ्गी मरिच पिप्पलीद्वय । चवी दुरालभा वह्नि शुण्ठीद्रावै विमर्द्दयेत ॥" पुरुष रस । खग स्वर्णमाक्षिकम् । पुष्पराग तन्नामकमणि रसाञ्जन वा । शोणित कुङ्कुम । ईश्वर पित्तल । रस र प्रयोगामृते तु गन्धस्थाने गुड, शुण्ठीद्रावैर्विमर्द्दये दित्यत "भावयेदार्द्रकद्रवै" इति पाठान्तर । प्रयोगामृते पुरुष गुग्गुल । पुष्पराग रसाञ्जन । शोणितं ताम्र । ईश्वर रस । जारितलौह पारद गन्ध ताम्र स्वर्णमाक्षिक अभ्र हिङ्गुल कुङ्कुम पोखराज मणि शीर्ष पित्तल विडङ्ग त्रिफला हिङ्गु यमानी जीरकं कृष्णजीरक पियालफल वचा कर्कटशृङ्गी मरिच पिप्पली गजपिप्पली चवी दुरालभा चित्रकमूल एषां प्रति समभाग । आर्द्रकरसेन भाव्य ।

**एकादशेन्द्रियम्** । क्ली । श्रोत्रत्वक्चक्षूरसना घ्राणवाक्पाणिपायूपस्थपादमनःसु । एषु प्रथमं पञ्चज्ञानेन्द्रियं, अन्यत्र कर्म्मेन्द्रिय । सु श १अ ।

**एकादिवीर** । पु । एकवीरवृक्षे । वै निघ ।

**एकान्त** । पु । यदवधार्य्योच्यते । यथा— "त्रिवृद् विरेचयति मदनफलं वामयतीति । सु उ ६५ अ ।

**एकाष्ठी** । स्त्री । कार्पास्था । कार्पासबीजकोषे । वै निघ ।

**एकाष्ठीका** । स्त्री । पाठायाम् । आकनादि, निमूका । वै निघ ।

**एकाष्ठील (ला)** । पु, स्त्री । वकवृक्षे । अम । त्रि वृहद्वील सगी । भा पु १भ । (ला) पाठायां । र मा । रा नि द ६ । वनतिक्तिकायाम् । मे लघुतुम्ब । पुष्पवृक्षभेद । भा पू १भ । See अगस्त्य ।

**एकाह्ना** । स्त्री । एकवर्षाया गवि । अम ।

**एकाक्ष** । पु । काके । त्रि । एकनेत्रे । काणां । श च ।

**एकैषिकतैलम्** । क्ली । तन्नामकतैले । गुणा —हिम पित्तघ्न वातश्लेष्मकृत्त । मन् ।

**एकैषि(कोषि)का** । स्त्री । वकपुष्पवृक्षे । पाठायाम् । आकनादि । त्रिवृतायाम् । "एकैषिकाजशृङ्गी च" । सु सू ३६ अ चि १७, १८अ । सतैल मधुरम् अतिशीत पित्तहरं वात कोपन श्लेष्मवर्द्धनश्च । सु सू ४५ अ ।

**एकैषी** । स्त्री । पाठाया । आकनादि । म पहाड मूल । वै निघ ।

**एकोषि(षि)का** । स्त्री । पाठायाम् । आक-नादि । र मा । वकवृक्षे इति केचित् ।

**एड:** । त्रि । वधिर । काला । अम ।

**एडक' (काश्य:)** । पु । पृदुशृङ्गपशौ । ভেডা । प मू । वनच्छागले । तिका । "एडक पृथु शृङ्ग स्यान्मेद पुच्छस्तु दुम्बक । एडकस्य पल ज्ञेय मेषामिष म गुणै । मेद पुच्छोद्भव मांस हृद्य वृष्य श्रमापहम् । पित्तश्लेष्मकरं किञ्चिद्वात व्याधिविनाशनम् । भा पू १म मांसव । तत्र वि॰पे । ছোগলা । सु चि ७अ । मञ्जिष्ठायां च ।

**एडकघृतम्** । क्ली । एडकाजनीतमिलघृत । गुणा —अतिगुरुत्वादज्य सुकुमाराणाम्, बुद्धिपाटव करं बलकरञ्च । रा नि व १५ ।

**एडका** । स्त्री । मेषी । ভেডী । श टी रा ।

**एडगज. (जा)** । पु स्त्री । चक्रमर्द्दक्षुपे । চাকন্দা গাছ, চাটাকাটা इति च भाषा । रा नि व ५ । भा पू १भ शोमराजतैले । च मू ३ अ । वन्दैनायां । वन एলাচ । च द कुष्ठ चि ।

**एडमूक.** । त्रि । वधिरे । वाग्श्रुतिवर्ज्जिते । কালা বোবা । मे कचतुष्क ।

**एडहस्ती** । पु । चक्रमर्द्दे । চাকন্দা গাছ ।

**एडूक** । त्रि । वधिरे । मे ।

**एण** । पु । हरिणे । रा नि व १९ । कृष्णमृग विशेषे । कृष्णसार হরিণ । हि करीमाइलहरिण । अय जङ्गालजातीय । अस्य मांसगुणा —कषाय मधुर हृद्य रक्तपित्तकफवातघ्न रुचिकर धारक वल्य । सु सू ४६ अ । भा पू १भ । विशेषतो ज्वर प्रशमनमिति चक्रपाणि । लघु शीतल बृष्य त्रिदोषहर यड्डसञ्ज रुच्यश्च । रा नि व १७। "शङ्खिना हरिण श्रेष्ठ वल्यो रोचनदीपन । त्रिदोषघ्नो लघु पाके मधुरो ज्वरिणा हित ॥ चत चयाग्रसो पाण्डावगोचकनिपीडिते । कासश्वासा- तुराणाञ्च एणमास सुखावहम् ॥" अत्रि २० अ ।

**एणक** । पु । हरिणे । श र । कृष्णसारे ।

**एणीदाह** । पु । सन्निपातज्वरविशेषे । लक्षण —"परिधावतीव गात्रे कक्षपार्श्वे भुजङ्गपतङ्ग हरिणगण । वेपथुमत सदाहश्चैणोदाहज्वरार्त्तस्य ।" भा म १म । कक्षपार्श्वे पीडाभाजने, गात्रस्य विशेषणमेतत ।

**एणीपद** । पु । मण्डलिसर्प । सु कल्प ४अ । See सर्प ।

**एणीपदी** । स्त्री । असाध्यलूताभेदे । सु कल्प ८अ । See लूता ।

**एत:** । पुं । हरिणे । श र । घोटके ।

**एतन'** । पु । निश्वासे । हे च ।

**एतश:** । पु । घोटके ।

**एता** । स्त्री । हरिण्याम् । वै निघ ।

**एधतु'** । पु । पुरुषे ।

**एरकम्** । क्ली । हीगलतृणे । হোগলা । वैं निघ । See एरका ।

**एरका** । स्त्री । गुन्द्रातृण । तृणविशेषे । হোগলা । स मोघोद्दश । च सू ३ अ । तत्पर्याय,— गुन्द्रमू-ल शिम्बी गुन्द्रा शरी । गुणा —हिमा शुक्रवृद्धिकरी चक्षुष्या वातकोपना । मूत्रकृच्छ्राश्मरी दाहपित्तशोणितघ्नी च । रा नि व ८। शीता वृष्या चक्षुष्या वातकोपनी मूत्रकृच्छ्राश्मरीदाहपित्त शोणितघ्नी च । भा पू १भ ।

**एरङ्ग (ङ्गी)** । पु, स्त्री । मत्स्यभेदे । अरङ्गा মাছ, এলে' মাছ, বামকড়া । हि अरङ्गा । गुणा —मधुर स्निग्ध विष्टम्भी शीतल गुरुश्च । भा पू १भ मत्स्यव । मञ्जिष्ठायाम् । च ।

**एरण्ड** । पु । Castor oil plant ( Ricinus communis ) स्वनामख्यातवृक्षविशेषे । ভেরেণ্ডা গাছ । हि एरण्ड, रेंडि । ते आमिद पचेट्टु । तत्पर्याय,—त्रिपुटी फल ( रत्ना ), रुवूक् (र), व्याघ्रपुच्छ गन्धर्वहस्तक उरुवुक रुवुक चित्रक चञ्चु पञ्चाङ्गुल मण्ड वर्द्धमान व्यड्म्बक (अ), एरण्डक (भ), हस्त अमण्ड तुच्छद्रु प्रवाह शूलशत्रु (र), त्रिपुटी व्याघ्रदल (शब्दमा), उरुवूक रुवूका रूवुक रुवक रुक अमण्ड आमण्ड व्यडम्बन ( अटी भ ), दीर्घ दन्तक ( ज ) काम्त तरुण शुक्ल वातारि दीर्घपत्रक । एरण्ड विविध स्वल्पशुक्लरक्तभेदेन गुणा —मधुरोष्ण गुरु शूलशोथकटिशूलवस्तिशूल शिर शूलोदरज्वरब्रध्नश्वासकफानाहकासकुष्ठामदीप- वातहरश्च । तत्कोमलपत्र गुल्मवस्तिशूलकफवायु क्रमिहृद्विघ्नम् । तन्मज्जगुणा —मलभेदक वात कफोदरघ्नश्च । भा पु १भ गु व । श्वेतैरण्डस्य मूलगुणा —शूलवायुकफनाशित्व शुक्रजननकर्त्व । - आमवातनाशित्व अतिदीपनत्व पित्तकोपनत्वञ्च । राज । श्वेतादीनां गुणा स्वस्वपर्य्याये मन्तव्या ।

**एरण्डक** । पु। एरण्डे । भरत ।

**एरण्डजम्** । क्ली। एरण्डतैले । वा ।

**एरण्डतैलम्** । क्ली। Castor oil एरण्ड बीजोद्भवतैले। प्रा एरतैल। ভেরেণ্ডার তৈল। हि रेंढिका तेल। गुणा —मधुरगुरुश्लेष्मवर्द्धकत्व वातरक्तगुल्महृद्रोगाजीर्णज्वरघ्नत्वञ्च । राज । तूण तिक्त ईषत्कटुक रेचक गुल्मानिल शोफोदरमुष्कवृद्धि विषमज्वरकट्यादिशोथरुजश्च जयेत। तीक्ष्णोष्ण पिच्छिल विस्रञ्चेति रक्तैरण्डजतैलगुणा । वा टी हिम्न तैलव । एरण्डतैल क्रमिदोषनाशन वाता मयघ्न सर्व्वाङ्गशूलघ्न । कुष्टघ्न स्वादु रसायने श्रेष्ठ पित्तकोपन अतिदीपनञ्च । रा नि व १५ । "एरण्डजं घनञ्चापि शीतमेव स्मृतं घृत। वृद्ध्यस्त्रिजङ्घा कच्छूकुशूलानाहविषघ्नमनुत् ॥ तैलमेरण्डजं वल्य गुरूष्णं मधुरं तथा। तीक्ष्णोष्णं पिच्छिलं विस्रं रक्त मेरण्डसम्भवम् ॥ अत्रि १४ अ ।

**एरण्डतैलमूर्च्छा** । स्त्री। मूर्च्छाद्रव्याणि— मञ्जिष्ठा मुस्तकं धान्य त्रिफला जयन्तीपत्रं बालक वनखर्ज्जूरी वटशुङ्गा हरिद्रा दारुहरिद्रा नलिका केतकी ( কেয়ার নামাল ) दधि का ञ्जिकञ्च । हरिद्रादिपर्य्यायेन पूर्व्ववत् मूर्च्छा कार्य्या ।

**एरण्डपत्रविटपा (त्रिका) (त्री)** । स्त्री । क्रमदन्तीवृक्षे । रा नि व ६ ।

**एरण्डफला** । स्त्री। क्रमदन्तीवृक्षे । रा नि व ६ । भा पू १भ ।

**एरण्डमूलम्** । क्ली। एरण्डशिफायां । च द विषमज्व चि "एरण्डमूलसिद्ध वा ।

**एरण्डबीजम्** । क्ली। एरण्डफले ।

**एरण्डशिफा** । स्त्री। एरण्डमूले । भा वा व्या ।

**एरण्डसप्त(द्वादश)क** । पु। शूलरोगे। यव क्षारादीनां माषचतुष्टय प्रक्षेप्यम् । पाचनादि द्रव्याणां कर्षादिक । प्रक्षेप पादिक क्वाथात् । तथा माषिकं हिङ्गु सिन्धूत्थं जरणायाम्लु शाणिका । इति परिभाषानियमात् । पृश्निपर्णीद्वयस्थाने चाकुलिया, अस्या कलम्बीपत्रतुल्यदीर्घपत्रता च। च द शूल चि । এরণ্ডমূল বেলছাল, চাকুলিয়া, সিংহপুচ্ছীচাকুলিয়া, ছোলঙ্গমূল পাথরকুচি, গোক্ষুর প্রত্যেকে ২৩ রতি। যবক্ষার হিঙ্গু সৈন্ধব, এরণ্ডতৈল প্রত্যেকে ১ মাষা। इति एरण्डसप्तक । এরণ্ডবীজ এরণ্ডমূল, বৃহতী, কণ্টিকারী, গোক্ষুর, শালপাণি, চাকুলিয়া, মুগানী, মাষাণী ডানকুনী, সিংহপুচ্ছীচাকুলিয়া, থাগড়ামূল প্রত্যেক ১৩।০র। প্রক্ষেপ যবক্ষার ৪ মা। । एरण्डद्वादशक ।

**एरण्डा** । स्त्री। वृहद्दन्तीवृक्षे। मद व १ । पिप्पल्याम् । श च ।

**एरण्डादि** । पु। तदादिद्रव्यवर्गे। यथा— "एरण्डश्चारिवाद्राचा शिरीषश्च प्रसारणी। माष मुद्गाग्न्यपर्णिन्या विदारीकन्दकेतकी। एरण्डादि गणो ह्येष वातपित्तविकारनुत् ॥" ॥ रसचन्द्रिका। এরণ্ডমূল, আস্তমূল, কিসমিস্, শিরীষ, গন্ধভাদুলিয়া, মুগানী, মাষাণী, ভূঁইকুমড়া, কেতকীমূল প্রত্যেকে ১৮ র ।

**एर्व्वारु (रुका)** । पु, स्त्री। कर्कटीलतायां । কাঁকুড় বা ফুটী গাছ। हि फुट। ते नक्कदोस। ग्रीष्मकर्कटी। बिज र । तत्पर्य्याय,—व्यालपत्रा लोमशा स्थूला तोयफला हस्तिदन्तफला कर्कटी। सा महत् क्षुद्रभेदेन द्विविधा। गुणा —पित्तहरी शीतला मधुरा मूत्रशोधघ्नी रुचिकरी सन्तापमूर्च्छा हरी च। अतिसेवनात् वातकोपकरी च। रा नि व ७। शीतला रूक्षा मधुरा ग्राहिणी गुरु । आमा सा रूक्षा पित्तघ्नी च। पक्का तृष्णाग्निपित्तकरी च । भा पू १भ शा व । कोमलैर्व्वारुक तिक्त लघु स्वादतिमूत्रलम् । शीत रूक्ष रक्तपित्तमूत्र कृच्छ्राश्मदोषजि। तत्पक्व पित्तल चाग्निदीपनञ्च तृषापह। उष्ण त्रिदोषशमन क्रमिदाहहर मतम् । रूढे शीर्णन्तु तज्ज्ञेयमुष्ण पित्तकर मतं। कफ वायुविनाशकर प्रोक्तमायुर्व्विदर्ज्जनै । क्षुद्रैर्व्वारुक शीत मधुर रुचिकारक । कासपीनसकारि स्यात् पाचक श्रमपित्तहृ। आध्मानवायौ शमनं। वै निघ । त्रिदोषशमनी।

**एर्व्वारुकम्** । क्ली। कर्कटिकफले। কাঁকুড়।

**एर्व्वारुतैलम्** । क्ली। कर्कटीबीजतैले। কাঁকুড় বীজের তৈল। गुणा —विभीतकतैलगुणम् । वातपित्तघ्न केश्य श्लेष्मकरं गुरु शीतलञ्च। वा तैलव ।

**एल** । पु। एलायां। एलबालुके। नि घो वरीष चि शोकन्त । "रास्नैलहिङ्गुलवणोत्त मानां।" च द वात ज्व रास्नादि ।

**एलक** । पु। मेषे। रा नि व १९।

पू १म पुष्पव । मलमूत्रस्तम्भनरञ्जनम् । राज । कटुकषा इन्द्रलुप्तहर विसदृद्दिनतुजनक मूर्च्छा रोपनश्च । रा नि व १० । माता इमा ।

**ओड्र(ड्रा)काख्या** । स्त्री । जवापुष्पवृक्षे । रा नि व १० ।

**ओड्रपर्य्याय** । पु । सूर्य्यकान्तपुष्पवृक्षे रूनाम ख्याते । जवा । श्रम ।

**ओड्रपुष्पम्** । क्ली । जवाकुसुम । वक्रजवा फुल । प म । See ओड्र ।

**ओड्रपुष्पा** । स्त्री । जवावृक्षे । वै निघ ।

**ओढापलङ्कषा** । स्त्री । गोरक्षतुण्डाम । वै निघ ।

**ओतु** । पु स्त्री । बिडाले । विड़ाल । श्रम । वनविड़ाले । वै निघ ।

**ओद** । पु । अन्ने ।

**ओदन** । पु । भद्रे सिक्थे । स च मण्डादिभ्यो गुरु । वा टी हेमा । क्ली । भक्ते । प सु । अन्ने । रा नि व २० । पिट्ठुलि । सा कौ ज्व बलि ।

**ओदनपाकी** । प । नीलझिण्टाम् । च चि २म चन्द तैल ।

**ओदना (निका) (नी)** । स्त्री । महासमङ्गायाम् । বেড়েলাবিশেষ । वाट्यालके । বেলেড়া । रा नि व ४ ।

**ओदनाह्वया (ह्वा)** । स्त्री । महासमङ्गायां । रा नि व ४ । वाट्यालके । हि खिरिहिटी । मद व १ ।

**ओल (ल्ल)** । पु । स्वनामख्यातकन्दशाके । ওল গাছ । र मा, भा पू १भ । गुणा — अग्निकर कफघ्न रुचिकर लघु अर्शसि पथ्य । ग्राम्यकन्दस्तु दोषल इति । राज । See सूरण । वि । आर्द्रे । मे लन्त्रिक ।

**ओल(ल्ल)कन्द** । पु । सूरणे । ওল । र मा । वनोल्ले । বুনো ওল । पानीयभक्तावध्याम् ।

**ओष** । पु । दाहे । प्रोष प्लोष इति पर्य्यायशब्दः । श्रम भरत ।

**ओषण (णि)** । पु । कटुकरसे । ঝাল । है च । (णी) पुरातिशाके । পুরতিশাক । गुण —कफवायुनाशित्वम् । राज । पुनर्नवायाम् ।

**ओषधम्** । क्ली । औषधे ।

**ओषधि** । स्त्री । फलपाकान्तवृक्षादौ, कदली धान्यादिके । ३ च । द्रव्येषु । तानि पुनरोषधय । ताश्च द्विविधा स्थावरा जङ्गमाश्च । तासां स्थावरा चतुर्धा यथा—वनस्पति, वृक्ष, वीरुत्, ओषधि श्चेति । तासु अपुष्पफलवान् वनस्पति, पुष्प फलवान् वृक्ष, प्रतानवती लता, फलपाकनिष्ठा च ओषधि । जङ्गमा अपि चतुर्धा जरायुजाण्डजस्वेद-जोद्भिज्जभेदात् । तत्र पशुमनुष्यव्यालादयो जरायुजा । खगसर्पसरीसृपप्रभृतयोऽण्डजा । क्रिमिकीट प्रभृतय स्वेदजा । मण्डूकादय उद्भिज्जा इति सु सू १अ ।

**ओषधिगण** । पु । रासायनिकौषधिगणे । सा सोमसमवीर्य्या महौषधय इति ख्याता । तासाञ्च सोमवत्क्रियाश्रो स्तुतय शास्त्रे कथिता । ताश्चाष्टादशधा—अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणु अजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति । एतासामुदगिन्यादिषु लब्धा —"आसाञ्च या क्षीरवत्यस्तासां क्षीरं कुडवमितं सकृदेव उप भुञ्जीत । यास्तु अक्षीरा मूलवत्य तासां प्रदेशिनी प्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे । श्वेत कापोती समूलपत्रा भक्षयितव्या । गोनस्यजगरी कृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्राव्य समभिहुतञ्च सकृदेवोप भुञ्जीत । चक्रकाया पय सकृदेव । ब्रह्मसुवर्चला सप्तरात्रमुपभोक्तव्या । अन्यकल्पेन शेषाणां पञ्च पलानि क्षीराढककथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत । सोमवदाहारविहारौ व्याख्यातौ केवलन्तु नवनीतमभ्यङ्गार्थे शेष सोम वदाहिमादिति । अथासां पृथग्विज्ञानमुच्यते —मण्डलै कपिलैश्चित्रै सर्पाभा पञ्चपर्णिनी । पञ्चारत्निप्रमाणा या विज्ञेयाजगरी बुधै ॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता । सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते ॥ द्विपर्णिनीं मूलभ वाम्रवर्णां कृष्णमण्डलां । द्व्यरत्निमात्रां जानीयाद् गोनसीं गोनसाकृतिं ॥ सक्षीरां रोमशां मृद्वीं रसे नेक्षुसमोपमां । एवं रूपरसाचापि कृष्णकापोतिमा दिशेत् ॥ कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा । एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ॥ छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे । जरामृ

**कुलङ्ग'** । पु । कृष्णसर्पविशेषे । वै निघ ।

**कुलङ्गी** । स्त्री । मेषशृङ्गाम् । काँकड़ाशृङ्गी । वै, निघ ।

**कुल(लि)ञ्ज'** । पु । कुलञ्जनशब्दे । रा नि व ६ । भ सु ।

**कुल(लि)ञ्जन:** । पु, क्ली । An aromatic plant (Alpinia Galanga) स्वनामख्यात द्रव्ये, गन्धमूलके । महाभरीवचायाम् । कुड़विशेष, महाभरी वच । गुणा —कटुतिक्तोष्ण दीपन मुखदोषनुत् । रा नि व ६ । कुलञ्जनम्य स्वरकृत् हृत्कण्ठमुखशोधन । चक्र चि । "कुलि ञ्जनकटु तिक्तमुष्णाग्निप्रदीपन । रुच्य स्वर्यञ्च हृद्यञ्च मुखकण्ठविशुद्धिकृत् । मुखदोषहृत्कफञ्चैव कास वातकफ हरेत् । बृहत्कुठ गुणैस्तैस्तु न्यून मध्यादिति स्मृतम् ॥" वै निघ ।

**कुलटी** । स्त्री । मन शिलायाम् । र मा ।

**कुलटवणम्** । क्ली । दमनके । नागदमनी । प सु ।

**कुल(लि)त्थ (क)** । पु । A sort of pulse (Dolichos biflorus Syn Dolichos uniflorus) शिम्बिधान्यविशेषे । कुर्त्तिकलाइ । हि कुलथी । तें चौलवलु । तत्पर्याय,—कालवृन्त, ताम्रवृन्त, कुलत्थिका (र), ताम्रवृन्त (वि), ताम्रबीज, सितेतर । कृष्णवर्णभेदेन स द्विविध । तामस्य तत्कृष्णगुणा — कषाय उष्ण रूक्ष वात कफघ्न रक्तपित्तकर श्वासकासमेदोऽर्शवलघ्न । रा नि व १६ । "उष्णो नयेन्मारुतपीनसाय कासप्रतिश्यायविबन्धगुल्मान् । हिक्का स रक्तम् ध्वासपित्त निहन्ति मेदश्च कुलत्थकोऽयं ॥" भवि १५च । उष्णवीर्य पाकेऽम्ल शुक्राश्मरीपीनसघ्न कासार्श कफवातघ्न पित्तासृग्दश । वा । रसत कषाय विपाके कटुश । हेमाद्रि । शिम्बीधान्यवर्ग । कषाय कटुक उष्णवीर्यत्वात् वात शमयेत् । पाकेन कटुत्व । सु सू ४०च ।

**कुलत्थगुड** । पु । हिक्काश्वासाधिकारे । कुलत्थस्य १०० प दशमूलस्य समष्टा १०० प भार्ग्या १०० प एकत्र एकस्मा वारि म द्रोणमिते (६४श) पादशिष्ट क्वाथ काथ्य । गुडस्य ५० प एकत्र पक्वा सिद्धभूते, प्रक्षेप—मधु ८ प वंशरोचना ६ प पिप्पली २ प गुडत्वक् तेजपत्र एला म २ मी । प द । "कुलत्थो दशमूलञ्च तथैव द्विश यष्टिका । शत शतञ्च सङ्गृह्य जलद्रोणे विपाचयेत् । पादावशेषे सञ्चिन्त्य गुडस्यार्द्धतुलाहितैत् । शीतीभूते च पक्के च मधुनोऽष्टौ पलानि च । षट्पलञ्च तुगाक्षीर्या पिप्पल्याश्च पलद्वय । त्रिसु गन्धिसुगन्ध तं खाददग्निबल प्रति ॥" रस र ।

**कुलत्थयूष** । पु । आमकुलत्थसाधितक्वाथे । प सु । गुणा —वातानुलोमक गुल्मघ्नतूणीघ्न प्रतितूणीघ्नश्च । वा । "वीर्योष्णो मधुरोऽग्निप्रदीपन । कषायो गुल्मकफहृद्यश्वासकासहा । वातानु लोमनतूणीमेहमेदोविनाशन ।" वै निघ । कुलत्थ यूषो मधुर कषायो भवेत् स वातस्य कफस्य हन्ता । महाश्मरीवायुजमेहहन्ता सन्दीपनो मेद विशोषणश्च ।" भवि ।

**कुलत्थषट्पलघृतम्** । क्ली । हिक्काश्वासाधिकारे । "कुलत्थाद्दशमूलाच्च भार्ग्या प्रस्थ पृथक् पृथक् । क्वाथयित्वा जलद्रोणे पादशेषे विपाचयेत् । द्विक्षीरं सर्पिष प्रस्थ सक्षारे पञ्चकोलकै । पलिकैस्तत्क्ष्यपेत् सिद्ध ॥" क्वाथार्थ—कुलथ २ श दशमूलमिलित २ श भार्गीमूल २श जल ७४ श शे १७ श घृत ४श छागदुग्ध ४श गवादुग्ध ४ श । कल्कार्थ—पञ्चकोल ও यव क्षार प्रत्येके ১প । रस र ।

**कुलत्थसूप** । पु । भृष्टकुलत्थसिद्धयूषे । गुणा —"कुलत्थसूपो वातघ्न कटु पाके कषायक । कफाविरोधी शुक्राश्मकरोऽश्मश्वासकासनुत् । शुक्राश्मरीघ्न पित्तकारक कथितोऽत्र ॥" वै निघ ।

**कुलत्था** । स्त्री । कुलत्थाञ्जने । काल सुर्मा । रा नि व १३ । वनकुलत्थिकायाम् । वनकुलथ । भ वानकुलित्था । क काडुलिग । तत्पर्याय,— हक्प्रसादा, अरण्यकुलत्थिका, कुलाली, लोचन हिता, चक्षुष्या, कुम्भकारिका कुलत्थिका (रा), कुल्माष, कुलबिलक (र) । गुणा —कटु तिक्ता चर्मशूलघ्नी विषमाध्मानघ्नी चक्षुष्या व्रणरोपणी च । रा नि व ५ ।

**कुलत्थाञ्जनम्** । क्ली । A blue stone used as a collyrium स्वनामख्याताञ्जन विशेषे, कुलत्थाकाराञ्जनप्रस्तरविशेषे । कृत्रिम अञ्जनविशेष । हि कालासुर्मा, खापरिया । तत्पर्याय,—कुम्भकारी, प्रसादहा । गुणा —"कुलत्थिका तु चक्षुष्या कषाया कटुका हिमा ।

विषविस्फोटकण्डूतिव्रणदोषनिवर्हिणी ॥" रा नि व १३।

**कुलत्थादिलेपः**। पु। कर्णमूलशोथे हित लेपे। कुलत्थ कट्फल शुण्ठी कृष्णजीरकञ्च सम भाग जलेन पेषयित्वा ईषदुष्णो लेप। भा म १म ख चि।

**कुलत्थाद्यघृतम्**। क्ली। अश्मर्यधिकारे। "कुलत्थसिन्धूत्थविडङ्गसार सशर्करा शीतलियावशू कम्। बीजानि कुष्माण्डकगोक्षुराणां घृतं पचेद्वरुणस्य तोये।" घृतं ४ श वरुणत्वक् १२॥० श (मतान्तरे ८ श) वारि ६४ श पादांश १६ श कुलत्थादिकल्क ८ प एकत्र पाच्यम्। मतान्तरे— घृत ४श वरुणछाल ४ श जल १६ श शे ४ श। कल्कार्थ—कुलथ सैन्धव, विडङ्ग, चिनि, शिउलिछोप, यवक्षार, कुष्माण्डबीज, गोक्षुरबीज, प्रत्येके ৮ তো। सा कौ। च द।

**कुलत्थान्नम्**। क्ली। तत्कृतभक्ते। गुणा— 'कुलत्थान्नन्तु मधुरं तुवरं रुचमुष्णकं। लघु वृष्ति कारं पाके कटुकञ्चाग्निदीपनम्। कफवातकृमि श्वासनाशनं परिकीर्त्तितम्॥' वै निघ।

**कुलत्थिका**। स्त्री। कुलत्थाञ्जने। रा नि व १३। रत्ना। कुलत्थे। वनकुलत्थे। वनकुर्ति। र मा। हे च। रक्तकुलत्थे। भा। शीतला देव्याम्। वै निघ।

**कुलत्थी**। स्त्री। कुलत्थिकायाम्।

**कुलनाश**। पु। उष्ट्रे। हे च।

**कुलपत्रः (कः)**। पु। दमनकवृक्षे। मनो। रा नि व १०।

**कुलपालकम्**। क्ली। करुण्ये। कमला लेबु। श च

**कुलवधूरस**। पु। सन्निपातज्वरे। चव तुर्य्यांशं एकभागतुल्यं। यद्यपि नवमुक्त तथाप्यद्धमव्यवहार। र मा स। पारदशोधक तामसम शिलातुल्यकानि द्रव्याणि। इन्द्रवारुणी (शोधन ७,मा) रसेन चणकाभा वटी कार्य्या। मै रत्नावली।

**कुलभृत्या**। स्त्री। गर्भिणीपरिचर्य्यायाम्। । अटा

**कुलयो** } स्त्री। वृक्षविशेषे। शीतला स्वादु
**कुली** } वातकृत् गुरुश्च। "कुलयी शीतला स्वादु वातला कफशुक्रकृत्।" वै निघ।

**कुलराढ़' (क.)**। पु। सेराढ़ापरनाम्नि पीयूषवर्णाश्वे। "कुलाह कुलराहस्तु सेराहं सुरराहक।" ज द ३ श।

**कुलर्क'**। पु। तालमर्द्दने। हारा।

**कुलवर्णा**। स्त्री। रक्तमूलाया त्रिवृति। लाल তেউড়ী। रा नि व ६।

**कुलसञ्चयम्**। क्ली। परिपेले। কেউটমুতা।

**कुलसौरभम्**। क्ली। मरुवकवृक्षे। हि मरुआ। श मा।

**कुलघण्ट. (ण्डक')**। पु। जलावर्त्ते। हारा।

**कुल(ला)हल.**। पु। (Coryza Terebinthina or Celsia Coromandelina) भृङ्गराजे। कुक्कुरशिम्बी। र मा। "कुलहलविषमुष्टी भूलुषो भृतकेशी।" वा भ १५ च। महाश्रावणिकायाम्। मुण्डीरी। मद व १।

**कुलहला**। स्त्री। गोरक्षमुण्डीक्षुपे। वै निघ।

**कुलच्छया**। स्त्री। कर्पूरशय्याम्। वै निघ। कपिकच्छाम्। श च।

**कुला**। स्त्री। मनःशिलायाम्। वै निघ। शुक्र शिम्बाम्।

**कुलाट'**। पु। क्षुद्रमत्स्यविशेषे। श मा।

**कुलाय.**। पु। पक्षिनीडे। स्थानमात्रे। मे। क्ली। शरीरे।

**कुलायस्थ**। पु। पक्षिणि। श च।

**कुलायिका**। स्त्री। पक्षिशालायाम्। त्रिका।

**कुलाल**। पु। वनकुक्कुटपक्षिणि। कुम्भ पक्षिणि। हारा। मे। कुम्भीरे। वै निघ।

**कुलालिका (ली)**। स्त्री। नीलोत्पलविशेषे। अञ्जनान्तरे, कुलत्थाञ्जनप्रकारविशेषे। मे। रा नि व १३। वनकुलत्थिकायाम्। रा नि व ५।

**कुलासक'**। पु। दुरालभायाम्। प मु।

**कुलाह (क)**। पुं। ईषत्पाण्डुवर्णकृष्णजानु घोटके। हे च। "ईषत्पीत कुलाहस्तु यो भवेत् कृष्णजानुक।" ज द ३ श। रक्तकोशिमाने।

२३। कुलत्थे। गन्धशालौ। प सु। यावकै। याउ। मे। अर्द्धस्विन्नधान्यगोधूमादौ। घुघुनी। "अर्द्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादय। कुल्माष इति कथ्यन्ते। कुल्माषा गुरवो रुक्षा मासला भिन्नवर्चस।" भा। कीटदष्टमाषे। यूक धान्ये, यवादौ। वै निघ। वशि। रा नि व २३। जटामांसाम्। वनकुलत्थे। र मा। काश्मीरे तुलसीभेदे। क्ली। धान्यविशेषे। বোরো ধান। राजमाषे। वर्वटी। यवौदने। सु चि ६ अ। यवपिष्टमाषे। सु चि १० अ।

कुल्माषाभिभवम्, कुल्माषाभिषुतम्। क्ली। काञ्जिके। "कुल्मा षादिभिरर्द्धस्विन्नैरभिषूयते स्म।" अ टी स्वा।

कुल्मासम्। क्ली, पु। कुल्माषे। विश्व।

कुल्यम्। क्ली। अस्थ्नि। হাড়। द्रोणाष्टकपरि माणे। आमिषे। कीकसे। পাঁজর। मे।

कुल्या। स्त्री। द्रोणाष्टकमाने। जीवन्त्याम्। मे। स्थूलवार्त्ताक्याम्। বড় বেগুণ। र मा। मय मचाल्याम्। अ।

कुल्वकाम्। क्ली। त्रिप्रमले। वै निघ।

कुवम्। क्ली। वारिजपुष्पमात्रे। पद्मे। हे च।

कुवकालुका। स्त्री। घोलीशाके। रा नि व ७।

कुवङ्गम्। क्ली। सीसके। সীসে। रा नि व १३।

कुवज्रकम्। क्ली। वैक्रान्तमणौ। रा नि व १३।

कुवरः। पुं। तुवररसे। আমরস। अ टी।

कुवल.। पु। (Ziziphus Jujuba) बदरी वृक्षे। কুল গাছ। र मा। क्ली। पद्मे। उत्पले। मे। बदरफले। কুল। मद व ६। दृढबदरे च ह ४ अ। मुक्ताफले। प सु।

कुवलकौ। स्त्री। ग्रामकोलवृक्षे। वै निघ।

कुवलकुष'। पुं। कालिकालकाले।

कुवलयम्। क्ली। उत्पले। नीलोत्पले। নীল শুন্দি। হি কোঁঈ। रा नि व १०। अ र। "इन्दीवरश्वेतपद्मं कुवलयम्।" ह। श्वेतपद्मे। नीलपद्मे। वै निघ। श्वेतकुमुद। भा पु १भ।

कुवलयिनी। स्त्री। उत्पलिन्याम्। শুন্দি বা কুমুদের ঝাড়। रा नि व १०।

कुवला। स्त्री। मुक्ताविशेषे।

कुवली। स्त्री। कोलिवृक्षे। কুল গাছ। हे च।

कुवाली। स्त्री। अस्मन्तकवृक्षे। रा। আবাটু।

कुवासः। पु। दुर्गन्धे। वै।

कुवाहुलः। पु। उष्ट्रे। श।

कुविडम्। क्ली। विड्लवणे। रा नि व ११।

कुवृत्तिकृत्। पु। पूतिकायाम्। करञ्जभेदे। কাঁটা করঞ্জ। श च।

कुवेणी। स्त्री। मत्स्यधानिकायाम्। খালুই।

कुवेर. (कः)। पु। तुन्नवृक्षे। তুঁদ। मे।

कुवेराक्षी। स्त्री। पाटलावृक्षे। अ। सिता पाटलिकायाम्। लताकरञ्जे। पेटिकावृक्षे। रा।

कुवेलम्। क्ली। कुवलये। पद्मे। हे च।

कुवैद्य.। पु। कुत्सितवैद्ये।

कुश। पु, क्ली। जले। मे। Sacrificial grass (Poa cynosuroides) स्वनाम ख्यातहणे। কুশ। हि दभ्। कुशदभ उष्णा कुथि। तत्पर्याय,—कुथ, दर्भ, पवित्र (अ), याज्ञिक, ह्रस्वगर्भ, वह्नि, क्तुप (शब्दर)। कुशो द्विविध ह्रस्वदीर्घभेदेन। तयोर्दीर्घपत्रकुश एव सितदर्भ उच्यते। स एवाधिकगुण। ह्रस्वो ऽपि प्रायेण सितदर्भतुल्यगुण। "दर्भौ द्वौ च गुण तुल्यौ तथापि च सिताऽधिक। यदि श्वेतकुशा भावे त्वपर योजयेद्भिषक्॥' रा नि व ८। "दर्भद्वयं त्रिदोषघ्न मधुर तुवर हिम। मूत्रकृच्छ्रा श्मरीतृष्णावस्तिरुक्प्रदरासजित्॥" भा पु १भ। कुशो ह्रस्वदर्भ इति।" सु सू ३८ अ। ह। तृणपञ्चमूले कुशासने च। च द प्रमेह चि।

कुशद्वयम्। क्ली। स्थूलसूक्ष्मदर्भद्वये। वा सू १५ अ वीरतरादि। "दृषादनीनलकुशद्वयगुण्ड गुन्द्रा।"

कुशनामा। पु। उष्ट्रे। हे च।

कुशप। पु। पानपात्रविशेषे। उषा।

कुशपत्र(क)म्। क्ली। तदाकारपत्रशस्त्रविशेषे। तत्र विस्रावणे प्रयोज्यम्। "कुशाटीवदने चाभ्य ङ्गुलार्द्धं स्यात्तयो फलमिति।" सु सू ८ अ।

तैल ८ प पक्क भर्जयेत्। गुड (पुरातन) २५ प आमलकीरस १०० प तत्तरसेन शर्करां गोलयित्वा भर्जितकुष्माण्डेन सह तावत् पचेत् यावत् पाको दर्व्वीलिप्तो न भवति। पाकशेषे पिप्पल्यादिचूर्णप्रक्षेपो देय। यथा—यमानी जीरकम्। पिप्पली पिप्पलीमूल चित्रकमूल गजपिप्पली धान्यक विडङ्ग मरिच त्रिफला वन यमानी इन्द्रयव सैन्धव एषां प्रति चूर्ण ८ तो त्रिकटुमूलचूर्ण ८ प। च द यक्ष्मा चि।

**कुष्माण्डग्रह**। पु। भूतग्रहविशेषे। लक्षण—"बहुप्रलापः कृष्णास्य प्रविजृम्भितगात्रिन। शून प्रलम्बवृषण कुष्माण्डाधिष्ठित वदेत॥' वा उ ४ अ।

**कुष्माण्डतैलम्**। क्ली। कुष्माण्डबीजतैले। कुमडाबीचिर तेल। गुणा—वातपित्तघ्न मलघ्न गुरु शीतलञ्च। वा तैलव।

**कुष्माण्डनाडिका (डी)**। स्त्री। कुष्माण्डस्य नाले। कुमडार डाँटा। गुणा—"कुष्माण्ड नाडिका गुर्व्वी शर्कराश्मरिनाशिनी। राज २ प।

**कुष्माण्डवटक**। पु। कुष्माण्डकृतवटके। कुमड़ाबडि। यथा—"कुष्माण्ड कर्त्तयित्वाथ जल निष्काश्य यत्नत। कुस्तुम्बुरुनिशामाषचूर्णं सतिलसैन्धव। निक्षिप्य वटका कार्य्या आतपे शोषयेत्तत। रुचिदा वातहन्त्रारश्चैलतैले सुपा चिता॥' वै निघ।

**कुष्माण्डशालि**। पु, स्त्री। स्वनामख्यातशालि धान्यविशेषे। गुणा—मधुरा गुरु सुगन्धा पीता दुर्ज्जरा स्थूलतण्डुला कोमला च। रा नि व १६।

**कुष्माण्डसुरा**। स्त्री। कुष्माण्डकृतसुराविशेषे। कुमड़ार मद। गुणा—"कुष्माण्डस्य सुरा गुर्व्वी धातुवर्द्धनकारिणी। अग्निमान्द्यकरी हृद्या प्रोक्ता हस्तिमन्त्र बुधै॥" वै निघ।

**कुष्माण्डचार**। पु। कुष्माण्डभक्षणोत्थचारे। "कुष्माण्ड मनु कृत्वा तु त्रिधा घर्म्मे विशोषयेत्। स्वाल्या विनिधाय तत्तस्य पिधानेन पिधाय च। चुल्ल्यां निवेश्य वह्निश्च ज्वालयेत् कुशलो जन। यदा तत्र भवेद्रस्म किञ्चत्कारो दृढो भवेत्। तदा निर्व्वापयित्वैन कृत्वा सुचिक्कणं सम॥" भा म १ म गमदि।

**कुष्माण्डी**। स्त्री। कर्कोटकयाम्। विलाती कुमड़ा वा कोंक्रोल। कुष्माण्डलतायाम्। कुमड़ा गाछ। रा नि व ७।

**कुष्माण्डोन्माद**। पु। भूतोन्मादभेदे। स च कुष्माण्डग्रहजात। शार्ङ्ग पू ७ अ। लक्षण—"बहुप्रलापः कृष्णास्य प्रविजृम्भितगात्रिन। शूनप्रलम्ब वृषण कुष्माण्डाधिष्ठित वदेत॥" वा उ ४ अ।

**कुसिम्बा**। स्त्री। कुसिम्बीलतायाम्।

**कुसिम्बी**। स्त्री। रक्तशिम्बीलतायाम्। शिम् गाछ। रा नि व १६।

**कुसुमम्**। क्ली पु। पुष्प। स्त्रीरजसि। Ophthalmia नेत्ररोगविशेषे। मे। लवङ्गे। निघ २म भाग चि।

**कुसुमफलम्**। क्ली। जातीफले। वै निघ।

**कुसुममध्यम्**। क्ली। भव्यफले। चालिता। श च।

**कुसुमवती**। स्त्री। रजस्वलायाम्।

**कुसुमसार**। पु। मधुनि। "घृतकुसुमसार लीढ।' च द यक्ष्म चि गमादि।

**कुसुमा**। स्त्री। मालतीपुष्पवृक्षे। रक्तपाटलायाम्। जातीपुष्पवृक्षे। रत्ना।

**कुसुमाकर**। पु। वसन्तसमये।

**कुसुमाञ्जनम्**। क्ली। पुष्पाकाररीतिभस्मसम्भवे अञ्जने। पुष्पाञ्जन। रा नि व १३। तत पर्य्याय,—पौष्पक रीतिपुष्प पुष्पकेतु (श)।

**कुसुमात्मकम्**। क्ली। कुङ्कुमे। छारा। पु। केश। व निघ।

**कुसुमाधिप**। पु। चम्पकवृक्ष। श र।

**कुसुमाधिराज (राट्)**। पु। महानागकेशर चम्पकवृक्ष। नागेश्वरचाँपा। त्रिका।

**कुसुमावलि**। स्त्री। इन्द्रकृतसिद्धयोगटीकायाम्।

**कुसुमासवम्**। क्ली, पु। मधुनि। रा नि व १४।

**कुसुमोदरम्**। क्ली। भव्यफल। चालिता। प मु।

**कुसुम्भ (म्भ)**। पु, क्ली। कुसुमफूल। कुसुम्भ फूलेर नाडिकस्मद्‌। मु। See पर्णोक।

**कुचिरन्ध्र** । पु । नल । रा नि व ८ ।

**कुचिशूलम्** । क्ली । वातव्याधौ । भा नि ।

**कू** । स्त्री । पिशाच्याम् । शब्दमा ।

**कूकुर** । पु । कुकुरे । वै निघ ।

**कूच** । पु । कुचे, स्तने । उणा ।

**कूचिका** । स्त्री । चन्द्रादिमर्थे । त्रिका । चन्द्रकूचिकायाम् । दुग्धपाचिते क्षतभक्ष्ये च तण्डुले । वै निघ ।

**कूची** । स्त्री । तन्तकूचिकायाम् । दुग्धकूचिकायाम् । वै निघ ।

**कूज** । पु । अव्यक्तशब्दे ।

**कूजनम्** । क्ली । कुन्थनम् । भा म १म ख चि । "कूजनश्चातिवेगस्य ।"

**कूजितम्** । क्ली । पचिरवे । हे

**कूट** । पु । भग्नशृङ्गवृषे । हला । शृङ्गे । श र । अवि २० श । वृषविशेषे । क्ली । लौह सारे । पित्तले । प सु । वारिपाणे । वै निघ ।

**कूटक** । पु, क्ली । सुरानामगन्धद्रव्ये । श मा ।

**कूटगृहम्** । क्ली । जैलाकागृहे । च शा ३य ।

**कूटज** । पु । कुटजवृक्षे । कुडचि गाछ । भा पू १म । श्वेतकुटजे । वै निघ ।

**कूटजीव** । पु । पुत्रजीववृक्षे । रा नि व ९ ।

**कूटतुला** । स्त्री । कुत्सिततुलायाम् । धाराप निक्ति ।

**कूटपाक** । पु । सन्निपाते । पैत्तिकज्वरे । वै निघ ।

**कूटपाकल** । पु । हस्तिन पैत्तिकज्वरे । त्रिदोषात्मकसन्निपातज्वरे । लक्षण—"सर्व्वदोषो स्वथा यस्य सन्निपात प्रकुप्यति । यथायथमपि दोषाणां तस्य स्यापि लक्षयेत् । । केवलो श्वासपरम सशाह सम्मोचन । विरावोदरसे तस्य तनाहरति जीवितम् । । सन्निपातमिम स्याह भिषज कूटपाकलम् ॥" भा म १म ।

**कूटपालक** । पु । पित्तज्वरे । कुलालस्य पचने । कुमारेर पोण । कारा ।

**कूटप(पू)र्व्व** । पु । हस्तमांसदोषजज्वरे । त्रिका ।

**कूटमानम्** । क्ली । कुत्सितमाने ।

**कूटलमस्तक** । पु । चविकायां । व निघ ।

**कूटयन्त्रम्** । क्ली । मृगपक्षिबन्धनार्थयन्त्रविशेषे । फाँद । तत्पर्य्याय उन्माथ (अ) ।

**कूटशाल्मलि** । पु । रक्तरोहितकवृक्षे । रा नि व ८ । A species of Simul silk cotton tree कृष्णशाल्मलीवृक्षे । काशि माला जीवनीकापला इति भाषा । तत्पर्य्याय—कृतशितशाल्मलि प्रीतोरोचन कूटशाल्मलिक । गुणा—तिक्त कटु भेदकरो मत । उष्ण कफघ्र वातघ्न प्रीहां गुल्म यकृद्ग्ण । विषदोष भूतबाधा मलसत्त्व विनाशयेत् । मदघ्र रक्तदोषघ्र शूलघ्रश्च विनाशयेत् ॥ वै निघ ।

**कूटस्थम्** । क्ली । नखीनामकगन्धद्रव्ये । व्याघ्र नखी । रा नि व १० ।

**कूटार्थसहिकृत्** । पु । पुत्रञ्जीववृक्षे । वै निघ ।

**कूणि** । त्रि । रोगादिना कुञ्चितकरे । टुण्टो । च ठी ।

**कूणिका** । स्त्री । पशुशृङ्गे । हे च । कलिकायाम् । श चि ।

**कूथनम्** । क्ली । कुन्थने । वै निघ ।

**कूद्दाल** । पु । कुद्दालकवृक्षे । च टी र ।

**कूप (क)** । पु । गभीर सङ्कीर्णस्थानादिबद्ध पुरुषकृतजलाशये । कूआ, पातकूआ, इन्दारा । तत्पर्य्याय—अन्धु, प्रहि, उदपान (अ), अवट, कीदार (ज), कात कर्त्त, वत्र, काट, खात अवत, क्रिवि सूद, उत्स, ऋश्यदात् कारोतरात कुशिप, केवट । वा टो इमा वारिव । तस्य लक्षण—"भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृति । बद्धो ऽबद्ध स कूप स्यात्तदम्भ कौपमुच्यते ॥ जल गुणा—कौपम्पयो यदि स्वादु त्रिदोषघ्न हिम लघु । तत्क्षारङ्कफवातघ्न दीपन पित्तकृत परम् ॥" भा । लघु पित्तकर कफघ्न क्षारञ्च । रा नि व १४ । वातकफघ्न दीपन लघु पित्तकर सक्षार लवणरस काले काले शीतलमुष्णञ्च । राज । तलादिरक्षार्थ पात्रविशेषे । कुपो ।

**कूपकच्छप** । पुं । कूपस्थकच्छपे ।

**कूपज** । पु । केशे, लोमि ।

**कूपजलम्**। क्ली। कूपसलिले। কোঁয়াব জল। निर्झरजले। M Williams

**कूपदर्दुरः** } **कूपमण्डूकः** } पु। कूपस्थभेके। কোঁন বেঙ।

**कूपाङ्गः (ङ्गः)**। पु। रोमाञ्चे। श र।

**कूपिका**। स्त्री। नदीजलगतोपले। मे।

**कूपी**। स्त्री। पात्रविशेषे। कपिकच्छाम्। আলকুশী। वै निघ।

**कूपोदकम्**। क्ली। कूपजले।

**कूप्यम्**। क्ली। रौप्ये। माणिक्ये।

**कूभ(म)म्**। क्ली। अल्पसरोवरे। जटा।

**कूरः**। पु। अन्ने, भक्ते। रा नि व २०।

**कूर्चम्**। क्ली, पु। केशादिकृतमार्जन्यां। কুঁচি। मे। इन्द्रलुप्तादिरोगेषु प्रयोज्ये यन्त्रविशेष, यद्दर्त्तमाने बुरुष इति भण्यते। 'कूर्च वृत्तैकपृष्ठस्या सूचय ता सुबन्धना। सयोज्य नौलिकाव्यङ्ग केशशातेषु कुट्टने॥' अत्रि। मस्तके। भ्रुवो मध्ये नासिकोपरिभागे। श्मश्रु णि। म। "कूर्चाय शिरास्नायुस्थिमांससम्भवा ज्ञेया।" भा। तन्नामक वैकल्यकरस्नायुमर्मषट्के। तस्य च स्थान अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे। हे च। क्षिप्रोपयु भय पार्श्वे वा। 'क्षिप्रस्योपरिष्टात् उभयत कूर्चो नाम। कूर्चा हस्तपादयोर्वामेद्वेषु षट्, हस्तयोद्वा ग्रीवामेढ्रयोरेकैक।" सु शा ६अ। अश्वस्य पादहस्तयोरयत पश्चाद्भागे। ज द २अ।

**कूर्चकः**। पु। जीवके। लाङ्गलपक्षिविशेषे। अति २० अ। मूमथ्यादिदश्वषेषु। क्ली। दन्तधावनकूर्चिकायाम्। वै निघ।

**कूर्चपर्णी**। स्त्री। मेषशृङ्गाम्। মেড়াশিঙে। वै निघ।

**कूर्चभाक्**। क्ली। मूर्व्यपर्व। वै निघ।

**कूर्चमर्म**। क्लो। तन्नामक स्नायुमर्मषट्के। See कूर्चम्।

**कूर्चलः**। पु। मालिनां पुनर्नवोद्भिदकाल।

**कूर्चशिर**। क्ली। अङ्गुष्ठकर्म। গুড়মুড়া। तन्नामकरुजाकरस्नायुमर्मचतुष्टये। तस्य च स्थान गुल्फकर्मणोरधोभागे उभयपार्श्वत। सु शा ६ अ।

**कूर्चशीर्षः (कः)**। पु। जीवकौषधौ। र मा। ज द १२ अ। नारिकेलवृक्षे। मा।

**कूर्चशेखरः**। पु। नारिकेलवृक्षे। रा नि व १०।

**कूर्चिकः (का)**। पु, स्त्री। क्षीरविकृतौ। क्षीरशा। अम। "दध्ना तक्रेण वा सह पाकात् पृथग्भूतघनद्रवभागक्षीर कूर्चिकेत्युच्यते।" वा टी रैमा। च सू ५ अ। सा द्विविधा—"दध्ना सह च यत् पक्व क्षीर सा दधिकूर्चिका। तक्रेण पक्व यत् क्षीर सा भवेत्तक्रकूर्चिका॥' भरत। सूचिकायाम्। কুঁচ্। वै निघ। कुञ्चले। কুঁড়ি। तूलिकायाम्। কুঁচি। हे च। मे।

**कूर्चिकापिण्ड**। पु। किलाटे। छाना। र मा।

**कूर्दनम्**। क्ली। शिशुक्रीड़ायाम्। अम।

**कूर्पम्**। क्ली। भ्रुवोर्मध्यभागे। हे च।

**कूर्परः (रा)**। पु, क्ली। भुजमध्यभागे। কনুই। रा नि व १८। कफोणौ, जानुदेशे। मे।

**कूर्परमर्म**। क्ली। ततस्थानस्थिते तन्नामकमर्मणि। सु शा ६ अ।

**कूर्पासः (कः)**। पु, क्ली। अर्द्धचोलके। चोलि। स्त्रीणा काञ्चुलिकायाम्। Bodice हे च।

**कूर्म**। पु। उन्मीलननिमीलनकरे शरीरस्थ वायुविशेषे। श चि। कच्छपे। रत्ना। स्त्री (र्मी)। कच्छप्याम्।

**कूर्मपित्तम्**। क्ली। कच्छपपित्ते।

**कूर्मपृष्ठ**। पु। अम्लानवृक्षे। ঝাঁটি। श च। क्ली। कम्पपृष्ठदेशे।

**कूर्मपृष्ठकम्**। क्ली। शरावे। শরা। हि सकोरा। श च।

**कूर्मपृष्ठकास्थि**। क्ली। कच्छपास्थनि। কাছিমের খোলা। एतत्स्वेद वातव्याधिहर।

**कूर्ममांसम्**। क्ली। कच्छपमांसे। See मद्य।

**कूर्मशीर्षक**। पु। जीवकवृक्षे। रा नि व ५।

**कूलम्**। क्ली। तीरे, तटे। अम। जलाशये।

**कूलकम्**। क्ली, पु। पटोलपत्रे। "निम्बकूलक

षस्तु।" सि यो क्ष चि। पटोले। भा पु
म शाकव। वल्मीके। उइढिपि। मे।

**लहण्डक** । पु। जलावर्त्ते। त्रि।

**ल्मा** । स्त्री। कृष्णदन्तीवृक्षे। वै निघ।

**लालम्** । क्ली। एलाकरवीरे। रत्ना।

**लिका** । स्त्री। ओषधिविशेषे। हाडयोडा।
न्मूलनस्येन कालदष्टोऽपि जीवति। च द।

**लेचर** । पु। पञ्चविधानूपाम्लगतपशुवर्गे।
स च वर्गं नलापादिपशुपर। यथा—"नूलाप
गण्डवाराहचमरीवारणादय। एते कूलेचरा
प्रोक्ता यतः कूले चरन्त्यपाम्॥ गुणा—कूलेचरा
मरुत्पित्तहरा वृष्या बलावहा। मधुरा शीतला
स्निग्धा मूत्रला श्लेष्मवर्द्धना इति॥ भा। "गज
गवयमहिषरुरुचमरसृमररोहितवराहखड्गि गोकर्ण
कालपुच्छकोद्रन्यङ्कुवनगवयप्रभृतय।" "वातपित्त
हरा वृष्या मधुरा रसपाकयो। शीतला बलिन
स्निग्धा मूत्रला कफवर्द्धना॥" सु स ४६ अ।

**कूवर** । पु। कुब्जके। म।

**कूष्माण्ड (क)** । पु। कुष्माण्डलतायाम्।
कुमड़ा गाछ। हे च।

**कूष्माण्डकी** । स्त्री। भूमिकुष्माण्डे। कुष्माण्ड
लतायाम्। व निघ।

**कूष्माण्डवटिका** । स्त्री। कलायकुष्माण्डशस्य
कृते वटीविशेषे। कुमड़ावड़ि। कुष्माण्डवटिका
ज्ञेया पूर्व्वोक्तवटिकागुणा। विशेषात्पित्तरक्तघ्नी
लघ्वी च कथिता बुधैः॥"

**कूष्माण्डिका (की)** । स्त्री। पीताम्लाबुम्।
निघ।

**कूष्माण्डी** । स्त्री। कर्कारौ। "कुष्माण्डी तु भृशं
लघ्वी कर्कारुरपि कीर्त्तिता।" हे च।

**कूहा** । स्त्री। कुज्झटिकायाम्। कुयाशा। हि
कुहासा। श र।

**कृक** । पु। गले। गला। हे च।

**कृकण** । पु। क्रकरपक्षिणि। कयार इति लोके।
अम। क्षमी। हारा।

**कृकर (ल)** । पु। पञ्चनामखुप। टपे। रा
नि व ६। (Perdix Sylvatica) पक्षि
विशेषे। कर्कटे पाखी। हि कुयार। म कर
दाक। गुणा—"कृकरा लघवः कायाग्नि
वर्द्धनो भृशम्।" अति। करवीरवृक्षे। रा नि
व १०। (ल) धुत्कारे शरीरस्थवायुविशेषे।
तल्लम्।

**कृकरा (ला)** । स्त्री। पिप्पल्याम्। रा नि व ६।

**कृक(कु)लाश (स)** । पु। सरटे। गिर
गिटे कांकलास। रत्ना। गृहगोधायाम्।
तत्पर्य्याय,—सरट (अ) वेदार, कृकवपात्,
तृणाञ्जन, प्रतिसूर्य्य, (चि), प्रतिसूर्य्यक, हृत्तिस्थ,
काण्डकागार दुरारोह, द्रुमाश्रय (रा), अण्डज
(वै)। कृकलाश (मि), कृकलास, सरट् (अ
टी), सरटू (उ)।

**कृकवाकु** । पु। Gallinaceous fowl
कुक्कुटे। रत्ना। मयूरे। त्रिका। सरटे। हारा।
स्त्री। गृहगोधिकायाम्।

**कृकपा** । स्त्री। कड्डघड्डारिकपक्षिणि।

**कृकाटिका** । स्त्री। ग्रीवापश्चाद्भागे। घाड।
रा नि व १८। तत्स्थानस्थतन्नामकवैकल्यकार
मर्म्मविशेषे। सु शा ६ अ।

**कृकालिका** । स्त्री। पक्षिभेदे।

**कृकुवत्सा** । स्त्री। मर्कटे। वै निघ।

**कृकूलास** । पु। कृकलासे। अ टी।

**कृधार** । पु। शरीरे। रा नि व ८।

**कृच्छ्रम्** । क्ली। कष्टे। मूत्रकृच्छ्ररोगे। रा नि
व २०। सन्तापे। म।

**कृच्छ्रसाध्य** । त्रि। कष्टसाध्ये।

**कृच्छ्रहर** । पु। पाषाणभेदे। वै निघ।

**कृच्छ्रारि** । पु। बिल्वान्तरवृक्षे। रा नि व ८।

**कृच्छ्रोन्मील** । पु। चक्षुरोगविशेषे। तस्य
लक्षण यथा—"चलनु गरलसव प्राप्य वर्त्माश्रया
शिरा। सुप्तोत्थितस्य कुरुते वर्त्मस्तम्भं सवेदनम्।
पांशुपूर्णाभनेत्रत्व कृच्छ्रोन्मीलनमश्नु च। विमर्द्दनात
स्याच्च सम कृच्छ्रोन्मील वदन्ति तम्॥ मा।

**कृणाञ्ज** । पु। कृष्णजीरे।

**कृतम्** । क्ली। फले। हे च। विहिते। मे।

**कृतक(कटक)म्** । क्ली। रसाञ्जने। रा नि
व १३। विड्लवणे। विट्लवण। रा नि व ६।

**कृतक** । त्रि। कृत्रिम। शब्दा।

**कृतच्छाया** । स्त्री। श्वेतकोषातक्याम्। रत्ना।

**कृतच्छिद्रा** । स्त्री । कोषातकीलतायाम् । ঝিঙ্গা, ঘোষালতা । रा नि व ३ ।

**कृतघ्नः** । पु । कुक्कुरे । रा ।

**कृतत्रा** । स्त्री । त्रायमाणायाम् । रा ।

**कृतत्राणा** । स्त्री । त्रायमाणायाम् । গোধালে লতা । रा नि व ५ ।

**कृतपिण्डीतः (क)** । पु । शिलारसे । निघ ।

**कृतफलम्** । क्ली । कक्कोलफले । रा नि व १२ ।

**कृतफला** । स्त्री । कोलशिम्ब्याम् । আলাকুশী । रा नि व ७ ।

**कृतबन्धनम्** । क्ली । कोशातकीफले । ঘোষা । भा म ४थ ममता चि । "कृतबन्धनस्य ८ ।

**कृतमालः** । पु । कर्णिकारवृक्षे व्याधिघातवृक्षे । সোঁদাল, সোনালী । च सू ४ अ । ततफल ससर्नं (अर्थात् कोष्ठस्थ श्लेष्ममलादिकमपक्वं अधो नयति) । सद्यातचारिपक्षिविशेषे । सद्यातचारिखगेषु । सु सू ४६ अ ।

**कृतयूषः** । पु । प्रमथ्यायाम् । वा चि ८ अ ।

**कृतरस** । पु । सैन्धवशुण्ठ्यादियुक्ते कृते तद्विपरीते च अकृते मांसरसे । तदुक्तं— "छागस्य सक्थिनं मांसं निरस्थि तैत्तिरं तथा । चतुर्थांशान्वितं सूदा कल्पितं क्वाथितं जले । पिप्पली पिप्पलीमूलशुण्ठीचित्रकधान्यकैः । हिङ्ग्वा च संयुते तोये क्वाथ्य सार्द्धकोन्मिते । मांसेऽस्मिन्द्विपलं तत्र दाडिमान् कुट्टितान् क्षिपेत् । तं रसं मर्दितं पूतं हिङ्गुसैन्धवजीरकैः । युक्तं मधुपितन्मध्य मद्यानां शुद्धिकाङ्क्षिणाम् ॥" वा टी ।

**कृतवेध (क)** । पु । कोषातक्याम् । শ্বেত ঘোষা । र मा ।

**कृतवेधन** । पु । श्वेतपुष्पकोषातके । শ্বেত ঘোষা । आरग्वधवृक्षे । सु सू ३९, ४५ अ । ज्योत्स्निकायाम् । गडाफट्की । च सू २अ । च द गर्भाधि ।

**कृतवेधना** । स्त्री । Plant with white flowers, Emetics राजकोषातकीलतायाम् । ঝিঙ্গা, ঘোষালতা । च सु । श्वेतघोषायाम्, कटुघोषायाम् । रत्ना ।

**कृताख्ययूषः** । पु । लवणस्नेहकटुकादिकृतयूषे । चक्र गुरुयूष । वैद्यकम् ।

**कृताञ्जलिः** । स्त्री । लज्जावतीलतायाम् । धरणि । "पादशौण्डीकृताञ्जलि ।" च द ज्व चि । एतदङ्ग एकाहिकज्वरघ्नम् । "रक्तसूत्रेण संवेष्ट्य बध्नीयादैकाहिकं जयेत् ।" भै ज्वरोग चि । रस र ज्वरे चि ।

**कृतान्तः** । पु । यमे । अम ।

**कृतान्ता** । स्त्री । रेणुकनामगन्धद्रव्ये । রেণুক । श च ।

**कृतान्नम्** । क्ली । लड्डुकादौ ।

**कृतालय** । पु । भेके, मण्डूके । त्रिका ।

**कृतिः** । स्त्री । करणे । हिंसायाम् । मे । (का) स्त्री । भूर्जत्वचि । नकुल १२म ।

**कृती (इन्)** । त्रि । कुशले ।

**कृत्तम्** । क्ली । छिन्ने । वेष्टिते । हे च ।

**कृत्ति (का)** । स्त्री । कणसारादिचर्मणि । त्वचि । भूर्जे । "कृत्तिस्त्वग्भूर्जयोः ।" मे ।

**कृत्तिकाभव** । पु । चन्द्रे । श ।

**कृत्तिवासा** । पु । शिवे । अम ।

**कृत्या** । स्त्री । आभिचारिकदेवतायाम् । कियो जन्मा चि । 'कृत्याकर्मोज्वरापहम् ।' क्रियायाम् । मे ।

**कृत्योन्माद** । पु । कृत्याजातभूतोन्मादरोगे । शाङ्ग ।

**कृत्रिम(क)म्** । क्ली । विड्लवणे । रा नि व ६२३ । रसाञ्जने कृत्रिमरसाञ्जने । रत्ना । चीन कर्पूरे । गन्धराजे । कस्तूरिकायाम् । रा नि व १२ । पु । सिल्हके । शिलारस । मे । पीतचन्दने । वै निघ ।

**कृत्रिमधूपक** । पु । षोडशाङ्गधूपे । अम । तत्पर्याय—वृकधूप (अ) ।

**कृत्रिमरत्नम्** । क्ली । काचे । वै निघ ।

**कृत्रिमविषम्** । क्ली । विषदोषे । वै निघ ।

**कृत्स(त्स्न)म्** । क्ली । जले । कुक्षौ । मे ।

**कृदर** । पु । धान्यादि रक्षार्थ आधारविशेषे । গোলা । सि कौ ।

**कृन्तनम्** । क्ली । लाङ्गले । सि का ।

**कृन्तनम्**। क्ली। छेदने।

**कृन्तनिका**। स्त्री। छुरिकायाम्।

**कृपण**। पु। कृमौ। "कृपणस्तु कृमौ पुंसि। मे।

**कृपणा**। स्त्री। सविषकीटविशेषे। सु कल्प ८ अ।

**कृपाण'**। पु। खड्गे। अ।

**कृपाणिका(णी)**। स्त्री। कर्त्तर्य्याम्। কাতারি। छुरिकायाम्। मे।

**कृपीटम्**। क्ली। उदरे। तोये। अ। वने। काष्ठे। श र।

**कृपीटपाल**। पु। वायौ। श र।

**कृपीटयोनि**। पु। अग्नौ। हे च।

**कृमि**। पु। कीटे। কেঁচো, পোকা। अम। तत्पर्य्याय —नीलाङ्ग (अ), नीलाङ्ग क्रिमि (अ टी) पुलुङ् (न)। पतङ्गमात्रे। पिपीलिकायाम्। কীটাস্ফোট लाक्षायाम्। कृमिर्ना कृमिवकीटे लाक्षायां कृमिर्ल खरे।' मे। कृर्ण नाम्नि। हे च।

**कृमिकम्**। क्ली। पूगफल। पु। क्षुद्रकृमौ।

**कृमिकण्टकम्**। क्ली। विडङ्ग। उदुम्बरे। यज्ञडुमुर। मे। चित्रायाम्। इन्दुरकाणी। हे च।

**कृमिकर**। प। सविषकीटभेदे।

**कृमिकर्ण (क)**। पु। कीटविशेषे। কাণ কোটারি। कर्णरोगविशेषे। কাণে কাণ কোটার। 'यदा तु मूर्च्छन्त्यथवापि जन्तव सजन्त्यपत्यान्यथवापि मक्षिका। तदञ्जनत्वाच्छ्रवणौ निरुच्यते, भिषग्भिराद्यैः कृमिकर्णकस्तु सः॥" सु उ २० अ। वा उ १७ अ।

**कृमिका**। स्त्री। ग्रन्थिपर्ण्याम्। राजिकायाम्। राइ वा दान सरिषा। मौर्य्ये। वै निघ।

**कृमिकालानलरस**। पु। कृमिघ्नौषधे। विडङ्ग २ प विषचूर्ण १ प लौह ४ तो पारद २ तो गन्धक २ तो छागदुग्धे मर्द्दन। र सा स।

**कृमिकुम्भा**। स्त्री। महाकालनलतायाम्।

**कृमिकोष (ष)**। पु। फलविशेषे। নাজুক। तत्पर्य्याय,—सयाडी, पुत्राणम पच कन्, कषाया, अमरोधक। तद्य सयाडि तिक्त रक्तरोधनं ज्वरार्शःप्रदरातीसारघ्न कण्ठरोगघ्नञ्च। वै चन्द्रिका।

**कृमिकोषोत्थम्**। क्ली। कौषेये। রেশমী কাপড়।

**कृमिकोष्ठक**। प। अन्यस्य रोगविशेषे। लक्षण यथा—"कृमयस्य यस्य वाहस्य जन्तुभि परिवेष्टितम्। पुरीष जायते भिन्न त विद्यात कृमिकोष्ठकम्॥' अ ट ४६ अ।

**कृमिगुहा**। स्त्री। इन्द्रवारुणीलतायाम्। मद व १।

**कृमिग्रन्थि**। पु। नेत्रसन्धिगतरोगे। लक्षण —"कृमिग्रन्थिवर्त्मन पक्ष्मनश्च कण्डूं कुर्य्युः कृमयः सन्धिजाता। नानारूपा वर्त्मशुक्लस्य सन्धौ चरन्तोऽन्तर्नयनं दूषयन्ति॥" सु उ २अ।

**कृमिघातिनी (गुडी)**। स्त्री। कृमिघ्ने रसे। पाठ— रसगन्धाजमोदानां कृमिघ्नब्रह्मवीजयो। एक द्वि त्रि चतु-पञ्च लिन्दोर्वीजस्य षट् क्रमात्। सञ्चूर्ण्य मधुना सर्व्वं गुडिकाकृमिघातिनी। खादन् पिपासुस्तोयञ्च सुस्तानाङ्गमिश्रान्वितं। आखुपर्णी कषायञ्च पिबेच्चानु समग्रकम्॥" পারা ১ ভ গন্ধক ২ ভ বনযমানী ৩ ভ বিডঙ্গ ৪ ভ পলাশপাবড়া ৫ ভ তেঁদবীজ ৬ ভ। र घि।

**कृमिघाती**। पु। विडङ्गे। त्रि। कृमिनाशके।

**कृमिघ्न**। प। पारिभद्रवृक्षे। পাল্তে মান্দার। रा नि व ८। कटनिम्बे। पलाण्डौ। कोलकन्दे। बदरमूल। रा नि व ७। भल्लातकवृक्षे। रा नि व ११। विडङ्गे। प सु। हरिद्रायाम्। भा। त्रि। कृमिनाशके।

**कृमिघ्नरस**। पु। कृम्यधिकारे रस। विडङ्ग पलाशवीज निम्ववीज रससिन्दूर, एषां चूर्णं समं। र सा स।

**कृमिघ्ना (घ्नी)**। स्त्री। हरिद्रायाम्। लाक्षायाम्। विडङ्गायाम्। वै निघ। धूम्रपत्रायाम। তামাক। रा नि व ५। सोमराज्याम्। श च।

**कृमिज(ग्ध)म्**। क्ली। अगुरुकाष्ठे। अम। लाक्षायाम। त्रि। कृमिजात।

**कृमिजलज**। पुं। कृमिशङ्खे। रा नि व १३।

**कृमिजा (जाग्धा)**। स्त्री। लाक्षायाम। गाला, আলতা। र भा।

**क्रमिजित्।** क्ली। विडङ्गे। वै निघ या व्या महाराजादौ।

**क्रमिदन्तः (कः)।** पु। दन्तरोगविशेषे। सुश्रुत —"क्रमच्छिद्रश्चल सावी सशरभो महारुजः। अनिमित्तरुजो वातात् स ज्ञेय क्रमिदन्तकः॥" सु नि १६ च। वा उ २२ च।

**क्रमिद्रवः।** पु। लाक्षायाम्। वै निघ।

**क्रमिनाशनम्।** क्ली। विडङ्गे। वै निघ। त्रि। क्रमिहरे।

**क्रमिनाशिनी।** स्त्री। अजमोदायाम्। वै निघ।

**क्रमिपाना (मा)।** स्त्री। लाक्षायां। वै निघ।

**क्रमिफलः।** पु। उदुम्बरवृक्षे। मद व ५।

**क्रमिमक्षिका।** स्त्री। क्रमितुल्यमक्षिकायाम्। वै निघ।

**क्रमिमुद्गरः।** पु। क्रमिघ्ने रस। "क्रमेण वृद्ध रसगन्धकाजमोदाविडङ्ग विषमुष्टिका च। पलाश बीजञ्च विचूर्णमस्य निष्कप्रमाण मधुनावलीढम्॥" पारा १ भ गन्धक २ भ अजमोदा ३ भ विडङ्ग ४ भ कुचिला वा निम ५ भ पलाशबीज ७ भ। मात्रा ४ माषा। भैष।

**क्रमिरिपुः।** पु। विडङ्ग। श र।

**क्रमिरोगः।** पु। उदरजक्रमिजन्यरोग। कृमिरोग। क्रमिद्विविध वहिरभ्यन्तरभेदेन। जन्मभेदेन चतुर्धा। मामतो विंशति। मा नि। एकविंशति। शार्ङ्ग। तदुत्पत्तिकारण कीटभीज नादि। "वाह्यास्तथाभ्यन्तरा स्युस्तु यूका वहि चरा। लिख्याद्यान्येऽन्तरचरा कफात्ते हृदया दका। अन्नादा उदरावेष्टाश्चुरवश्च महान्नदा। सुगन्धा दर्भकुसुमास्तथा रक्ताश्च मातर। सौरसा लोमविध्व सा लोमद्वीपा उदुम्बरा। केशादाश्च तथैवान्ये शकृज्जाता मकेरुका। लिलिहाश्च सशूलाश्च सौसुरादा ककेरुका। तथान्य कफरक्ताभ्यां सञ्जाता स्नायुक स्मृत॥" शार्ङ्ग पू ७अ।

**क्रमिलः।** त्रि। क्रमिविशिष्टे।

**क्रमिला।** स्त्री। अनेकप्रसवाम्, बहुसन्तानप्रसवायाम्। हे च। त्रि। क्रमियुक्ते।

**क्रमिवारिरुहः।** पु। क्रमिशङ्खे। रा नि व १३।

**क्रमिविनाशरसः।** पु। क्रम्यधिकारे रस। पारद गन्धक चव लौह-मन शिला धातकी त्रिफला तीक्ष्ण विडङ्ग-हरिद्रा दारुहरिद्रा, एषां प्रति सम भाग आर्द्रकरसेन ७वा भाव्य। र सा स।

**क्रमिवृक्षः।** पु। कोषाम्रे। कलपाई। भा।

**क्रमिशङ्खः।** पु,क्ली। Fish of the conch जीवशङ्खे। कृमिशङ्ख। अस्य रसवीर्यादि शङ्ख सदृश। रा नि व १३।

**क्रमिशत्रुः।** पु। विडङ्ग। प सु। वै निघ २ भ ज्व चि। पारिजातवृक्षे। पालुदे मान्दार।

**क्रमिशात्रवः।** पु। विट्खदिरे।

**क्रमिशुक्ति (क्तिः)।** स्त्री। जलशुक्तौ। झिनुक। रा नि व १३। मत्स्यभेदे। वै निघ।

**क्रमिशैलः (कः)।** पु। वल्मीके। श र।

**क्रमिसरारी।** पु। अग्निप्रकृतिकीटे। तेन दष्टे पित्तजरोगा जायन्ते। सु कल्प ८अ।

**क्रमिहन्त्री (हा)।** स्त्री। विडङ्गायाम्। वै निघ।

**क्रमिहरम्।** क्ली। विडङ्गे। भा म, १भ तद्रि ज्व चि। विडलवणे। मरिच। वै निघ। त्रि। क्रमिघ्ने।

**क्रमिहररसः।** पु। क्रम्यधिकारे। अत्र देव दारौ हस्तिघोषाफलम्। पारद गन्धक इन्द्रयव यमानी मनःशिला पलाशबीजानि प्र समभाग, हस्तिघोषाफलरसेन दिन समाद्य वटी कार्या। अनुपान शालपर्णीरस। र सा स।

**क्रमिहा [न्]।** पु। विडङ्गे। रा।

**क्रमी (इन्)।** त्रि। क्रमिविशिष्टे।

**क्रमीलकः।** पु। वनमुद्गे। मुगानी। रा नि व १६। See मकुष्ठक।

**क्रशः।** त्रि। दुर्बले। सूक्ष्मे। अल्प।

**क्रशनम्।** क्ली। स्वर्णे। के।

**क्रशरः।** पु। क्रसरे, तिलतण्डुलमाषपक्वे भक्त विशेषे। रक्ता यवाग्वादिव। तिलमिश्रौदने, तुल्य तिलान्ने। हे च।

**क्रश(स)रा।** स्त्री। तिलौदने। द्वारा। खेच रान्ने। खिचुड़ि, थवरसा। "तिलतण्डुलमाषैश्च क्रसरा त्रिसरेति।' प म २ ख। तावच्च—

"तण्डुला दाडिमसिश्रा नवणाद्रकहिङ्गुभि ।
संयुक्ता सलिले सिद्धा कृशरा कथिता बुधः ॥'
भा । गुणा —"कृशरा शुक्रला बल्या गुरु पित्त
कफप्रदा दुर्जरा बुद्धिविष्टम्भमलमूत्रकरी मता ॥"
वै निघ । यवागूपाकविधिना पाक काथ्य ।

**कृशरोमा** । स्त्री । शकशिम्ब्याम् । वै निघ ।

**कृशला** । स्त्री । शिर केशे । श च ।

**कृशशाक (ख)** । पु । पर्पटके । केऽपापड़ा ।
रा नि व ५ ।

**कृशाकु** । पु । जुणकरणे । वै निघ ।

**कृशाङ्ग** । पु । लूतायाम् ।

**कृशाङ्गी** । स्त्री । प्रियङ्गुलतायाम् । श च ।

**कृशाणु (नु)** । पु । चित्रकवृक्ष । रा नि
व ६ ।

**कृशाक्ष** । पु । ऊर्णनाभौ । वै निघ ।

**कृशि(षि)का** । स्त्री । आखुकर्णीलतायाम् ।
इन्दुरकाणी । रा नि व ३ ।

**कृशीवल** । पु । काकजङ्घागुल्मे । केउग्रा
ठेङा । र मा

**कृशोदरी** । स्त्री । श्वेतसारिवायाम् । भा पू
१ भ । See अनन्ता ।

**कृष** । पु । भरण्ये । हे च ।

**कृषक** । पु । फालकर्षके । त्रिका । इषे ।
श च ।

**कृषिहिट** । पु । गृहनिर्माणपटु पक्षिविशेषे ।
बाबुई । रा ।

**कृषिलौहम्** । क्ली । मुण्डलौहे । रा नि
व १० ।

**कृषीवल** । पु । काकजङ्घावृक्षे ।

**कृष्टपच्य** । त्रि । व्रीहिधान्ये ।

**कृष्टपाक्यम्** । क्ली । व्रीहिधान्ये ।

**कृष्णम्** । क्ली । सौवीराञ्जने । रा नि व १३ ।
मरिचे । प मु । यवनाले । काल जनाय ।
स्रोतोऽञ्जने । रसाञ्जन । र मा । लौहे । जटा ।
नीलाञ्जने । रा नि व २३ । कृष्णागुरुणि । रा
नि व ६ । भा । अगुरुणि । रत्ना । लौहकिट्टे ।
विडङ्गलवणे । सौवर्चलवणे । तुत्थके ।
वै निघ । नेत्रतारके । पु । राजसर्षपे । काल
सरिषा । रा नि व १६ । कृष्णसारमृगे । रत्ना ।
वायसे । स । मन्दविषवृश्चिके । मधु काष्ठकीट
भेदे । सु कल्प ८ भ । कोकिले । विश । कर
मर्दवृक्षे । श र, । "कृष्णे प्रवरवासन्त हरिमल्लव
शिम्बिका ।" हे च ।

**कृष्णक** । पु । कृष्णमुद्गे । कृष्णतण्डुलायाम् ।
वै निघ ।

**कृष्णकञ्चुक** । पु । कृष्णचणके । वै निघ ।

**कृष्णकदली** । स्त्री । महाराष्ट्रप्रसिद्ध कदली
विशेषे । गुणा —"कृष्णा तु कदली रुच्या तुवरा
मधुरा लघु । वातपित्तातिसारादिकरी मेहपित्तहृषा
हरा ॥ वै निघ ।

**कृष्णकन्दम्** । क्ली । रक्तोत्पले । ब्रह्मकमल ।
त्रिका ।

**कृष्णकरवीर** । पु । कृष्णपुष्पकरवीरवृक्षे ।
काल करवीर गाछ । गुणे करवीरतुल्य । रा
नि व १० ।

**कृष्णकर्कटक** । पु । कृष्णवर्णकर्कटविशेषे ।
काल काँकडा । गुणा —"कृष्णकर्कटकस्तेषां
बल्य कोष्णोऽनिलापह । शुक्र सन्धानकृत् सृष्ट
विण्मूत्रोऽनिलपित्तह ॥" सु सू ४६ भ ।

**कृष्णकर्म्म** । क्ली । पक्वस्य व्रणरोपणस्यानस्य
कृष्णीकरणे । सु चि १भ ।

**कृष्णक(के)लि** । पु । (*Mirabilis Jalapa*)
स्वनामख्यातपुष्पवृक्षे । कृष्णकलि, सन्ध्यामणि ।
गुलालफुल इति गौडीया । तस्य शाखा रक्त
तण्डुलीयमालवत् ग्रन्थियुक्ता च । पत्र ताम्बूलवत्
परं क्षुद्र भवति, तत्पुष्प श्वेतरक्तपाटलपीताभ
युक्तपञ्चदल षट्केसरमध्यमोपद्रम्य सायाह्ने विक
सति प्रायेण सुलभ । बीजञ्च तस्य कृष्ण मरिचा
भञ्च । वै निघ ।

**कृष्णका** । स्त्री । राजिकायाम् । वाईसरिषा ।
प मु ।

**कृष्णकाक** । पु । द्रोणकाके । हला ।

**कृष्णकातरा** । स्त्री । रक्तगुञ्जायाम् । वै निघ ।

**कृष्णकापो(ति)ती** । स्त्री । महौषधिविशेषे ।
सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमां । एव
रूपरसाञ्चापि कृष्णकापोतिमादिशेत् ॥" सु चि
३० भ । See औषधि ।

जलनीलः। पु। शैवाले। स।
जलनीलिका (ली)। स्त्री। शैवाले। रा नि व ८। भा ४ स नाडीव्रणे।
जलनेत्रः। पु। जलमधूके। वै निघ।
जलपटालिका। स्त्री। जलौकायाम्। जोंक। शब्दर।
जलपलिका। स्त्री। पद्मिन्याम्। पद्मेर झाड। वै निघ।
जलपक्षी। पु। हंसादिजलचरपक्षिषु। तन्मांस स्निग्ध हिम गुरु वृष्य वातहरञ्च। रा नि व १७।
जलपाकः। पु। वारिपाके। मिश्र अग। 'कर्षं गृहीत्वा द्रव्यस्य क्वाथयेत्प्रास्थिकेऽम्भसि। चतुर्थांशं प्रयोक्तव्य जलपाके त्वयं विधि॥" वा चि २४।
जलपादपः। पु। वृक्षे। वै निघ।
जलपारावत। पु। जलकपोते। रा नि व १९। तत्पर्य्याय,—कोपो, जलकपोत (रा)।
जलपिप्पली। स्त्री। महाराष्ट्रीक्षुपे। कोंचडा घास। हि पानिसगा, जलपिपरी। रा नि व ४। तत्पर्य्याय,—महाराष्ट्रा, शावरदी, तोय वल्लरी, मत्स्यादनी, मत्स्यगन्धा, लाङ्गली, शकुलादनी, अग्निज्वाला, चित्रपर्णी, प्राणदा, तृणशीता, बहुशिखा। गुणा —जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघु। संग्राहिणी हिमा रूक्षा रक्तदाह व्रणापहा। कटुपाकरसा रुच्या कषाया वह्नि वर्द्धिनी॥ भा पू गुणप। कटु तीक्ष्णा कषाया मलशुद्धिकरी व्रणकीटादिदोषरसदीपनी च। रा नि व ४।
जलपोथम्। क्ली। जले। शब्दर।
जलपुष्पम्। क्ली। जलजातपुष्पे। यथा— "अष्टधा कमलानि स्युर्नीलवाली चतुष्पदा। जल नीवी च कुमीका जलपुष्पगणस्त्वयम्॥" चर्क।
जलपृष्ठजा। स्त्री। शैवाले। श च।
जलप्रद। पु, क्ली। पीतवालके। वै निघ।
जलप्राणी। पु। जलजन्तौ। वै निघ।
जलप्रिय। क्ली। धन्याके। रा नि व ६। चातकपक्षिणि। श र। मत्स्ये। श च।
शोभाञ्जनवृक्षे। रा। स्त्री। हिममौक्तिकायाम् हिंदे। प मु।
जलप्रायम्। क्ली। अनूपदेशे। अम।
जलप्लवः। पुं। जलमार्जारे। उद्‌बिडाल हारा।
जलफलम्। क्ली। शृङ्गाटके। पानिफल। भा
जलफेनः। पु। समुद्रफेने। वै निघ।
जलबन्ध (बन्धु)। पु। मत्स्ये। श च।
जलब्राह्मी। स्त्री। वाकुच्याम् सोमराज वै निघ। हिममौक्तिकायाम्। हिंदे। त्रिका हारा।
जलभू। पु, स्त्री। कतके। कोंचड़ा। श च।
जलमण्डपिका (पी)। स्त्री। शैवाले। वै निघ। वारिपर्ण्याम्। पानी। रस की ज्वाला सुखदसे।
जलमद्गु। पु। मत्स्यरङ्कपक्षिणि। माछराङा। हारा।
जलमधु(धू)क। पु। जलजातमधूकवृक्षे। जलमउआ। तत्पर्य्याय,—मङ्गल्य, दीर्घपत्रक, मधुपुष्प, क्षौद्रप्रिय, पतङ्ग, कौरेष्ट, गैरिकाख्य। गुणा —मधुर व्रणघ्न वान्तिघ्न बलशुक्रवर्द्धन रसायन शीतलञ्च। रा नि व ११। "मधूक पुष्प मधुर शीतल गुरु बृंहणम्। बलशुक्रकर प्रोक्तं वातपित्तविनाशनम्। फलगुणा —शीत गुरु स्वादु शुक्रल वातपित्तनुत्। अहृद्य हन्ति तृष्णास्र दाहश्वासक्षतक्षयान्॥" भा।
जलमसि। पु। मेघे। हा।
जलमक्षिका। स्त्री। वारिमक्षिकायाम्। जलकमी। त्रिका।
जलमार्जार। जलबिडाले। उद्‌बिडाल। त्रिका।
जलमीनः। पु। मत्स्यभेदे। वै निघ।
जलमुक् (च्)। पुं। मेघे। अ। मुकुटे।
जलमुस्तम्। क्ली। जलजमुस्तायाम्। वै निघ।
जलमूर्त्तिका। स्त्री। करकायाम्। श च।

**जलमोदम्** । क्ली । उशीरे । रा नि व १२ ।

**जलयष्टि** । पु । वक्षीयष्टिमधुनि । वै निघ । जलयष्टिर्विषच्छर्दि तृष्णाग्लानिविनाशकृत् । अत्रद ।

**जलरङ्क** । पु । वकपक्षिणि । वक पाखी । हे च ।

**जलरङ्कु** । पु । हरिणे । वै निघ । दात्यूह पक्षिणि । डाक पाखी । हारा ।

**जलरञ्ज** । पु । वकपक्षिणि । हे च ।

**जलरण्ड'** । पु । जलसर्पभेदे । जलविन्दौ । हे च । अ र ।

**जलरस** । पु । लवणे । हारा । सौवर्चललवणे । क्षारलवणे । हारा ।

**जलरुट् (रुहम्)** । क्ली । पद्मे । हे च ।

**जलरुहा** । स्त्री । कुसुमशालौ । हैमन्तिक धान्यविशेष । रा नि व १६ ।

**जलरूप:** । पु । मकरे । त्रिका ।

**जललता** । स्त्री । जलतरङ्गे । हा ।

**जलवरण्ट** । पु । जलवसन्तरोगे । पानवसन्त । हारा । तत्पर्याय,—मीन । हा ।

**जलवल्कल** । पु । कुम्भिकायाम् । पाना । हारा ।

**जलवल्ली** । स्त्री । शृङ्गाटके । पाणिफल । रा नि व ७ ।

**जलवायस** । पु । मद्गुकाके । पानकौडि । हे च ।

**जलवालिका** । सौदामन्याम् । त्रिका० ।

**जलवास (सा)** । पु । विष्णुकन्दे । रा नि व ७ । गुण्डासमीहृणे । रा नि व ८ । क्ली । उशीरे । रा नि व १२ ।

**जलवाह** । पु । मेघे । हे ।

**जलविक्रमा** । स्त्री । सन्नकौशे । रा नि व ११ ।

**जलविडाल** । पु । जलमार्जारे । उद्बिडाल । हारा ।

**जलविन्दुजा** । स्त्री । यावनालीशर्करायाम् । रा नि व १४ ।

**जलविल्व** । पु । कर्कटे । पद्माङ्ग । जल वल्कले । पाना । हारा ।

**जलवृश्चिक** । पु । इक्षाकमत्स्ये । एँचला माछ । हारा । चिङ्गटमत्स्ये । चिङ्गडीमाछ । त्रि ।

**जलवेतस:** । पु । जलजातवेतसविशेषे । जल-वेत । म वक्लानु । क वैसयमरणु । प सु । तत्पर्याय,—निकुञ्चक, परिव्याध, नादेयी । गुणा —तिक्तशीतल व्रणशोधन कफरक्तपित्तघ्न मलापही कषायो रचोघ्नश्च । रा नि व ९ ।

**जलव्यध** । पु । कङ्कोटमत्स्यभेदे । बाँकिना माछ वा गांगाडा । हारा ।

**जलव्याल'** । पु । जलसर्पे । अम ।

**जलशिरीष (षिका)** । पु, स्त्री । शिरीष भेदे । हि टिटिनी । "त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका ।' भा ।

**जलशुक्ति** । स्त्री । शम्बूकायाम् । झिनुक । जलशिपो इति च ख्याते । तत्पर्याय,—वारि शुक्ति, क्षमिशुक्ति, पुष्टिका, तोयशुक्तिका, क्षुद्र शुक्तिका, शम्बुका, नरशुक्ति । गुणा —"कटु स्निग्धा दीपनी गुल्मशूलविषदोषहरी रुच्या पाचनी बल्या च ।" रा नि व १३ ।

**जलशुचि'** । पु । शृङ्गाटके । पाणिफल ।

**जलशूकम्** । क्ली । शैवाले । हे च ।

**जलशूकर** । पु । शिशुमारे । शुशुक । हारा कुम्भीरे । हे च ।

**जलश्यामाक** । पु । तृणधान्यविशेषे । गुणा —श्यामाकवत् ।

**जलसन्त्रास** । पु । कुक्कुरदष्टनरोगविशेषे । येन जल दृष्ट्वा त्रसति । वा चि ।

**जलसम्भव** । पु । जलवेतसे । रा नि व ९ ।

**जलसर्पिणी** । स्त्री । जलौकायाम् । जोँक । हे च ।

**जलसूकर** । पु । कुम्भीरे । वनशूकरे । हे निघ ।

**जलसूचि** । पु । क्रौञ्चपक्षिणि । कङ्कोट मत्स्ये । जटा । शृङ्गाटके । शिशुमारे । मे । काके । हे च । स्त्री । जलौकायाम् । जोँक ।

**जलस्था** । स्त्री । गण्डूर्वायाम् । रा नि व ८ ।

**जलहास** । पुं । समुद्रफेने । त्रिका ।

**जलनीलः** । पुं । शैवाले । भ ।

**जलनीलिका (ली)** । स्त्री । शैवाले । रा नि व ८ । भा ४म गाडीशर्षं ।

**जलनेनः** । पु । जलमधूके । वै निघ ।

**जलपटाम्बिका** । स्त्री । जलौकायाम् । जोँक । शब्दर ।

**जलपलिका** । स्त्री । पद्मिन्याम् । पद्मेर झाड । वै निघ ।

**जलपक्षी** । पुं । हंसादिजलचरपक्षिषु । तन्मांसं स्निग्धं हिमं गुरु वृष्यं मारुतहरञ्च । रा नि व १७ ।

**जलपाक** । पु । वारिपाके । सिद्ध जल । 'क्वथे गृहीत्वा द्रव्यस्य क्वाथयेत्पास्थिकेऽम्भसि । अष्टांशक शेषोऽर्ध्यं जलपाके त्वयं विधिः ॥" वा चि २५ ।

**जलपादपः** । पु । वृक्षे । वै निघ ।

**जलपारावत** । पु । जलकपोते । रा नि व १८ । तत्पर्याय,—कोपी, जलकपोत ( रा ) ।

**जलपिप्पली** । स्त्री । महाराष्ट्रीक्षुपे । काँचड़ा घास । हि पानिसगा, जलपिपरी । रा नि व ४ । तत्पर्याय,—महाराष्ट्रा, शारदी, तोयवल्लरी, मत्स्यादनी, मत्स्यगन्धा, लाङ्गली, शकुलादनी, अग्निज्वाला, चित्रपत्नी, प्राणदा, तृणशीता, बहुशिखा । गुणा —"जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः । संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा । कटुपाकरसा रूक्षा कषाया वह्निवर्द्धिनी ॥" भा पू गुणाः । कटु तीक्ष्णा कषाया मलशुद्धिकरी व्रणकीटादिदोषरक्तदोषघ्नी च । रा नि व ४ ।

**जलपोथम्** । क्ली । जले । शब्दर ।

**जलपुष्पम्** । क्ली । जलजातपुष्पे । यथा— "अष्टधा कमलानि स्युः जलवासी चतुष्पदा । जलजीवी च कुम्भीका जलपुष्पगणस्त्वयम् ॥" अर्क ।

**जलपृष्ठजा** । स्त्री । शैवाले । श च ।

**जलप्रद.** । पु, क्ली । पीतवालके । वै निघ ।

**जलप्राणी** । पु । जलजन्तौ । वै निघ ।

**जलप्रिय** । क्ली । धन्याके । रा नि व ६ । चातकपक्षिणि । अ र । मत्स्ये । श च । शीभाञ्जनवृक्षे । रा । स्त्री । हिमशीर्षिकायाम् । हिंचे । प मु ।

**जलप्रायम्** । क्ली । अनूपदेशे । अम ।

**जलप्लवः** । पु । जलमार्जारे । उद्बिडाल । हारा ।

**जलफलम्** । क्ली । शृङ्गाटके । पानिफल । भा ।

**जलफेन.** । पु । समुद्रफेने । वै निघ ।

**जलबन्ध (बन्धु )** । पु । मत्स्ये । श च ।

**जलब्राह्मी** । स्त्री । ब्राह्म्याम् सोमराज । वै निघ । हिलमोचिकायाम् । हिंचे । मिका । हारा ।

**जलभू.** । पु, स्त्री । कतके । कॉचड़ा । श च ।

**जलमण्डूपिका (पी)** । स्त्री । शैवाले । वै निघ । वारिपर्णीम् । पाणा । रस की ज्वाला सुखरसे ।

**जलमद्गु** । पु । मत्स्यरङ्गपक्षिणि । माछराङा । हारा ।

**जलमधु(धू)क** । पु । जलजातमधूकवृक्षे । जलमउआ । तत्पर्याय,—मधूलक, दीर्घपत्रक, मधुपुष्प, क्षौद्रप्रिय, पतङ्ग, कौरेष्ट गैरिकान्य । गुणा —मधुर व्रणघ्न वान्तिघ्न बल शुक्रवर्द्धन रसायन शीतलञ्च । रा नि व ११ । "मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम् । बलशुक्रकरं प्रोक्तं वातपित्तविनाशनम् । फलगुणा —शीतं गुरु स्वादु शुक्रल वातपित्तनुत् । अहृद्यं हन्ति पित्तास्रदाहश्वासक्षतक्षयान् ॥" भा ।

**जलमसि** । पु । मेघे । हा ।

**जलमक्षिका** । स्त्री । वारिमक्षिकायाम् । जलकमी । मिका ।

**जलमार्जारः** । जलबिडाले । उद्बिडाल । मिका ।

**जलमीन** । पु । मत्स्यभेदे । वै निघ ।

**जलमुक् (च्)** । पु । मेघे । अ । मुस्तके ।

**जलमुस्तम्** । क्ली । जलमुस्तायाम् । वै निघ ।

**जलमूर्त्तिका** । स्त्री । करकायाम् । श च ।

जलमोदम्। क्ली। उशीरे। रा नि व १२।

जलयष्टि। पु। वल्लीयष्टिमधुनि। वै निघ। जलयष्टिर्विषच्छर्दि तृष्णाग्लानिवयापह। श्रजर।

जलरङ्क। पु। वकपक्षिणि। वक पाखी। हे च।

जलरङ्कु। पु। हरिणे। वै निघ। दात्यूह पक्षिणि। डाक पाखी। हारा।

जलरङ्ग। पु। वकपक्षिणि। है च।

जलरण्ड। पु। जलसर्पभेदे। जलविन्दौ। हे च। श्र र।

जलरस। पु। लवणे। हारा। सौवर्चललवणे। चारलवणे। हारा।

जलरुट् (रुहम्)। क्ली। पद्मे। हे च।

जलरुहा। स्त्री। कुङ्कुमशालो। हैमन्तिक धान्यविशेष। रा नि व १६।

जलरूप। पु। मकरे। त्रिका।

जललता। स्त्री। जलतरङ्गे। हा।

जलवरण्टः। पु। जलवसन्तरोगे। पानवसन्त। हारा। तत्पर्य्याय,—मीन। हा।

जलवल्कल। पु। कुम्भिकायाम। पाना। हारा।

जलवल्ली। स्त्री। शृङ्गाटके। पानिफल। रा नि व ७।

जलवायस। पु। जलकाके। पानकौडि। हे च।

जलवालिका। सौदामन्याम्। त्रिका।

जलवास (सा)। पु। विष्णुकन्दे। रा नि व ७। गुण्डासिनीतृणे। रा नि व ८। क्ली। उशीरे। रा नि व १२।

जलवाह। पु। मेघे। हे।

जलविक्रमा। स्त्री। सप्तकोशवी। रा नि व ११।

जलविडाल। पु। जलमार्जारे। उद्बिडाल। हारा।

जलविन्दुजा। स्त्री। यावनालशर्करायाम्। रा नि व १४।

जलविल्व। पु। कर्कटे। पञ्चाद। जल वल्ली। पाना। हारा।

जलवृश्चिक। पु। दृश्चिकमत्स्ये। एँचला माछ। हारा। चिङ्गटमत्स्ये। चिङ्गड़ीमाछ। त्रि।

जलवेतस। पु। जलजातवेतसविशेषे। जल-वेत। सवङ्गानु। क वेतसमरपु। प सु। तत्पर्य्याय,—निकुञ्चक, परिव्याध, नादेयी। गुणा—तिक्तशीतल व्रणशोधन कफरक्तपित्तघ्न ग्राही कषायी रचोघ्न। रा नि व ९।

जलव्यध। पु। कङ्कत्रोटमत्स्यभेदे। काँकिला माछ वा गाङ्गाडा। हारा।

जलव्याल। पु। जलसर्पे। श्रम।

जलशिरोष (षिका)। पु, स्त्री। शिरीष भेदे। हि टिटिनी। "त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका।" भा।

जलशुक्ति। स्त्री। शम्बूकायाम्। झिनुक। जलशिपी इति च ख्याति। तत्पर्य्याय,—वारि शुक्ति, क्षुद्रशुक्ति, पुष्टिका, तीयशुक्तिका, चुद्र शुक्तिका, शम्बुका, नदशुक्ति। गुणा—"कटु स्निग्धा दीपनी गुल्मशूलविषदोषहरी रुच्या पाचनी बल्या च।" रा नि व १३।

जलशुचि। पु। शृङ्गाटके। पानिफल।

जलशूकम्। क्ली। शैवाले। है च।

जलशूकर। पु। शिशुमारे। शुशुक। हारा कुम्भीरे। हे च।

जलश्यामाक। पु। तृणधान्यविशेषे। गुणा —श्यामाकवत्।

जलसन्त्रास। पु। कुक्कुरदंशजरोगविशेषे। येन जल दृष्ट्वा त्रसति। या वि।

जलसम्भव। पु। जलवेतसे। रा नि व ९।

जलसर्पिणी। स्त्री। जलौकायाम्। जोँक। हे च।

जलसूकर। पु। कुम्भीरे। वनशूकरे। वै निघ।

जलसूचि। पु। क्रौञ्चपक्षिणि। कङ्कत्रोट मत्स्ये। मठा। शृङ्गाटके। शिशुमारे। मे। काके। हे च। स्त्री। जलौकायाम्। जोँक।

जलस्था। स्त्री। गण्डदूर्व्वायाम्। रा नि व ८।

जलहास। पु। समुद्रफेने। त्रिका।

**जलाका।** स्त्री। जलौकायाम्। জোঁক।

**जलाखुः।** पु। जलमार्जारे। त्रिका।

**जलाख्या।** स्त्री। जलमधूकवृक्षे। वै निघ।

**जलाञ्चलम्।** क्ली। शैवाले। শেওলা। मे।

**जलाटनः।** पु। कङ्कपक्षिणि। বাঁক পাখী। स्त्री (नी)। जलौकायाम्। मे।

**जलाटकः।** पु। शिशुमारे। नक्रराजे। हारा।

**जलाण्डकम्।** क्ली। रोहितादिमत्स्यडिम्बे। মাছের পোণা। हारा।

**जलात्मिका।** स्त्री। जलौकायाम्। श र।

**जलाधारम्।** क्ली, पु। पीतोशीरे। वै निघ। जलाशये। अम।

**जलाबु(म्बु)का।** स्त्री। जलौकायाम्। वै निघ।

**जलामोदम्।** क्ली। उशीरे। रा नि व १२।

**जलाम्बिका।** स्त्री। कूपे। हा।

**जलायु(वु)का।** स्त्री। जलमस्या आयुरिति जलौकायाम्। জোঁক। म जलु। सु सू १३अ। तत्पर्य्याय,—रक्तपा, जलौकस (अ), जलुका, जलौका, जलौका, जलोरगी, जलायुका, जलिका, जनाम्बुका, जलजन्तुका, वेधी, जला लोका, जलौकसी (श), जलौकसं, जलौकस् (भ टी रा), रक्तपायिनी, रक्तसन्दंशिका, तीक्ष्णा, वमनी, जलजीवनी, (रा), रक्तपाता, वेधनी, जलसर्पिणी, जलसूचि, जलाटनी, जलाका, जल पटात्मिका, जलालुका (शब्दर) असृपा (हे), अन्नसर्पिणी, पटालुका, वेणिवेधनी, (त्रि), जला त्मिका, काद्रवी (श), जलौक (के)। सा द्वादश विधा। सविषा षट्, तावत्य एव निर्विषा। तत्र सविषा कृष्णा कर्बुरा अलगर्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति। तासु अञ्जनचूर्णवर्णा पृथुशिरा कृष्णा। वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षि कर्बुरा। रोमशा महापार्श्वा कृष्णमुखी अलगर्दा। इन्द्रायुध वदूर्द्धराजिभिश्चित्रिता इन्द्रायुधा। ईषदसित पीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका। गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति। आभिर्दष्टे श्वयथुरित्यादि भवति। निर्विषा— कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति। तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला। किञ्चि द्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला। यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी। मूषिका कृतिवर्णा अनिष्टगन्धा च मूषिका। मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी। स्निग्धा पद्म पत्रवर्णाष्टादशाङ्गुलप्रमाणा सावरिका पश्वर्थे। सु सू १३ अ।

**जलार्द्रः (र्द्रा)।** पु, स्त्री। आर्द्रवस्त्रे। ভিজে কাপড়। त्रिका। हे च। आर्द्रतालवृन्ते। माघ।

**जलार्णवः।** पु। वर्षाकाले। त्रि।

**जलार्बुदः।** पु। वातकफजीर्णरोगे। "जल बुद्बुदवद्वातकफादीर्षं जलार्बुदम्।" वा उ २१अ।

**जलालुः।** पु। पानीयालुके। रा नि व ७।

**जलालुकम्।** क्ली। पद्मकन्दे। भा, पू १म शाकव।

**जलालु(लो)का।** स्त्री। जलौकायाम्। श र। भ टी म।

**जलाशयः।** पु। सरोवरे। शृङ्गाटके। क्ली। उशीरे। अम। लामज्जके। गन्ध বেণা। रा नि व ८। स्त्री। गुन्द्रालायाम्। रा नि व ५।

**जलाश्रयः।** पु। शृङ्गाटके। रा नि व ०। गुन्द्रतृणे। रा नि व ८। वृत्तगुण्डाख्यजले... रा नि व १९। स्त्री। गर्भोटिकाख्यशलीतृणे। रा नि व ८। क्ली। लामज्जके। रा नि व १२।

**जलाष्ठीला।** स्त्री। पुष्करिण्याम्। हारा।

**जलासुका।** स्त्री। जलौकायाम्। भ।

**जलाह्व(य)म्।** क्ली। वालके। বালা। उत्पले। शुण्ठि तृण। रा नि व १०।

**जलाह्वी।** स्त्री। जलपिप्पल्याम्। পানিপলা। श र।

**जलि (का)।** स्त्री। जलौकायाम्। भ टी भ।

**जलु(लू)का।** स्त्री। जलौकायाम्। श र। ६ अ। चर्मचटिकायाम्। वा उ ६अ।

**जलेचर।** पु। जलचारि जीवसमूहे।

**जलेच्छया।** स्त्री। हस्तिशुण्डीवृक्षे। श र।

**जलेजात (रुह)म्।** क्ली। पद्मे। श र।

**जलेन्धनः।** पु। वाडवाग्नौ। मे।

**जलेरुहा** । स्त्री । कुड्मिनीक्षुपे । रा नि व ५ ।

**जलेवाह** । पु । जलकुक्कुटे । वै निघ ।

**जलेशयः** । पु । जलचारिमत्स्यादौ ।

**जलोका** । स्त्री । जलायुकायाम् । इत्यमरः ।

**जलोदरः** । पु, क्ली । तन्नामकोदररोगभेदे । जल उदरी । निदानलक्षणं यथा—"य स्नेह पीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढ । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूषन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथवापि तेषूदकोदरं पूर्व्ववदभ्युपैति । स्निग्धं महत्तत्परि वृत्तनाभि समाततं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ॥ जन्मनैवोदरं सर्व्वं प्राय कृच्छ्रतमं मतम् । बलिन स्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥" इति । मा नि ।

**जलोदरारिरस** । पु । जलोदराधिकारे रस । रसाञ्जकौ प्र २ तो (मतान्तरे गन्धक ४ तो) मनःशिला हरिद्रा जयपालबीज त्रिफला त्रिकटु चित्रकमूल एषां प्रति १ तो दन्तीरसेन स्नुही क्षीरेण (सिहुण्ड आठा) भृङ्गराजरसेन च पृथक् ७ भावयित्वा मर्द्दयित्वा च वटी कुर्य्यात् । माषा २ र ।

**जलोद्भव** । पु । क्ली । शीर । वै निघ । स्त्री । लघुब्राह्मीशाके । कुटुम्बशालौ । रा नि व ५।१६ ।

**जलोद्भूता** । स्त्री । गुन्द्रालायाम् । रा नि व ५ ।

**जलोरगी** । स्त्री । जलौकायाम् । जोंक । इति शब्द ची ।

**जलोलूका** । स्त्री । पद्मबीजे । रा नि व १० ।

**जलौघ** । पु । जलवेतसे । वै निघ ।

**जलौकस** । पुं । (स्त्री) स्त्री । जलौकायाम् । अ ।

**जलौका** । स्त्री । जलायुकायाम् । इत्यमरः । जोंक । सा द्वादशविधा । यथाह,—कृष्णा, कर्व्वुरा, अलगर्द्दा, इन्द्रायुधा, सामुद्रिका, गोचन्दना एताः षट् सविषा । कपिला, पिङ्गला, शङ्कुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका एताः षट् निर्व्विषा । जलौकावचारणविधिर्यथा — विरक्तं जलौकायाः सागरेण च रक्तयेत् । चतुर्थं निद्रा पूर्णे अमावस्यायां विधि । तस्मिन् विधेय जलौका हेतु त्यक्ता परिचरेत् । सकलमात्मा जलौकाया सा योज्या रक्तमोक्षणे ।' अनुपयोज्या जलौका लक्षणं यथा,—"स्थूलमध्या च कपिला नातिस्थूला न दुर्ब्बला । वर्ज्जनीया प्रयत्नेन भिषजा कीर्त्ति मिच्छता ।" रस च । See जलायुका ।

**जलौकाविधि** । पु । तया रक्तमोक्षणकार्य्ये । जोंक धराण । "अथ जलौकावसेकसाध्यव्याधित मुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैरवघर्षणं स्यात् । गृहीताश्च ताः सर्षपरजनी कल्कोदकप्रदिग्धगात्री सलिलसरकमध्ये मुहूर्त्तं स्थिता विगतक्लमा ज्ञात्वा ताभीरोगं ग्राहयेत् । शुक्लशुक्लार्द्र पिचुप्रोतावच्छन्नां कृत्वा मुखमपावृण्या दग्रहन्त्यै क्षीरविन्दुं शोणितविन्दुं वा दद्याच्छस्त्र पदानि वा कुर्व्वीत । यद्येवमपि न गृह्णीयात् तदान्यां ग्राहयेत् । यदा च निविशतेऽश्वखुरवदा नन कृत्वोन्नमय्य च स्कन्धं तदा जानीयात् गृह्णा तीति गृह्णन्तीश्चार्द्रवस्त्रावच्छन्नां धारयेत् सेवयेच ।" इत्यादि । तस्य गुणा —"शीताधिवासा मधुरा जलौका वारिसम्भवा । तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥" सु सू १३ अ ।

**जलौदनम्** । क्ली । सजलान्ने । भा कुष्ठचि ।

**जवन** । पु । अश्वे । शीकारिवृक्षे । रा नि व १६ ।

**जवनाल** । पु, क्ली । धान्यविशेषे । जनार । तद्बीजगुणा —स्वादु शीतत्व वातल कफपित्त घ्न । राज ।

**जवनी** । स्त्री । स्वनामख्यात ओषधिविशेषे । इ ।

**जवली** । स्त्री । कषायफलवृक्षे । जवली । तस्याः फलगुणा —"कषाय कफवित्तघ्न किञ्चि त्तिक्त रुचिप्रदम् । हृद्य सुगन्धि विशदं जवली फलमुच्यते ।" सु ।

**जवसम्** । क्ली । तृणे । घासे । श र ।

**जवसाह्वा** । स्त्री । यमान्याम् । मद व २ ।

**जवा** । स्त्री । ओड्रपुष्पवृक्षे । जवाफुलेर गाछ । तत्पर्य्याय,—ओड्रपुष्प (च), ओड्र (मे), जपा, ओड्राख्या, रक्तपुष्पी, अर्कप्रिया, रागपुष्पी, प्रतिका, हरिवल्लभा । गुणा ,—कटुत्व, उष्णत्व, इन्द्रलुप्तविनाशकत्व, सन्मुखपद्मपुष्प रक्तमतादि-त्वञ्च । राज । रा नि व १० । दृषदधिर स्तारप्रदम् श्वासहरम् । प द ।

**जवादि** । स्त्री । गन्धराजे । गन्धमार्ज्जार, कस्तूरी ।

म नवादीकस्तूरी। तत्पर्य्याय ;—गन्धराज, कृत्रिम, मृगमदज, समूहगन्ध, गन्धाढ्य, स्निग्ध, सामाधि कर्द्दम, सुगन्धतैलनिर्य्यास, कटुमोद। गुणा:— स्निग्धमुष्ण सुखकर वातहितश्च। तल्लक्षण— "जवादि नील सुस्निग्धमीषत्पीत सुगन्धिद। आतपे बहुलामोद राज्ञां योग्य न चान्यथा॥" रा नि व १२।

**जवानी**। स्त्री। यमान्याम्। मद व २।

**जवापुष्पम्**। क्ली। ओड्रपुष्पे। जवा फुल। श र।

**जवाह्वा**। स्त्री। यमान्याम्। मद व २।

**जविन'**। पु। विलेशयमृगविशेषे, कौकडमृगे। रा नि व १९।

**जवी (इन्)**। पु। अश्वे। उष्ट्रे। रा नि व १९।

**जसदम्**। क्ली। यशदे। दस्ता। वै निघ।

**जसुरि:**। पु। वज्रे। उ।

**जह्वा**। स्त्री। सुण्डितिकायाम्। मुण्डीरी। श च।

**जह्वणम्**। क्ली। भक्षणे। रा नि व २०।

**जह्म: (ह्मा (न्))**। प। क्षयरोगे। यक्ष्मा। रोग। श टी भ। See यक्ष्मा।

**जागत:**। पु। छन्दोभेदे। सु चि २९ श।

**जागर: (णम्) (री)**। पु, क्ली, स्त्री। निद्राभावे। जागिया थाका। श्म। पु। कवचे। श टी।

**जागुडम्**। क्ली। कुङ्कुमे। रा नि व १२।

**जाग्टवि**। पु। अग्नौ। हे।

**जाघनी**। स्त्री। ऊरौ। त्रिका।

**जाङ्गमद्रव्यम्**। क्ली। जङ्गमजातद्रव्यगणेषु, मधु गोत्नुच पित्त वसा मज्जासृङ्मांसविष्मृत्र चर्म्मरेतो ऽस्थिस्नायुशृङ्गनखखुरकेशरोचनालोमसु॥ च सू। १८।

**जाङ्गल'**। पु। कपिञ्जलपक्षिणि। गौर तितिर पाखी। मे। मरुप्रायवातलदेशे। तत्प्राय देशो देश। "मरुप्रायस्तु यो देश स चोक्तो जाङ्गलाभिध।" रा नि व २। "अल्पोदकोऽल्प वृक्षच पित्तरक्तामयान्वित। ज्ञातव्यो जाङ्गलो ढश॥" गुणा—वातपित्तकर उष्ण रक्त राज। अपिच—"आकाशशुभ्र उच्चश्च स्वल्पपादप। शमीकरीरबिल्वार्कपीलुकर्कन्धुसङ्कुल हरिणैणर्क्ष्यपृषतगोकर्णखरसङ्कुल। सुस्वादुफ वान्देशी वातलो जाङ्गल स्मृत॥" भा। तत्र गुणा—स्वादु त्रिदोषघ्न रुच्य पथ्यम् आयुर्बलबो पुष्टिकान्तिकरश्च। रा नि व १४। स्थलजप वर्गे। सोऽष्टविध यथा—जङ्घाला विष्कि प्रतुदा गुहाशया प्रसहा पर्णमृगा विलेश याम्याश्च। तत्र जङ्घालविष्किरौ प्रधानतमौ तावे हरिणैणकुरङ्ग कराल कृतमाल शरभ-श्वदंष्ट्रापृष चारुष्करमृगमातृकाप्रभृतयो जङ्घाला कषायमधु लघवश्च। "शशलावकवार्त्ताटा गौधा हरि कृटका। छिक्करादास्तथाचान्ये तित्तिराद्य कृचका। भारद्वाजास्तथा श्येना मूषका वर रणा। इत्येते जाङ्गला जीवा ये जलेन वि श्रिता॥" अचि २० श। क्ली। मांसे। नि व १०।

**जाङ्गलमांसम्**। क्ली। शिखिखरादिजन्तुमांसे। रा नि व १७।

**जाङ्गलयकृत्**। क्ली। जाङ्गलपशुयकृति। रक्तपित्तहरम्। वा चि २श।

**जाङ्गला (ली)**। स्त्री। शूकशिम्ब्याम्। आ कुशी। मे।

**जाङ्गुडम्**। क्ली। कुङ्कुमे। त्रिका।

**जाङ्गुलम्**। क्ली। विषे। जालिनीफले। शब्दर मासे। हे।

**जाङ्गुलि:**। पु। विषवैद्ये। सापूड़े। श (ली) स्त्री। विषविद्यायाम्। हे च।

**जाङ्घिक: (काह्वय:)**। पु। जीवकारिणि उष्ट्रे। रा नि व १९। त्रि। मे। जा जीविनि।

**जाजी**। स्त्री। जीरके। भा म ४भ प्रद चि "दध्ना सौवर्चले जीजा"।

**जाटलि**। पुं। पटोलवल्ल्याम्। श्म।

**जाठर**। पुं। जठरामले। वै निघ।

**जाठरग्रन्थि**। पु। गुल्मरोगे। रा नि व २०

**जाड्यम्**। क्ली। श्लेष्मजडतायाम्। रा, नि व २०

जाम्बारि । पु । जम्बीरवृक्षे । গোঁড়া নেবুর গাছ । रा नि व ११ ।

जातकध्वनि । पु । जतीफलायाम् । वै निघ ।

जातकर्म । क्ली । शिशौ भूमिष्ठे कर्त्तव्ये कर्म्मणि । নাড়ীচ্ছেদে । सूतिकापूजादौ ।

जातघ्नी । स्त्री । पुत्रघ्नीनामयोनिदोषे । वा उ ३३अ । See पुत्रघ्नी ।

जातरूपम् । क्ली । सुवर्णे । रा नि व १३ । धुस्तूरे । अम ।

जातरूपप्रभम् । क्ली । हरिताले । वै निघ ।

जातवेदा । पु । अग्नौ । चित्रकवृक्षे । अम ।

जातसारा । स्त्री । शिङ्घिन्याम् । वै निघ ।

जातापत्या । स्त्री । प्रसूतायाम् स्त्रियि । अम ।

जाति. । स्त्री । जन्मनि । आमलक्याम् । मालती पुष्पलतायाम् । जातीफले । मे । च चि ३अ गुण्डारोचन्याम् । काम्पिल्लके । कमलागुंडि । विश्व । रोगसम्प्राप्तौ । मा नि । जातीपुष्पवृक्ष । च द वा व्या चि ।

जातिकाफलम् । क्ली । जातीफले । জায়ফল ।

जातिकोश(ष)म् । क्ली । जातीपत्र्याम् । जयित्री । जातीफल । भा । सु सू ४६ अ । ह्रे च ।

जाति(ती)कोशा (षो) । स्त्री । जाती पत्र्याम् । जयित्री । रा नि व १२ । वै निघ २भ सुदर्शनचूर्णे ।

जातिजम् । क्ली । जातीफले । वै निघ ।

जाति(ती)पत्र(क)म् । क्ली । जातीफले । "जातीपत्रसुपत्रपत्रकयुत ।" भा उ वाजी चि । वै निघ २भ वा व्या चि एरण्डपाके । जाती वृक्षपत्रे । চামেলীর পাতা । रस र बाल चि ।

जातिपत्रिका(त्री) (र्णी) । स्त्री । जाती फलत्वचि । जयित्री । हिं जावत्री । क जाइपत्री । तत्पर्य्याय —जातिकोषी, सुमन पत्रिका, मालती पत्रिका, सौमनस्यायनी । गुणा —कटुतिक्त सुरभि कफनाशकरी सुखवैशद्यकरनी च । रा नि व १२ । दुग्यहरी । राज । "जातीफलस्य त्वक् प्रोक्ता जातीपत्री भिषग्वरैः । जातीपत्री लघु स्वादु कटूष्णा रुचिवर्णकृत् । कफकासवमिश्वास तृष्णाकृमिविषापहा ॥" भा ।

जातिपुष्पिका । स्त्री । जातीपुष्प्याम् । जयित्री ।

जाति(ती)प्रवाल । पु । जातिकिसलये । জাতিপাতা । च सू ४अ ।

जातिफलम् । क्ली । जातीफले । জায়ফল । ह्रे च ।

जाति(ती)फलत्वक् । स्त्री । जातीपत्र्याम् । जयित्री । वै निघ ।

जाति(ती)रस । पु । रक्तबोले । निशादल । वै निघ ।

जाति(ती)शस्यम् । क्ली । जातीफले । জায় ফল । रा नि व १२ । वै निघ २भ अतिसा चि मोचरसपुटपाके ।

जाति(ती)सारम् । क्ली । जातीफले रा नि व १२ ।

जाति(ती)सुत । पु । जातीफले । वै निघ ।

जातिहिङ्गुलकम् । क्ली । हिङ्गुले । वै निघ ।

जाती । स्त्री । (Jasminum Grandiflorum) स्वनामख्यातपुष्पवृक्षे । জাতি বা চামিলী ফুলের গাছ । हिं चमेली, स्वणजाती । म जाइ । क जाजि । तत्पर्य्याय,—सुरभिगन्धा, सुमना, सुरभिप्रिया, चेतकी, सुकुमारा, सन्ध्यापुष्पी, मनोहरा, राजपुत्री, मनोज्ञा, मालती, तैल भाविनी, जनेष्टा, हृद्यगन्धा । गुणा,—शीता तिक्ता कफघ्नी मुखपाकघ्नी च । तत्कुड्मल नेत्र रोगघ्न व्रणविस्फोटकघ्न कुष्ठघ्नञ्च । रा नि व १० । 'जातीयुग्म तिक्तमुष्णं तुवर लघु दोष जित् । शिरोऽक्षिमुखदन्तार्त्ति विषकुष्ठानिलास्र जित् ॥' भा । मालत्याम् । सु सू ३८ अ । जातीफलवृक्षे । वै निघ ।

जातीकन्द । पु । जातीमूले । सु सू भिश्र अ ।

जातीको(श)षम् । क्ली । जातीफले । ह्रे च ।

जातीकोषफलम् । क्ली । जातीपत्र्याम्, जाती फल च । देवश्री, জায়ফল । वै निघ अजीर्ण चि शार्ङ्गरसे ।

**जातीजातम्।** क्ली। जातीकोषफले। वै निघ।

**जातीतैलम्।** क्ली। कर्णरोगाधिकारे। "जाती पत्ररसे तैल विपक्कं पूतिकर्णजित्।" कटुतैल ४ श जातीपत्ररस १६ श (वृद्धोपदेशात्) कल्कार्थे जातीपत्र १ श। सा कौ।

**जातीदलम्।** क्ली। जातीकोषे। जैत्री। वै निघ २भ. रत्नापि चि कर्पूरादिचूर्णे। जातीपत्रे।

**जातीद्वयम्।** क्ली। जातीकोषफले। जाय-फल ओ जयित्री। जीवकद्वयमिति तालीशादिचूर्णे। वृद्धोपदेश।

**जातीपत्रिका (त्री) (र्णी)।** स्त्री। जाती कोषे। मा च वालीकरणे।

**जातीफलम्।** क्ली। स्वनामख्यातसुगन्धफले। जायफल। तत्पर्याय,—जातीकोष (श), फल, जाती, जाति, कोषक, कोशं, कोष, जातिकोष (शब्दर), राजभोग्य (श), जातीकोश, जाति फल (भ टी) जातिशस्य, शालूकं, मालतीफल, मज्जसार, जातिसार, पुट, सुमन फलम्। "जाती फल सगन्धञ्च स्निग्धं गुरु च शस्यते। लघुक गन्धहीनञ्च कथाङ्गमतिनिन्दितम्॥" भैष। गुणा—तिक्त कटु कफघ्न लघु वयाम सुख क्लेददोगश्वघ्नञ्च। सु सू ४६ श। कषायोष्ण कटु कण्ठामयघ्न वातातिसारमेहघ्न उष्ण लघु दीपनञ्च। रा नि व १२। वृष्यायलघ्नम्। राज। रसे तिक्त तीक्ष्ण रोचन ग्राहि स्वरकर श्लेष्मवातनखवैरस्यमलदोर्गन्ध्यघ्न कृमिकासवमि श्वासशोषपीनसहृद्रोगहरञ्च। भा। "तैल जाती फलोद्भूत समुक्त जनमर्दितम्। जीर्णातिसारशमनम् आध्मानादयघ्नलक्षणम्। आमवातहरं बल्य दन्त वेष्टमपाति तुत्॥" अभि। जातीकोषवद्गुणम्। सु सू ४६ श।

**जातीफला।** स्त्री। आमलकीवृक्षे। आमला गाछ। रा नि व ११।

**जातीफलादिवटी।** स्त्री। अजीर्ण वटी। जातीफल लवङ्ग पिप्पली निर्गुण्डी (निशिन्दा) विषं यष्टी धुस्तूरबीज हिङ्गुल टङ्कणक्षार (सोहागार खई) एषां प्र समभाग जम्बीररसेन वटी कार्य्या। मा २।३ रक्ति। र सा स।

**जातीफलाद्या (वटिका)।** स्त्री। ग्रहण्य धिकारे। शुद्धपारद ४मा गन्धक ४ मा कज्जली कार्य्या। जातीफल मरिच मृतक टङ्कणक्षार (सोहागार खई) अतिविषा जीरक मरिच एषां प्र ४मा विष १ मा एकत्र सचूर्ण, अत्र आम कचट (काँचडा) प्रसारणी (गन्धभादुलि) निर्गुण्डी विजया (सिद्धि) जम्बू (जाम) जयन्ती (जयन्ति) दाडिम केशराज (केशुते) पाठा (आकनादि) भृङ्गराज एषां पत्ररसैर्भावयित्वा सप्ताहं च कोलास्थिमात्रा वटी कार्य्या। अन्या यथा— जातीफल टङ्कणक्षार अभ्र धुस्तूरबीज एषां प्र १ तो अहिफेन २ तो प्रसारणीरसेन सम्मर्द्य वटी चणकाभा कार्य्या। मधुनि अमकस्यापि मात्रयतु द्य दीयते। र सा स।

**जातुकम्।** क्ली। हिङ्गौ। श च।

**जातुकपर्णिका।** स्त्री। हृपभेदे। सुश्रु।

**जातुज।** पु। दौहृदे, गर्भिण्या अभिलाषे। र।

**जातुषम्।** क्ली। जतुविकारे। गाला।

**जातोचः।** पु। युवाक्षये।

**जात्यन्धः।** त्रि। जन्मान्धे। जन्मकाणा।

**जात्युत्पलम्।** क्ली। श्वेतरक्तकमले। वै निघ।

**जानु।** क्ली। जङ्घोरुमध्यभागे, चक्रिकायां, अष्ठी वद्भागे वा। हाँटु। 'जानष्ठीवच चक्रिका।' रा नि व १८।

**जान्वस्थि।** क्ली। जानुदेशास्थनि। हाँटुर हाड। भे च ह। च शा ७श।

**जामाता।** पु। गजपिप्पल्याम्। प सु। सूर्य्या वर्त्ते। हुडहुडे। मे। भैष अन्यापि चि क्षुधा वत्याम्। भवरुचे। मे।

**जाम्बवम्।** क्ली। स्वर्णे। रा नि व १३। जम्बूफले। जाम फल। अम.। पु। जम्ब्वासवे। जामेर आसव। 'जाम्बव चोऽक्तसहितो जम्बू-रसगुडोद्भव।" तोड हड़स। गुणा—"जाम्बवो बद्धनिष्यन्दस्तुवरो वातकोपन।" सु।

**जाम्बवती (वी)।** स्त्री। नागदमन्याम्। नागदमना। रा नि व ५।

**जाम्बवि।** पु। वज्रे। श।

**जाम्बवोष्ठम्।** क्ली। शतविद्धोपमशलाकाविशेषे।

**जालिनीफलम्।** क्ली। घोषाफले। घोषा फलेर बीचि वा झिङेर बीचि। च द पाण्डुचि। गुणा—शिरोरोग पाण्डुरोमहर चव करव। अत्रि।

**जाली।** स्त्री। पटोललतायाम्। रा नि व ७। घोषायाम्। प मु। ज्योत्स्नायाम्। झिङा। श्रम।

**जावक.।** पु। अलक्तके। वै निघ।

**जापकम्।** क्ली। कालीयचन्दने। पीत चन्दन। अ टी सा।

**जाहकः।** पु। लग्नसरटे। वान गिरगिट्। रा नि व १९। गोनाससर्पे। जलौकायाम्। वै निघ। विडालि। श र। विका। घोङ्गे। घोंग्। मे। तत्पर्याय,—गात्रसङ्कोची, मण्डली, मङ्कुवक, कामरूपी, विरूपी, विलवास्। रा।

**जाहकध्वनि'।** पु। घोङ्गे। घोंग। जलौकायाम्। जोंक। हारा।

**जिगत्. (त्नुः)।** पु। उच्छासे। प्राणवायौ। उधा।

**जिघत्सा।** स्त्री। क्षुधायाम्। हे च।

**जिङ्गिनी।** स्त्री। गुडमञ्जनिकायाम्, गुलञ्चली इति ख्याता। भैष योनिव्यापत्चि। सु सू लोध्रादि। "जिङ्गिनी लघ्रश्मञ्जली।" वा सू १५ अ रोध्रादि, च वि ८अ। गुणा—"मधुरा सोषा कषाया योनिशोधनी। कटुका व्रणहृद्रोग वातातीसारहृत्पटु। तमालश्यामवर्द्धा दाह विस्फोटहृत् पुन॥" भा वटादि।

**जिङ्गि' (ङ्गी)।** स्त्री। मञ्जिष्ठायाम्। प मु। कन्दर्पसारतैले। च द मेह चि। गुडमञ्ज निकायाम्। सु सू ३८ अ।

**जिज्ञासा।** स्त्री। परीक्षायाम्। यथा—"भेषज परीक्षोत्तरकालमुपदेक्ष्यते।" च वि ८अ।

**जितव'।** पु। घोटके। भा।

**जितेन्द्रियाह्वः।** पुं। कामवृद्धिनामक्षुपे। रा नि व ४।

**जिनयोनि'।** पुं। हरिणे। श र।

**जिम्भ (म्भा)मोहन।** पु। भेके। श र।

**जिम्भमल्यः।** पु। खदिरे। रा नि व ८।

**जिम्भा (म्भिका)।** स्त्री। जृम्भिकायाम्। हाई। रा नि व २०।

**जिवाजिवः।** पु। जीवञ्जीवपक्षिणि। श र।

**जिष्णि'।** पु। पक्षिणि। उधा।

**जिह्मम्।** क्ली। तगरपादुके। प मु। रा नि प १०। ज द १२ अ। पिण्डीतगरे। वै निघ। पु, स्त्री। जिह्वायाम्। अटी ५। पु। सर्पे।

**जिह्मगः।** पु। सर्पे। जिह्वकसन्निपाते।

**जिह्वक.(ह्मग)।** पु। तन्नामकसन्निपातज्वर विशेषे। लक्षणम्—"श्वसनकासपरितापविह्वल कठिनकण्ठकवतोऽतिजिह्वक। बधिरमूकबलहीन लक्षणो भवति कष्टतरसाध्य एव वै।" वै निघ। अस्य तन्त्रान्तरोक्तलक्षण भावप्रकाशे द्रष्टव्यम्।

**जिह्वा।** स्त्री। रसनेन्द्रिये। जिभ्। रा नि व १८। तत्पर्याय—रसज्ञा, रसना (अ), रसना, रसन, जिह्व (अ टी), रसाल, सुधास्रवा, रसिका, रसाङ्का (शब्दर), रसा, लोला, रसाला, रसना, ललना (ज)। सा च उदरे पच्यमानकफशोणित मांससारभूता। सु शा ४अ। तत्परीक्षा यथा—वातेन—शाकपत्रनिभा रुक्षा स्फुटना च। पित्तेन—रक्ता श्यावा च। कफेन खिन्ना आर्द्रा धवला च। त्रिदोषेण—परिदग्धा खरस्पर्शा कृष्णा च। दोषद्वयाधिक्येन—दोषद्वितयलक्षणा च। भा।

**जिह्वानिर्लेखनम्।** क्ली। जिह्वामलहरदणा कुलकाष्ठिकायाम्। चियडि जिह्वछोला इति लोके। 'जिह्वानिर्लेखन रौप्य सौवर्ण वार्क्षमेव च। तन्मलापहर शस्त मृद्वश्लक्ष्ण दशाङ्गुलम्॥" सु चि २४ अ। "निहन्ति वक्त्रैरस्य जिह्वा दन्ताश्रित मलम्। आरोग्य रुचिमाधत्ते सद्यो दन्तविशोधनम्॥" राज १प।

**जिह्वापः।** पु। विडाले। कुकुरे। भल्लूके। श र। चित्रकव्याघ्रे। विश्व।

**जिह्वाप्रबन्ध।** पु। जिह्वामूले। वा उ २१अ।

**जिह्वामलम्।** क्ली। रसनामले। विका।

**जिह्वारद।** पु। पक्षिणि। हारा।

**जिह्वारोग'।** पु। जिह्वागतरोगे। जिदेव घां प्रभृति। नि। स पञ्चधा—"वातेन पित्त श्लयापि कफजोऽलाससञ्जक। उपजिह्विका च रुदा जिह्वाया पञ्च कीर्तिता॥ जिह्वानिलेन

स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। पित्तात् सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च। कफेन गुर्वी बहुलाचिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः। जिह्वातले य श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः॥" इत्यादि। मा नि। अधिजिह्विकोऽपीति षड्विधमाह वाभटः। यथा— "शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता। जिह्वा पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता। शाल्मली कण्टकाभैस्तु कफेन बहुला गुरुः। कफपित्ता दध शोफो जिह्वास्तम्भकृदुन्नत। मत्स्यगन्धिर्भवेत् पक्वः सोऽलसो मांसशातनः। प्रबन्धनेऽधो जिह्वाया शोफो जिह्वाग्रसन्निभः। साङ्कुरः कफपित्तास्रे र्लालोषास्तम्भवान् खरः। अधिजिह्वः स रक्तकण्ड् वाक्याहारविघातकृत्। तादृगेवोपजिह्वस्तु जिह्वाया उपरिस्थितः॥" वा उ २१ अ।

**जिह्वालिट्**। पु। कुक्कुरे। वै निघ।

**जिह्वास्तम्भः**। पु। स्वनामख्यातवातव्याधौ। जि, एडाइया याओया। "वाग्वाहिनीशिरा संस्थो जिह्वां स्तम्भयतेऽनिलः। जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता। जिह्वास्तम्भे यथावस्थ वातव्याधिचिकित्सितम्। सामान्योक्ता क्रियायावाह्विंसथापि हिता मता॥" अन्यत्र मुख रोगे। च द २८ अ। See मुखरोग।

**जिह्वास्वादः**। पु। लेहने। चाटा। है।

**जीन**। पु। वृद्धे। रा नि व १८।

**जीमूत (क)**। पु। मुस्तायाम्। मुता। रा नि व ६। पीतदेवदाल्याम्। भा। देव दाल्याम्। देश्रातोडा। रा नि व ३। घोषकलतायाम्। घोषा लता। है अ। क्ली। घोषाफले। च स २ अ।

**जीमूतकतैलम्**। क्ली। कोशातकीतैले।

**जीमूतकूट**। पु। पर्वते। हा।

**जीमूतमूलम्**। क्ली। शट्याम्। प सु।

**जीमूतवाही (न्)**। पु। धूमे। है।

**जीमूताह्वा**। स्त्री। देवदाल्याम्। देश्रातोड़ा। नलमुस्तायाम्। वै निघ।

**जीर (क) (ण)**। पु, क्ली। (Cuminum cyminum) Cumin seed स्वनामख्यात द्रव्ये। वड़ जीरे, शादा जीरे। हि जीरा। मे जीरकर। तत्पर्याय,—जरण, अजाजी कणा (अ), दीप्यक (न) जीर्णं, जीर, दीप्य जीरण, अजाजिका, वह्निसख, मागध, दीपक गुणा—कटुरुष्ण वातघ्न दीपन गुल्माध्मानाति सारघ्न ग्रहणीकृमिघ्नश्च। रा नि व ६। जीरका पश्च, तत्र श्वेतकृष्णसूक्ष्मभेदाच्चतुर्धा, वनजीर कश्च इति पश्च। भावप्रकाशस्तु त्रिभेदामाह शुक्ल कृष्णकालीञ्जीभेदेन। गुणा—दीपनं पाचनम् उष्णत्वाद्दुवशोषक ग्राहि च। शार्ङ्ग। लघु सद्यापि गर्भाशयशुद्धिकरः ज्वरघ्न पाचन वृष्य बल्यं रुच्य कफघ्न चक्षुष्यमतिसारघ्नश्च। भा। विशेषा पर्यायि इष्या। एतत्तैल मिपितेगुण ज्ञेयम्। अत्रि।

**जीरकद्वयम्**। क्ली। शुक्लपीतजीरके। गुणा—"तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम्। कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम्॥" सु सू ४६ अ।

**जीरका**। स्त्री। शालिधान्यविशेषे। सा च वातपित्तघ्नी। अत्रि १५।

**जीरकादिमोदक**। पु। ग्रहण्यधिकारे। जीरकचूर्णं ८ प घृतभर्ज्जितहिङ्गुवीजचूर्णं ४ प जीरम् अभ्र वङ्ग मधुरिका तालीशपत्र जयित्री जातीफल धान्यक आमलकी हरीतकी विभीतक गुडत्वक् तेजपत्रम् एला नागकेशर लवङ्ग शैलज श्वेतचन्दन रक्तचन्दन जटामांसी द्राक्षा शटी टङ्कणक्षार कुन्दुरुखोटी यष्टिमधु वंशरोचना काकोली वालक गोरचा शुण्ठी पिप्पली मरिच धातकीपुष्प विल्वपेशी अर्जुनत्वक् शुलफा देवदारु कर्पूरं प्रियङ्गु जीरक मोचरस कटुकी पद्मकाष्ठ नलिका एषां प्रतिचूर्णं २ तो सर्वचूर्णद्विगुणा शर्करा एकत्र पचेत्। मात्रा १ तो।

**जीरकाद्यघृतम्**। क्ली। ग्रहणीरोगाधिकारे। "जीरकपक्वं पश्चात् सिक्थसर्ज्जरसमिश्रितं हन्ति। घृतमभ्यङ्गात्पावकदग्धजदुःखं क्षणाद्धे न॥" गव्य घृतं ४ श पाकार्थजल १६ श। कल्कार्थजीरक ८ प। सिद्धे सिक्थसर्ज्जरसयो (मम ओ धूना) ४ प प्रक्षेप। अन्यत् अम्लपित्ताधिकारे—"पिष्टा जाजीं सधान्याकां घृतप्रस्थं विपाचयेत्।" गव्यघृत ४ श कल्क १ श जल १६ श। च द।

**जीरण**। पुं। जीरके। रा।

**जीरिका**। स्त्री। वंशपत्रीतृणे। रा नि व ८।

लिनीफलम्। क्ली। थीपाफली। घोषा लेर बीचि वा झिङेर बीचि। च द र्ड्च। गुणा —शिरोरोग पाण्डुरोगहर च्च रद्य। अत्रि।

ल्ली। स्त्री। पटोललतायाम्। रा नि व ७। पायाम्। प सु। ज्योत्स्नायाम्। झिङा। म।

वकः। पु। अलर्के। वै निघ।

पकम्। क्ली। कालीयचन्दने। पीत चन्दन। टी सा।

ह्रकः। पुं। कृकलासे। काण गिरगिट्। निव १९। गोनाससर्पे। जलौकायाम्। निघ। विडाले। श र। विका। घोङे। घाग्। मे। तत्पर्याय,—गावसड़ीची, मण्डली, हुरूपक, कामरूपी, विरूपी, विलवासू। रा।

ह्रकध्वनिः। पु। घोङे। घोग। जलौ तायाम्। जोँक। हारा।

जगतु (लु:)। पु। उष्कासी। प्राणवायौ। उथा।

जघक्षा। स्त्री। क्षुधायाम्। है च।

जङ्गिनी। स्त्री। गुडमञ्जिकायाम्, गुलटुली इति ख्याता। भेष योनिव्यापत्वि। सु सू लौध्रादि। "जिङ्गिनी कृष्णशाल्मली।" वा सू १५ अ रौध्रादि, च वि. ८अ। गुणा —"मधुरा सोष्णा कषाया योनिशोधनी। कटुका व्रणहृद्रोग वातातीसारहृत्पटु। तमालशाल्मलदेवी दाह विस्फोटहृत् पुन॥" भा वटादि।

जिङ्गि (ङ्गी)। स्त्री। मञ्जिष्ठायाम्। प सु। कन्दर्पसारतैले। च द मेह चि। गुडमञ्ज निकायाम्। सु सू ३८ अ।

जिघ्रासा। स्त्री। परीक्षायाम्। यथा—"भेषज परीक्षोत्तरकालमुपदेक्ष्यते।" च वि ८अ।

जितव। पु। घोटके। भा।

जितेन्द्रियाह्व। पु। कामवृद्धिनामक्षुपे। रा नि व ४।

जिनयोनि। पुं। हरिणे। श र।

जिम्भ (ह्म)मोहन. । पु। भेके। श र।

जिम्भशल्य। पु। खदिरे। रा नि व ८।

जिम्भा (म्भिका)। स्त्री। जृम्भिकायाम्। हाई। रा नि व २०।

जिवाजिव। पु। जीवञ्जीवपक्षिणि। श र।

जिव्रि। पु। पक्षिणि। उथा।

जिह्मम्। क्ली। तगरपादुके। प मु। रा नि व १०। ज द १२ अ। पिण्डीतगरे। वै निघ। पु, स्त्री। जिह्वायाम्। अटी ५। पु। सर्पे।

जिह्मग. । पु। सर्पे। जिह्वकसन्निपाते।

जिह्वक.(ह्मग)। पु। तन्नामकसन्निपातज्वर विशेषे। लक्षणम्—"श्वसनकासपरितापविहस्त कठिनकण्टकजिह्वतोऽतिजिह्वक। बधिरमूकबलहीन लक्षणी भवति कष्टतरसाध्य एष वै।" वै निघ। अस्य तन्त्रान्तरीकलक्षण भावप्रकाशे द्रष्टव्यम्।

जिह्वा। स्त्री। रसनेन्द्रिये। जिभ्। रा नि व १८। तत्पर्याय —रसज्ञा, रसना (च), रशना, रसन, जिह्व (अटी), रसाल, सुधास्रवा, रसिका, रसाज्ञा (गन्दर), रसा, लोला, रसाला, रसला, ललना (श)। सा च उदरे पच्यमानकफशोणित मांससारभूता। सु शा ४अ। तत्परीक्षा यथा— वातेन—शाकपत्रनिभा रूक्षा स्फुटना च। पित्तेन —रक्ता श्यावा च। कफेन लिप्ता चार्द्रा धवला च। त्रिदोषेण—परिदग्धा खरस्पर्शा कृष्णा च। दोषद्वयाधिक्येन—दोषद्वितयलक्षणा च। भा।

जिह्वानिर्लेखनम्। क्ली। जिह्वामलहरदशा ङ्गुलकाष्ठिकायाम्। चियडि जिह्वछोला इति लोके। 'जिह्वानिर्लेखन रौप्य सावर्ण वार्क्षमेव च। तन्मलापहरं शस्त मृदुश्लक्ष्ण दशाङ्गुलम्॥" सु चि २४ अ। "निहन्ति वक्त्रवैरस्य जिह्वा दन्ताश्रित मलम्। आरोग्य रुचिमाधत्ते सद्यो दन्तविशोधनम्॥" राज १प।

जिह्वाप। पु। विडाले। कुक्कुरे। भल्लूके। श र। चित्रकव्याघ्रे। विश्व।

जिह्वाप्रबन्ध। पु। जिह्वामूले। वा उ २१अ।

जिह्वामलम्। क्ली। रसनामले। शिका।

जिह्वारद। पु। पक्षिणि। हारा।

जिह्वारोग। पु। जिह्वागतरोगे। जिदेर घा प्रभृति। नि। स पञ्चधा—"वातज. पित्त जश्चापि कफजोऽलासनामक। उपजिह्विका च गदा जिह्वाया पञ्च कीर्त्तिता॥ जिह्वानिर्वेन

स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। पित्तात् सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च। कफेन गुर्व्वी बहुलाचिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः। जिह्वातले य श्वयथुः प्रगाढः सोऽधाससंज्ञः कफरक्तमूर्त्तिः॥" इत्यादि। मा नि। अधिजिह्विकोऽपीति षड्‌विधमाह वाभट। यथा— "शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता। जिह्वा पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता। शाल्मली कण्टकाभैस्तु कफेन बहुला गुरु। कफपित्ता दध शोफो जिह्वास्तम्भकृदुन्नत। मतत्स्यगन्धिर्भवेत् पक्व सोऽलसो मांसशातन। प्रबन्धनेऽधो जिह्वाया शोफो जिह्वाग्रसन्निभ। साङ्कुर कफपित्तास्रैः लालोषास्तम्भवान् खर। अधिजिह्व सरुकण्ड्‌ वाक्याहारविघातकृत्। तादृगेवोपजिह्वस्तु जिह्वाया उपरिस्थित॥" वा उ २१ अ।

**जिह्वालिट्**। पु। कुकुरे। वै निघ।

**जिह्वास्तम्भः**। पु। स्वनामख्यातवातव्याधौ। जि॰ एडाइश्रा धाओश्रा। "वागवाहिनीर्मिरा सस्थो जिह्वां स्तम्भयतेऽनिल। जिह्वास्तम्भ स तेनान्नपानवाक्येष्वनीशता जिह्वास्तम्भे यथावस्थ वातव्याधिचिकित्सितम्। सामान्योक्ता क्रिया यावाहितस्यापि हिता मता॥" अथस मुख रोगे। च द २९ अ। See मुखरोग।

**जिह्वास्वाद'**। पु। लेहने। चाटा। हि।

**जीन'**। पु। वृद्धे। रा नि व १८।

**जीमूत (क)**। पु। मुस्तायाम्। मूता। रा नि व ६। पीतदेवदाल्याम्। भा। देव दाल्याम्। देयाताडा। रा नि व ३। घोषकलतायाम्। घोषा लता। हि अ। क्ली। घोषाफलें। च स २अ।

**जीमूतकतैलम्**। क्ली। कोषातकीतैले।

**जीमूतकूट**। पुं। पर्व्वते। श।

**जीमूतमूलम्**। क्ली। शठ्याम्। प मु।

**जीमूतवाहो (न्)**। पु। धूमे। हे।

**जीमूताह्वा**। स्त्री। देवदाल्याम्। देयाताडा। जलमुस्तायाम्। वै निघ।

**जीर (क) (ण)**। पु, क्ली। (Cuminum cyminum) Cumin seed स्वनामख्यात क्षुपे। बड़ जीरे, शोशा जीरे। हि जीरा। ते जीलकर्र। तत्पर्याय,—जरण, अजाजी, कणा (प), दीप्यक (ज), जीर्ण, जीर, दीप्य, जीरण, अजाजिका, वह्निसख, मागध, दीपक। गुणा—कटुरस वातघ्न दीपन गुल्माध्मानाति सारघ्न ग्रहणीकृमिहृच्च। रा नि व ६। जीरका पञ्च, तत्र श्वेतकृष्णस्थूलसूक्ष्मभेदाच्चतुर्धा, वनजीर कश्च इति पञ्च। भावप्रकाशस्तु त्रिभेदानाह शुक्ल कृष्णकालीजीभेदेन। गुणा—दीपन पाचनम् उष्णत्वाद्रवशोधक ग्राहि च। शाङ्ग। लघु सग्राहि गर्भाशयशुद्धिकृ ज्वरघ्न पाचन वृष्य बल्यं रुच्य कफघ्न चक्षुष्यमतिसारघ्नश्च। भा। विशेषा पर्य्याये द्रष्टा। एतत्तैलं मिश्रितैलगुण ज्ञेयम्। अत्रि।

**जीरकद्वयम्**। क्ली। शुक्लपीतजीरके। गुणा —"तीक्ष्णोष्ण कटुक पाके रुच्य पित्ताग्निवर्द्धनम्। कटु श्लेष्मानिलहर गन्धाढ्य जीरकद्वयम्॥" सु सू ४६ अ।

**जीरका**। स्त्री। शालिधान्यविशेषे। सा च वातपित्तघ्नी। अत्रि १५।

**जीरकादिमोदक'**। पु। ग्रहण्यधिकारे। जीरकचूर्णं ८ प हृतभक्ति तद्विद्विरीजचूर्णं ४ प लौहम् अभ्र वङ्ग मधुरिका तालीशपत्र जयित्री जातीफल धान्यक आमलकी हरीतकी विभीतक गुडत्वक् तेजपत्रम् एला नागकेशर लवङ्ग शैलज सारचन्दन रक्तचन्दन जटामांसी द्राक्षा शटी टङ्कणक्षार कुन्दुरुखोटी यष्टिमधु वंशरोचना काकोली बालक गोरचो शुण्ठी पिप्पली मरिच धातकीपुष्प विल्वपेशी अर्जुनत्वक प्रलुफा देवदारु कर्पूर प्रियङ्गु जीरक कोचरस कटुकी पद्मकाष्ठ नलिका एषां प्रतिचूर्णं २ तो सम्बचूर्णद्विगुणा शर्करा एकत्र पचेत्। मात्रा १ तो।

**जीरकाद्यघृतम्**। क्ली। ग्रहणीधाधिकारे। "जीरकपक्व पयात् सिकथसञ्चरसमिन्वित हन्ति। घृतमध्यह्लापवक्रदग्धजदुःखं अथाङ्गेन॥" गव्य घृतं ४ श पाकार्थजल १६ श। कल्कार्थजीरक ८ प। सिद्धे सिकथसर्ज्जरसयो (मम ও धुना) ४ प प्रक्षेप। अन्यत् अम्लपित्ताधिकारे—"पिष्टा जाजीं सधान्याकां घृतप्रस्थं विपाचयेत्।" गव्यघृत ४ श कल्क १ श जल १६ श। च द।

**जीरण**। पु। जीरके। रा।

**जीरिका**। स्त्री। वंशपत्रीतृणे। रा नि व ८।

**जीर्णः।** पु। जीरके। रा नि व ६। क्ली। शैलजे। रा नि व १२। त्रि। वृद्धे। पक्के। रा नि व १८।

**जीर्णज्वरः।** पु। पुरातनज्वरे। पुरातन ज्वर। द्वादशदिवसातीते वा त्रिगुणातीते वा एकविंश दिवसातीते वा तनुभावं गतो यो ज्वरः काये तिष्ठति। तत्र द्वादशदिवसातीते ज्वरं जीर्ण इति जातूकर्ण्यः। एकविंशदिवसातीते इति सिद्धौ। र सा स। "त्रिसप्ताहे व्यतीते तु ज्वरो यस्तनुतां गतः। प्लीहाग्निमान्द्यं कुरुते स जीर्णज्वर उच्यते॥" "यो द्वादशभ्यो दिवसेभ्य ऊर्द्ध्वं दोषत्रयस्त्रिगुणेभ्य ऊर्द्ध्वं। तनुत्वं गतो तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एव जीर्णः॥" भा।

**जीर्णदारुः।** पु। वृद्धदारकविशेषे। काल विछताड़क। तत्पर्याय—जीर्णफञ्जी, सुपुष्पिका, अजरा, सूक्ष्मपर्णा। बीजगुणा—शैत्य पिच्छिल कफवातकासामनाशक बल्यश्च। रा नि व ३।

**जीर्णपत्रः।** पु। पट्टिकारोध्रे। रा नि व ६।

**जीर्णपत्रिका।** स्त्री। वंशपत्रीतृणे। रा नि व ८।

**जीर्णपर्णः।** पु। पट्टिकारोध्रे। कदम्बवृक्षे। त्रिका। पुरातनपत्रे।

**जीर्णफञ्जी।** स्त्री। कृष्णवृद्धदारके। रा नि व ३।

**जीर्णवाल. (लुका)।** पु। कृष्णवृद्धदारके। रा नि व ३। स्थूलजीरके। रा नि व ६।

**जीर्णबु(ब्र)ध्न।** पु। पट्टिकारोध्रे। पाटिश्यालालोध। रा नि व ६। सुरायाम्। वै निघ।

**जीर्णबुध्नकम्।** क्ली। परिपेलवतृणे। केओट मुता। रा नि व ८।

**जीर्णवज्रम्।** क्ली। वैक्रान्तमणौ। रा नि व १३।

**जीर्णा।** स्त्री। स्थूलजीरके। रा नि व ६।

**जीर्णाहार।** पु। आहारस्य जीर्णावस्थायाम्। आहार-परिपाक अवस्था। लक्षण—"उद्गार शुद्धिरुत्साहो वेगोत्सर्गो यथोचितः। लघुता क्षुत् पिपासा च जीर्णाहारस्य लक्षणम्॥" भा।

**जीर्णिः।** स्त्री। जीर्णतायाम्। च।

**जीविः।** पु। कुठारे। पाशौ। मकटे। शरीरे, काये। सङ्क्षिप्त उणा।

**जीवः।** पुं। जीवकवृक्षे। क्षिप्रप्रष्टि। प सु। प्राणिनि, जन्तौ। त्रिका। काये। धरणि। जीविते। मे। महानिम्बवृक्षे। के।

**जीवक।** पु। Pentaptera tomentosa) A medicinal plant, commonly called jivika अष्टवर्गान्तर्गतस्वनामख्यात वृक्षे। जीवक। हिं जीवक। ते वेगिसपुचेट्टु। तत्पर्याय,—कूर्चशीर्ष, मधुरक, शृङ्ग, ह्रस्वाङ्ग (च), चिरजीवक (ज), जीवन, दीर्घायु, प्राणद, जीव्य, भद्राङ्ग, प्रिय, चिरजीव, मधुर, मङ्गल्य, कूर्चशीर्षक, वृद्धिद, आयुष्मान्, जीवद, बलद। अस्य स्वरूप यथा,—"जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ। रसोनकन्दवत् कन्दौ निःसारौ सूक्ष्मपत्रकौ। जीवकः कूर्चकाकारो ऋषभो वृषशृङ्गवत्॥" भा। गुणा—मधुर शीत रक्तपित्तघ्न वातघ्न क्षयदाह ज्वरघ्न शुक्रश्लेष्मवर्द्धनश्च। रा नि व ५। See ऋषभक। एतदभावे गुडूची ग्राह्या। मतान्तरे विदारीमूल। असनवृक्षे। पेयाशाल। तन्नामक पक्षिणि। मे।

**जीवकद्रुमः।** पु। क्षियत्पष्टीतिख्याते द्रुमे। प म।

**जीवकादि।** पु। जीवनीयगणे। स च जीवकर्षभकमेदामहामेदर्द्धिवृद्धिकाकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीस्वगात्मकः। रा नि व २१। जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीमेदावृद्धरुहाजटिलाकुलिङ्गाः। एतानि शुक्रजननानि प्रभावात्। च सू ४अ।

**जीवजी(ञ्जी)व।** पु। वृकजातीये चकोर पक्षिणि। त्रिका। वृक्षभेदे। मे।

**जीवत्तोका।** स्त्री। जीवत्पुत्रिकायाम्। हे च।

**जीवथ.।** पुं। मयूरे। कच्छपे। प्राणे। उणा।

**जीवद।** पु। वैद्ये। जीवके। वै निघ।

**जीवदा (त्री)।** स्त्री। जीवन्त्याम्। रा नि व ३। ऋद्धौ। रा नि व ५।

**जीवदृष्टा।** स्त्री। जीवन्तीवृक्षे। रा।

**तालाङ्कः** । पु । शाकभेदे । हे च । करपत्रे ।

**तालाङ्कुरम्** । क्ली । तालास्थिमर्मणि । पु । मन शिलायाम् । कि ।

**तालिः** । स्त्री । तालभेदे । তেড়েৎ । वै निघ । भूम्यामलक्यां । र मा ।

**तालिकः** । पु । प्रसारिताङ्गुलिपाणौ । हे च ।

**तालिका (ली)** । स्त्री । तामवल्लीलतायाम् । रा नि व ३ । तालमूल्याम् । प सु । सु चि १० ष । भूम्यामलक्याम् । रा नि व ५ । तालवृक्षभेदे । তাড়িয়াৎ । ष म । मन शिलायाम् । तालीश पत्रे । वै निघ । तुवरिकायाम् । श र ।

**तालिश(म)(पत्र)म्** । क्ली । तालीशपत्रे । भूरिप्र ।

**तालीतलम्** । क्ली । मुषलीकन्दे । তালমূলী । सु चि १० ष । ड ।

**तालीपत्रम्** । क्ली । तालीशपत्र । रा नि व ६ ।

**तालीश(क)म्** । क्ली । तालीशपत्रे । रा नि व ६ ।

**तालीश(स)पत्रम्** । क्ली । (Abies webbiana or Pinus webbiana—or Flacourtia cataphracta) भूम्यामलकीसदृशे स्वनामख्यातपत्रद्रव्ये । তালীশপত্র । भा । दा हि तालिषपि, तालिशपत्र । ते सा तालिशपत्रि । दा पनिचल । चम् तास्वठ । तत्पर्याय — तालीश, पत्राख्य, शुकोदर, धात्रीपत्र, अर्कवेध, करिपत्र, करिच्छद, नील, नीलाम्बर, ताल, तालीपत्र, समाह्वय, तालीशपत्रकं । तदभावे कण्टकारीजटा ग्राह्या । गुणा —तिक्तोष्ण मधुर कफवातघ्न हिक्काश्वासचयकासच्छर्दिघ्नञ्च । रा नि व ६ । लघु चरविघ्न गुल्मामाग्निमान्द्यहृच्च । भा । भूम्यामलका । मे ।

**तालीशादिमोदक** । पुं । यक्ष्माधिकारे । तालीशपत्र १ तो मरिच २ तो शुण्ठी ३ तो पिप्पली ४ तो गुडत्वक ॥० तो एला ॥० तो वंशलोचना ५ तो शर्करा ३२ तो । सा को । च द ।

**तालु (कम्)** । क्ली । जिह्वाधिष्ठानभूतप्रदेशे । তালু, টাকরা । तत्पर्याय,—काकुद (अ) तालुकं । रा नि व १८ । "सुखतस्तालु निर्भिन्न जिह्वा ततोपजायते । ततो नाना रसो जज्ञे जिह्वया योऽधिगम्यते ।" भाग ।

**तालुकण्टक** । पु । तालुगतरोगभेदे । তেলো-ওলা । अयच प्राय शिशोरेव भवति । लक्षणं यथा—"तालुमांसे कफ क्रुद्ध कुरुते तालुकण्टकम् । तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते । तालुपातात् स्तनद्वेष कृच्छ्रात् पान शकृद्द्रवम् । तृड्चिककण्ठास्यरुजा ग्रीवादुर्धरता वमि ॥" भा ।

**तालुजिह्व** । पु । कुम्भीरे । हे च ।

**तालुपाक** । पु । पित्तजन्यतालुरोगविशेषे । তেলো পাকা । तत्र पित्तम् अतिघोर तालुपाक जनयति । "पित्त कुर्य्यात्पाकमत्यन्तघोरं तालुन्येव तालुपाक वदन्ति ।" भा म ४भ सुखरो चि ।

**तालुपात (पोडक)** । पु । तालुरोगभेदे, तालुकण्टके । তেলো ওলা ।

**तालुपुप्पुट** । पु । तालुदेशे मेद कफजन्य रोगविशेषे । तत्रावेदन स्थायी देवलमात्र शोथो जायते । लक्षणम्—"नीरुक् स्थायी कोलमात्र कफात्मा मेदोयुक्त पुप्पुटस्तालुदेशे ।" भा म ४भ सुखरो चि ।

**तालुयन्त्रम्** । क्ली । कण्ठनासानाडीशल्याना माहरणार्थयन्त्रविशेषे । तत्र मीनतात्वाकार द्वादशाङ्गुलपरिमितम् । तद्द्विधा— तयोरेकं मत्स्य तालुवदेवतालं नाम, अन्यत् द्वितालं नाम । सु सू ७ष

**तालुरोग** । पुं । मुखरोगभेदे, तालुदेशस्य रोगे । स नवधा यथा—गलशुण्डी तुण्डिकेरीअधूष कच्छप ताल्वर्बुद मांससङ्घात तालुपुप्पुट तालुशोष तालुपाकश्चेति । भा म ४भ सुखरो चि । एषां विवरणा स्वस्वपर्य्याये द्रष्टव्या ।

**तालुविद्रधि (धी)** । स्त्री । तालुशोथे । "स्यात्तालुविद्रध्यपि दाहरागरुजा भवेत्तालुनि सा त्रिदोषात् ।" च ।

**तालुशोष** । पु । तालुदेशे वायुजन्यरोगविशेषे । तत्र तालुदेशे विदारणवत्पीडा श्वासच जायते । "शोषोऽत्यर्थं दीर्य्यते चापि तालु श्वासो वातात्तालु शोषोऽयमुक्त ।" भा म सुखरो चि ।

**तालुसंहति** । स्त्री । तालुरोगविशेषे । "तालु मध्ये निचद्मांस कहतं तालुसंहति ।" वा उ २१ष ।

**तालूरः** । पु । जलावर्त्ते । हे ।

**तालेश्वररसः** । पु । कासरोगे रस । रस २ तो लौह २ तो गन्धक ४ तो अभ्र ८ तो हरिताल १ तो मनशिला ॥० तो जयन्ती (जन्ती) एरण्ड चाङ्गेरी (आमरुल) तण्डुलीय (काँटानटे) केशराज (केशुते) भृङ्गराज (भीमराज) पत्ररसेन प्र त्रिधा भावयेत् । रस को ।

**तालपर्णी** । स्त्री । मिश्रेयायाम् । शुल्फा । रा ।

**तालव्र्बुदम्** । क्ली, पु । तालुगोत्ररोगे । टाक्‌रा फोला । लक्षण—पद्माकार तालुमध्ये तु शोफ विद्याद्रक्तादर्व्बुद पित्तलिङ्गम् । भा ।

**तालस्थि** । क्ली । तालुदेशस्थे अस्थनि । ते च द्वे । च शा ७ अ ।

**तावीषः** । पु । स्वर्णे ।

**तिक्तः (क्तः)** । पु । पटोललतायां । पल्ता नति । प मु । भा । वरुणवृक्षे । वरुण गाछ । श मा । कुटजवृक्षे । कुडची गाछ । श च । किराततिक्तके । चिरेता । श र । वा उ २ अ । कुरवकशाके । कुरुया शाक । पर्पटकक्षुपे । क्षेत्पापड़ा । प मु । हे च । वाय्वाकाशभूयिष्ठ षड्रसान्यतमरसे । तेतो रस । 'यो गले चोष मुत्पादयति मुखवैशद्य जनयति भक्तरुचिमत्पाद यति हर्षञ्च स तिक्त ।'' सु सू ४२ अ । स निम्बादौ स्वाद्यते । गुणा—कृमिघ्न कुष्ठघ्न अतिसेवनात् राजयक्ष्माण करोति । रा नि व २० । शीतलघुरुच्य दीपन पाचन शोधन अरोचक विषघ्न । तद्विपाकोऽपि कटु । स च विपाको वातकृत् कफपित्तघ्न । सु सू ४२ अ । "प्रतिहन्ति निपाते यो वमनं स्वदते न च । स तिक्तो मुखवैशद्यशोष प्रह्लादकारक ॥'' चर । स चातियुक्त शिरःशूल मन्यास्तम्भश्रमान् जनयति । तथा कम्पमूर्च्छातृषा बलशुक्रक्षयकरश्च भवति । इङ्गुदीवृक्षे । भा । निम्बवृक्षे । वै निघ । क्ली । तेजोह्वायाम् । तेज-वल । वै निघ अयरो चि गोखुरद्वते । पित्ते । विटलवणे । क्षणखदिरे । श मा ।

**तिक्तकघृतम्** । क्ली । कुष्ठ घृतम् । गव्यघृत ४श । क्वाथार्थं त्रिफला हरिद्रा दारुहरिद्रा वासा दुरालभा क्षेत्रपर्पटी पटोलपत्र त्रायमाणा कटुकी निम्बत्वक् एषां प्र २ प वारि ६४ श शे १६ श । कल्कार्थं—पिप्पली मुस्तक रक्तचन्दन त्रायमाणा (बला लता) इन्द्रयव भूनिम्ब एषां प्र ४ तो समाम्तरे ६ तो । सु चि ९ अ । च द । घृत ४ श । कल्कार्थं—सप्तपर्णत्वक् अतिविषा सम्पाक (सोदाल) कटुकी पाठा मुस्तकम् उशीरं त्रिफला पटोलपत्र निम्बत्वक् क्षेत्रपर्पटी दुरालभा रक्तचन्दन पिप्पली गजपिप्पली पद्मकाष्ठ हरिद्रा दारुहरिद्रा वचा इन्द्रवारुणी (राखाल-शशा) मुरा वा शतावरी श्यामालता अनन्ता इन्द्र यव वासा मूर्व्वा गुडूची भूनिम्ब (चिरेता) यष्टिमधु त्रायमाणा एषां मिलिता १ शराव (१ सेर) । जल ३२ श आमलकफलरस ४ श । च द । रस र । महातिक्तकमिदम् ।

**तिक्तकन्द(न्दि)का** । स्त्री । आमहरिद्रायां । मालवे पलाश इति ख्याते गन्धपत्रवृक्षे । रा नि व ६ । तिक्तदन्तकापीति क्वचित् निघण्टौ पाठ ।

**तिक्तकरोहिणी** । स्त्री । कटुकाम् । कट्की । च द पित्तज्व चि कलिङ्गादौ ।

**तिक्तकर्कोटकी** । स्त्री । तिक्तकर्कटिकायां । तित्‌कांकड़ी, काँकरोल । श चि ।

**तिक्तका** । स्त्री । तुम्ब्यां, कटुतुम्ब्याम् । तित्‌लाउ । प मु । काकजङ्घायाम् । करञ्जलतायां । घुघुशाके । वै निघ ।

**तिक्तकाण्डः** । पुं । भूनिम्बे । चिरता ।

**तिक्तकाण्डेरुहा** । स्त्री । कटुकायाम् । कट्की ।

**तिक्तकोषातकी** । स्त्री । तिक्तघोषायाम् । तित्‌पल्ता । भैष कुष्ठचि ।

**तिक्तगन्धा** । स्त्री । राजिकायाम् । राई । श निघ । वराहक्रान्तायाम् ।

**तिक्तगन्धिका** । स्त्री । वराहक्रान्तायाम् । वराक्रान्ता । श मा ।

**तिक्तगुञ्जा** । स्त्री । करञ्जवृक्षे । हारा । तत् पर्याय ,—घृतरसा, रसघा, विद्धकर्ण्टी ।

**तिक्ततण्डुला** । स्त्री । पिप्पल्यां । रा नि व ६ ।

**तिक्ततुण्डी** । स्त्री । कटुतुण्डीलतायाम् । तित् कुन्दरु, तेलाकुचा । हि कटुतराइ । रा नि व ३ ।

तिक्ततुम्बी। स्त्री। कटुतुम्ब्याम्। তিৎ লাউ। प मु।

तिक्तदुग्धा। स्त्री। क्षीरिण्याम्। अजशृङ्ग्याम्। কাঁকড়াশৃঙ্গী। रा नि व ५।८।

तिक्तधातु'। पु। पित्ते। रा नि व २१।

तिक्तनित्य'। त्रि। नित्यं तिक्तभक्षणशीले। च द।

तिक्तपर्णी (र्णिका)। स्त्री। गोरक्षकर्कट्याम्।

तिक्तपत्र (त्री)। पु, स्त्री। कर्कोटकवृक्षे। কাঁকরোল লতা। हे च। भैष छपर्द चि।

तिक्तपर्व्वा। स्त्री। गुड़ूच्याम्। यष्टिमधुनि। हिलमोचिकायां। मे। ब्राह्मीभेदे। दूर्व्वायाम्। जटा।

तिक्तपुष्पा। स्त्री। पाठायां। रा नि व ६।

तिक्तफल' (ला)। पुं, स्त्री। कतकवृक्षे। निर्म्मली वृक्ष। रा नि व ११। (ला, कतकबीजे। वै निघ। यवतिक्तालतायां। रा नि व ३। वार्त्ताक्यां। पञ्चभुजायां। थरमुज। रा नि व ७।

तिक्तभद्र (क')। पु। पटोललतायां। श च।

तिक्तमरिच'। पु। कतकवृक्षे। रा नि व ११।

तिक्तयवा। स्त्री। यवतिक्तालतायां। रा नि व ३। शङ्खिन्याम्। वै निघ।

तिक्तरसा। स्त्री। ब्राह्मीनाम शाकभेदे।

तिक्तरोहिणिका (णी)। स्त्री। कटुकायां। कट्की। रा नि व ६। र मा। सि यो कफज्व चि। च द कफज्व चि।

तिक्तला। स्त्री। शङ्खिन्यां। नवमालिका। श द १२ च।

तिक्तवर्ग। पु। तिक्तरसस्कन्धवर्गे। तद्यथा—मण्डूकपर्णी (থুলকুড়ি)—वेत्रकरीर (বেতের কোঁড়)—हरिद्राद्वय (হরিদ্রা দারুহরিদ্রা)-इन्द्रयव वरुण स्वादुकण्टक (বঁইচী) सप्तपर्णवृहतीद्वय (বৃহতী, কণ্টকারী) शङ्खिनी (শাঁকিনী) द्रवन्ती (হস্তুরকাণী) त्रिवृत् कृतवेधन-(ঘোষা) कारवेल्ल (উচ্ছে) वार्त्ताकु करीर (ব শাঙ্কুর)-सुमन (নাটা) शङ्खपुष्पी (ডানকুণী) अपामार्ग त्राय माणा (পোহানিয়া) रोकरोहिणी (কটুকী)-वैजयन्ती (জন্তী) सुवर्चला (হুড়হুড়ে) पुनर्नवा वृश्चिकाली (বিছাতী) ज्योतिष्मती (লতাফটকী) —प्रभृतीनि द्रव्याणि। सु सू ४२ च।

तिक्तवल्ली। स्त्री। मूर्व्वायां। मुर्गा। र मा।

तिक्तवार्त्ताकु'। पु। The egg plant, the fruit of which is bitter वार्त्ताकु भेदे। তেত বেগুন। हि तीत् भण्टा। श द १२ च।

तिक्तवीजा। स्त्री। कटुतुम्ब्यां। रा नि व ३।

तिक्तशाक'। पुं। वरुणवृक्षे। प मु। पत्र सुन्दरवृक्षे। मे। खदिरवृक्षे। त्रिका।

तिक्तशावातक'। पु। श्वेतमधूकवृक्षे। शब्दमा।

तिक्तशाकद्रुम। पु। वरुणवृक्षे। वै निघ।

तिक्तषट्पलक (घृतम्)। क्ली। कुष्ठाधिकारे। क्वाथार्थे—निम्बत्वक् पटोलपत्र दार्व्वी दुरालभा कटुकी त्रिफला पर्पटक त्रायमाणा प्र ४ तो जल ३२ श शे ४ श। कल्कार्थे—रक्त चन्दनं भूनिम्ब पिप्पली त्रायमाणा (বলা লতা) मुस्तकम् इन्द्रयव प्र १ तो। च चि ७ च।

तिक्तसार.। पु। विट्खदिरवृक्षे। प मु,। See अरिमेद। क्ली। दीर्घरोहिषे। বড গ্রাম কর্পূর। रा नि व ८।

तिक्तस्कन्ध। पु। षड्धास्थापनस्कन्धेषु तिक्त वर्गीयद्रव्यकृतास्थापनविशेषे। च वि ८ च।

तिक्ता। स्त्री। लताकस्तूरिकायाम्। লতাকস্তুরিকা। सि यो यक्ष्मा चि चन्दनादि तैले। "हरिद्रे शारिवे तिक्ता।" कटुकायां। रा नि व ६। चि शो हिक्काश्वासलिङ्गे। च द शूल चि। वा उ २च। "तिक्ताकाञ्चनगैरिकम्।" छिक्किन्यां। भा। मूर्व्वायाम्। मुर्गा। रा नि व ३। सि यो कासचि। कटुरोहिण्यां। पाठायाम्। रा नि व ६। यव तिक्तायां। कटुतुम्ब्यां। रा नि, व ३।

तिक्ताख्या। स्त्री। कटुतुम्बीलतायाम्। কটুতরাই। रा नि व ३।

तिक्ताङ्गा। स्त्री। पातालगरुडीलतायाम्। শিলিন্দা। रा नि व ३।

तिक्ताद्वयम्। क्ली। एका कटुका अन्या काक तिक्ता च। वा सू १५ च।

तिक्तामृता । स्त्री । गुडूच्याम् । वै निघ ।

तिक्तालाबूः । स्त्री । तिक्ततुम्ब्यां । তিৎলাউ । म द १२ ख ।

तिक्तास्यता । स्त्री । पित्तजन्यमुखरोगे । वै निघ ।

तिक्तिका । स्त्री । कटुतुम्ब्यां । श र । काकमाच्यां । रा नि व ४ । तिक्तपटोल्यां । তিৎপলতা । सा क्लौ श्रममारये ।

तिक्तोत्तमा । स्त्री । पटोले । वै निघ ।

तिग्मम् । क्लौ । तीक्ष्णे । च ।

तिग्मांशुः । पु । सूर्ये । इ ।

तिङ्गुदः । पु । इङ्गुदीवृक्षे । वै निघ ।

तिजिलः । पु । चन्द्रे । उ ।

तिण्टी । स्त्री । ग्यौयाके । चिञ्चायां । श च ।

तितउः । पु । शतपीवके । চালনী ।

तितिभः । पु । इन्द्रगोपकीटे । हे च ।

तितिरि' । पु । तित्तिरपक्षिणि । रा

तितिलम् । क्लौ । तिलपिष्टे । वै निघ ।

तित्तिडीकः (डीका) । पु, स्त्री । आमवेतसे । तिन्तिड्यां । वै निघ ।

तित्तिर' (रि') । पु । पक्षिविशेषे । তিতির পক্ষী । सं तीतुकपिट्ट । वसन्तगौर इति च । तत्पर्य्याय,—कपिञ्जल, लघुमांस (त्रि), खरकोण (हे), चित्रपक्ष (ज), तितिरि, तैत्तिर, याजपीदर । गौरकृष्णभेदेन तित्तिरी द्विविध । तयो कृष्ण तित्तिरिरिति, गौर प्रशस्त कपिञ्जल इति कथ्यते । मांसगुणा —वर्ण्द ग्राहि हिक्काघ्न त्रिदोषघ्न श्वासकासज्वरघ्नम् । भा मांसव । रक्तपित्ते हितम् । सिधी र पि चि । स्निग्ध लघु बलवीर्य्यकर कषाय मधुर शीतल त्रिदोषघ्न । रा नि व १७ । "तित्तिरि द्रव्यवर्ण्य स्वाशिखोऽथो गौरतित्तिरि । तित्तिरिश्रमदो याहो हिक्कादोषनयापह । श्वासकासज्वरहरश्वाग्रहोरी,शिखो गुणे ॥" अपिच "तित्तिरि सर्व्वदोषघ्नो ग्राही वर्ण्यप्रसादन । हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरि ॥" सुसू ४६ । यदैव तित्तिरी द्रव्य विशेषात्स्वभाव । सर्व्वदोषहरी वन्यो बलाकामनता गुणे । गौरतित्तिरभेदच श्रेष्ठो गौरच तित्तिर' । कृष्णोदतित्तिरोऽश्चोऽपि सामान्यगुण

लक्षणे । स, वातलोऽतिबलकृद्दहन किञ्चिद्रसायन ॥" अत्रि २१ ख । सारसपक्षिणि । नेपाल वृक्षे । वै निघ ।

तित्तिरीफलम् । क्लौ । नेपालवीजे । वै निघ । इथाम्ले ।

तिथः । पु । अग्नौ । प्रावृट्काले । सं सा ।

तिथिप्रणीः । पु । चन्द्रे । हे ।

तिदिशः । पु । डिण्डिशे । ঢেঁড়শ । वै निघ ।

तिनाशकः । पु । तिनिशवृक्षे । আবল গাছ । श र ।

तिनिः । पु । तिनिशवृक्षे । আবল গাছ । "कट्फल तिनिसैन्धवम् ।" सु चि १९ ख ।

तिनिका । स्त्री । यवनालवृक्षे । জনার গাছ । वै निघ ।

तिनिशः । पु । (Lagerstroemia flos-Reginae or Dalbergia oujeinensis) स्वनामख्यातवृक्षे । আবল গাছ, সাদন গাছ । प सु । हि तिरिच्छ । सन्दन इति महाराष्ट्रे कर्णाटे अनूपदेशे च प्रसिद्ध । च चि १ ख । तत्पर्य्याय,—तिनाशक, सन्दनद्रुम (शब्दर), अचक (र), चित्रकर्मा (श), सन्दन, नेमी, रथद्रु, अतिमुक्तक, वञ्जुल, चित्रकृत् (अ), भस्मी, शताङ्ग, शकट, रथ, रथिक, भस्मगर्भ, मेषी, जलधर, सन्दनि । गुणा —कषाय उष्ण कफरक्तातिसारघ्न ग्राहक दाहजनक वातरोगहितद । रा नि व ९ । "तिनिश श्लेष्मपित्तास्रमेदकुष्ठप्रमेहजित् । तुवर श्वित्रदाहघ्नो व्रणपाण्डुकृमिप्रणुत् ॥" भा ।

तिन्तिडः । पुं । इथाम्ले । विश्व ।

तिन्तिडि(डी)कः (कम्) (का) । पुं, क्लौ, स्त्री । The tamarind tree or its fruit (Tamarindus Indica) स्वनामख्यातवृक्ष फलवृक्षे । তেঁতুল গাছ, তেঁতুল । हि अमली, इमली । म इमली, चिञ्चा । क नुमिहे । तैलिङ्ग । उत्र कँया । ता पुलि । बम टिनृटम् । तत्पर्य्याय,—चिञ्चा, अम्लिका (अ), तिन्तिडीक, तिन्तिडीका, तिन्तिड्रिक, अम्लीका, आम्लिका, आम्लीका, शिलिम्भीका (च टी), इथाम्ल', तिन्तिड (वै), तिन्तिड्री, तिन्तिडिका, अम्लिका, गुरु, प्रा, अ अम्ला, अम्लस्रा, गुरू,

भृक्तिका, चारिका, गुरुपत्रा, पिच्छिला, यम दूतिका, चरिता (शब्दर), शाकचुक्रिका, सुचु क्रिका, सुतिन्तिड़ी। गुणा—आमा (काँचा) गुरुवातहरा पित्तकफरक्तघ्नी। पक्का (पाका वा गोवृद्धा) सरा रुच्या वह्निकृत् वस्तिशोधनी। शुष्का (शुद्ना) हृद्या लघु श्रमभ्रान्तिवृष्णाहरी व। मदव६। आम वातघ्नी गुरु पित्तकफास्त्र कृत्, पक्का दीपनी रुच्या सरा उष्णा वातकफघ्नी त। भा पू १भ। आम वातघ्नम् उष्णम् अतिगुरु त। पक्क लघु संग्राहि ग्रहणी कफवातजित्। द व ६। आमतिन्तिडी (काँचा तेँतुल) त्यम्ला। पक्का (पाका तेँतुल) मधुराम्ला वातघ्नी पित्तदाहरक्तकफप्रकोपकरी। तिन्तिडी म् आममयम्ल लघु पित्तकृत्। पक्व फल धुराम्ल भेदन विष्टम्भवातघ्न। अम्ल कटु षाय कफार्शोघ्नमुच्य वातोदरवृष्णाहृद्रोगयक्ष्मा सारत्रणघ्न। रा नि व ६। पक्कचिञ्चाफलरस धुराम्ल रुचिद शोथपाककरतैव प्रशान्तिघ्न। चापत्रं (तेँतुलपाता) शोफघ्न रक्तदोषव्यथा घ्न। तस्य शुष्कत्वक्क्षार (शुष्क तेँतुलछालेर त्र) शूलाग्निमान्द्यहर। रा नि व ११।

न्तिडीकम्। क्ली। वृक्षाम्ले। तेँतुल। । सि यो स्वरभेद चि चव्यादिलेहे। पु। वितसे। वै निघ।

न्तिडीयुतम्। क्ली। चुकयाम्। दाँइ तेर खोला।

न्तिडी(ली)फलम्। क्ली। वृक्षाम्ले। तुल। मशा आदा। रा नि व ८। नेपाल । पसु।

तणी (ला) (लि(ली)का) (ली)। ञ्चा। भटी। श र। वै निघ ग्रहणी चि यादिचूर्णे।

तराङ्गम्। क्ली। वज्रलोहे।

दश। पु। टिण्डिशवृक्षे। रा नि व ७।

(क)। पु, क्ली (कम्)। (Diospyros tinosa or D Cordifolia or D bryoptoris) स्वनामप्रसिद्धवृक्षे तत्फले गाव, तेँद, मात्‌ड़ा केँदु। हिं तेंद, ाकँद, गाव। मं टेम्बरयिं। क रुतरु।

ते तमिक्। ता तुम्बिक। यम तिम्बोरी। तत् पर्याय,—स्फूर्जक, कालस्कन्ध, शितिसारक (च), स्फूर्जक, कैन्दु, तिन्दु, तिन्दुल, तिन्दुकी (शब्दर), नीलसार, अतिमुक्तक, रायक, रामण, स्फूर्जन, स्पन्दनाह्वय, काल सार। च सू ४ अ। सु सू ३८अ न्यग्रोधादि। फलगुणा—स्यादाम तिन्दुक ग्राहि वातल शीतल लघु। पक्व पित्तप्रमेहास्रश्लेष्मघ्न मधुर गुरु॥ भा आम्रव। अस्तीय लघु सग्राहि स्निग्ध पित्ताग्नि वर्द्धनं। आम कषाय सग्राहि तिन्दु वात प्रकोपनम्॥ सु सू ४६अ। तिन्दुकाम कषाय स्यात् संग्राहि वातकृत्पर। पक्वन्तु मधुर स्निग्ध दुर्जरं श्लेष्मल गुरु॥" रा नि व ११। (Diospyros melanoxylon) Ebony tree काकतिन्दुके। तिन्दुकभेदे। केँद, आवनुश। हि केन्दु, तेन्दु। ते तुमि, तुमकि। ता तुम्बि। कुचेलकी। तिण्डिशे। टेँडश। वै निघ। क्ली। कप २ ती। पप्र १ख।

तिन्दुकाक्षतिफल } पु। द्वीपान्तरखर्ज्जूरी
तिन्दुकाभफल। } वृक्षे। पिण्डीखेजुर। वै निघ।

तिन्दुकास्थि। क्ली। तिन्दुकबीजे। केँद फलेर बीज।

तिन्दुकि। स्त्री। तिन्दुकवृक्षे। श र।

तिन्दुकिनी। स्त्री। आवर्त्तकीलतायां। आंट-मोडा। रा नि व ३।

तिन्दुकी (इन्)। पु। तिन्दुकवृक्षे। गाव गाछ। रमा। श र।

तिन्दुज (क')। पु। लोध्रवृक्षे। पसु। च द परिणामशूले।

तिन्दुल। पु। तिन्दुकवृक्षे। श र।

तिन्दुबीजम्। क्ली। केन्दुकबीजे। केँउ बीज। र चि कृमि चि।

तिमि। पु। सागरजमहामत्स्ये। तिमि माछ। गुणा—"सामुद्रा गुरव स्निग्धा मधुरा नाति पित्तला। उष्णा वातहरा हृद्या वचसा श्लेष्म वर्द्धना। बलावहा विशेषेण मांसाशिनासम् द्रजा॥" सु म ४६अ।

तिमिकोष। पु। समुद्रे।

**तिमिङ्गिलः** । पु । सागरजाते तिमितोऽपि महति मत्स्य । अयन्तिमिभक्षक तद्गयथ । अम ।

**तिमिङ्गिलगिलः** । पु । राघवमत्स्ये । अय तिमिङ्गिलभक्षक । राघव बोआल । ह च ।

**तिमित** । त्रि । क्लिन्ने । भिजे । रा

**तिमिरः (रोग)** । पुं, क्ली । लिङ्गनाशा परनामधेये नेत्ररोगविशेषे । आन्धार । हि नजला । तच्च षड्विध वातपित्तकफरक्तसंसर्गसन्निपातभेदेन । निदानादि यथा—दोषायतुर्थपटल माश्रित्य तिमिरमुत्पादयन्ति । तेन साकल्येन दृष्टि रोधो भवति । गाढे च तस्मिन् तेज पदार्थमपि न दृश्यते । "तिमिराख्य स वै दोषश्चतुर्थपटल गत । रुणद्धि सर्व्वतो दृष्टि लिङ्गनाशमत परम् । अस्मि नपि तमोभूते नातिरूढे महागदे । चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युत । निर्मलानि च तेजांसि भ्राजिष्णून्यथ पश्यति ॥ शिरानुसारिणि मले प्रथम पटल श्रिते । अव्यक्तमीक्षते रूप व्यक्तमप्यनिमित्तत । प्राप्ते द्वितीय पटलमभूतमपि पश्यति । भूतन्तु यत्नादासन्न दूरे सूक्ष्म नेक्षते । दूरान्तिकस्थ रूपञ्च विपर्य्यासेन मन्यते । दोषे मण्डलसस्थानि मण्डलानीव पश्यति । द्विधैकदृष्टि मध्यस्थे बहुधा बहुधास्थिते । दृष्टेरभ्यन्तरगते ह्रस्ववृद्धविपर्य्ययम् । नान्तिकस्थमध सस्थे दूरग नोपरिस्थितं । पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्यो ऽयमामय ॥' वातजे यथा—" वाते तु सद्दो चयति दृक्शिरा । हृन्मण्डल विशल्यन्ती गम्भीरा दृगसौ स्मृता ॥" पित्तजे यथा—"पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितम् । शिखितित्तिरपिच्छाभ प्रायो नीलञ्च पश्यति ॥' कफजे यथा—"कफेन तिमिरे प्राय स्निग्ध श्वेतञ्च पश्यति । शङ्खेन्दु कुन्दकुसुमै कुमुदैरिव चाचितम् । रक्तेन तिमिरे रक्त तमोभूतञ्च पश्यति । सर्वेसन्निपातेषु विद्यात् सर्व्वलक्षणम् ॥" वा उ १२ अ । अन्यच्च नेत्र रोगविशेषे । आन्धी । लक्षण—"कदाचिद्दीनते रूप कदाचिन्न वीक्ष्यते । तिमिर त विजानी यात् लिङ्गेनानेन बुद्धिमान् ॥" ल द २० अ । लौहकिट्टे । सामे । विका । जलजवृक्षभेदे । नखरञ्जनवृक्ष । मेदी गाछ । द्रव्याभि ।

**तिमिरा** । स्त्री । हरिद्रायाम् । भेद वातरक्तापि विषबिन्दुकरोति ।

**तिमिरि** । पु । मत्स्यभेदे । वै निघ ।

**तिमिरो (रिन्)** । पु । इन्द्रगोपकीटे । वै निघ ।

**तिमिष** । पु । कुष्माण्डलतायाम् । कुमड़ो गाछ । विका । वाग्यकर्कटिकायाम् । विका । तरम्बुजलतायाम् । नाटामे । द्वारा ।

**तिमी** । स्त्री । तिमिमत्स्ये । विश्वकोष ।

**तिमीरकः** । पु । नखरञ्जकवृक्षे । मेहेदि गाछ । प मु ।

**तिरश्ची** । स्त्री । पशुपक्षिस्त्रियाम् । मादि ।

**तिरस्कारिणी** । स्त्री । व्यवधायकवस्त्रे । च, कानात ।

**तिरिजिङ्गिकः** । पु । पारिजातवृक्षे । वै निघ । पालते ।

**तिरिट** । पु । इक्षुदण्डे । वै निघ ।

**तिरिटिः** । पु । इक्षुग्रन्थौ । श का ।

**तिरिणीकण्ट.** । पुं । पारिजातवृक्षे । पालते मान्दार । वै निघ ।

**तिरिमः (रिय.)** । पु । शालिधान्यभेदे । गुणा —मधुर स्निग्ध शीतल दाह पित्तघ्न रुच्य त्रिदोषघ्न पथ्यश्च । रा नि व १६ ।

**तिरीट.** । पु, क्ली । लोध्रवृक्षे । प मु । रा नि व ६ । मेघ नैवरी चि । किरीटे । उ ।

**तिरीटक** । पु । पट्टिकालोध्रे । स्त्रियो रक्तार्श ति । भा म ४भ ।

**तिरीपशालिः** । पु । मासत्रयपक्वे शालिधान्य भेदे । वै निघ ।

**तिर्य्यक्** । पु । चक्रलधातौ । पारा । पक्षि जातौ । वै निघ ।

**तिर्य्यक्पातनम्** । क्ली । पारदस्य पातन क्रियाविशेषे । तत्साधनविधि—"घटे रसं विनि क्षिप्य सजल घटमन्यकम् । तिर्य्यङ्मुख द्वयो कृत्वा तन्मुख रोधयेत् सुधी । रसाधो ज्वालयेदग्नि यावत् सूतोऽम्भ विशेत् । तिर्य्यक्पातनमित्युक्त सिद्धै नागार्जुनादिभि ॥" र सा स ।

**तिर्य्यक्फला** । स्त्री । मतुकालतायाम् । आंकोड़ा । रा नि व ३ ।

**तिर्य्यक्स्रोता: (स्)** । पु । पशुपक्ष्यादौ ।

**तिर्य्यक्च्छिन्नम्** । क्ली । अस्थिभङ्गविशेषे । See भग्नम् ।

तिर्य्यग्गतः । त्रि । तन्निष्ठानं स्यक्ता यक्र गते ।
ा म १म भग्न त्रि ।

तिर्य्यग्गा । स्त्री । पुतनीशाके । पुदिना । प मु ।

तिर्य्यग्गामी (इन्) । पुं । कर्कटे । वै निघ ।

तिर्य्यग्यन्त्रम् । क्ली । पारदस्य तिर्य्यक्पात
ार्थे यन्त्रविशेष । "अध पाते त्वधोभाण्डे त्रिभाग
जलपूरिते । तोयमन्यद्भाण्डस्य तद्गाण्डस्थोड
म्नत । विघेर्ट ज्वालयेदग्नि मृत्तोपरि च
मर्यै । तिर्य्यक्कृतञ्च तद्यन्त्रं तिर्य्यग्यन्त्रमुदी
तम् ॥" रस त्रि ।

तिर्य्यग्यवोदरम् । क्ली । यवधान्ये । वै निघ ।

तिर्य्यग्यान । पु । कर्कटे । त्रिका ।

तिर्य्यग्योनि । पु । पशुपक्ष्यादौ । सुश्रु ।

तिर्य्यङ् (ञ्च) । त्रि । विहङ्गादौ । मे ।
। है ।

तिर्य्यञ्ची । स्त्री । पशुपक्ष्यादौ । मुग्धबो ।

तिल (क) । पु, क्ली, । (Sesamum Indicum) स्वनामख्यातक्षुपे । तिल गाछ ।
। हि मिठातिल । म तिल । क एलु । ते
लु, मलिनूने नुव्वुलु । ता वाळ्ळेन्नेय । फा
द । दा थारिक तिल । तत्पर्य्याय,—
ान्य पवित्र, पितृतर्पण, पापघ्न, पूतधान्य
, स्नेहफल, स्नेहफलपूरफल । श्वेतकृष्ण
न्यभेदेन चतुर्धा । सा गुणा—स्निग्ध वर्ण
शवृद्धिकर स्तन्यघ्न वातघ्न गुरु उष्ण
र मूत्रलाघवकर व्रणे हित पथ्य ।
ी मधुर कषाय तिक्त कटुविपाक पथ्य
। इति कृष्णतिलगुणा । सित अल्पगुणद ।
व १६ । "कृष्णः श्रेष्ठतमस्तेषु शुक्लो
सित । अन्ये हीनतरा प्रोक्तास्तज्ज्ञै
यस्तिला ॥" भा पू १भ धान्यव । "तिलो
मधुरो बलिष्ठ स्निग्धो व्रणालेपनपथ्य
अल्पोऽग्निमेधाजननो वरेण्यो मूत्रस्य
रणो गुरुश्च । तिलेषु सर्व्वेष्वसित प्रधानो
सितो हीनतरास्तथान्ये ॥" अत्रि १५अ ।
गुणा—"वातल कटु तिक्ताम्लमधोमार्गं
म् ।" च सू २७ अ । (क) लोध्रवृक्षे ।
गाछ । रा नि व ६ । मरुवकवृक्षे । मरुआ
गाछ । तत्पर्य्याय,—विशेषक, सुमन
, पुण्ड्र, पुण्ड्रक, स्थिरपुष्पी, छिन्नरुह,
दग्धरुह, गतजीव, तरुणीकटाक्षकाम, वासन्त
सुन्दर, दुग्धरुह भालविभूषणसञ्ज्ञ, पुन्नाग,
रेचक (रा) । गुणा—मधुर शीत वातपित्त
कफघ्न बलपुष्टिकर हृद्य लघु मेदोवृद्धिकरश्च ।
रा नि व १० । कटुपाक उष्ण रसायन कफ
कुष्ठकृमिघ्न वस्तिदन्तमुखरोगघ्नश्च । भा । केतकी
वृक्षे । गुड्त्वाम् । सुवर्च्चाम् । उच्छे । रा नि
व २३ । मूत्राशये । अश्वविशेषे । मे । तिल
कालकरोगे । अम । (कम्) क्ली । सौवर्च्चल
लवणे । रा नि व ६ । कान्तलौहे । गुड़े । कृष्ण
तिले । वै निघ । मस्तिष्के । क्लोम्नि । रा नि व
१८ । कृष्णसौवर्च्चललवणे । काचलवणे । चित्रके ।
त्रिका ।

तिलकाट । पु । तिलपुष्परेणौ । तिलचूर्णे ।
वै निघ ।

तिलकण । पु । मार्जिततिले । माजा तिल ।
च सू ४अ ।

तिलकाल्वक् । स्त्री । तिलवल्कले । तिलेर
छाल । गुणा—कषाया उष्णा पुस्त्वघ्नी दन्तदोष
हरी कृमिशोफव्रणघ्नी रक्तदोषघ्नी । रा नि व १० ।

तिलकन्द । पु । विषपर्णीकन्दे । रा नि व ७ ।

तिलकल्क (ज) । पु, क्ली । पीडिततिल
पिण्याके । तिलेर खोल । रा नि व १६ ।

तिलका । स्त्री । कस्तुरीमृगभेदे । रा ।

तिलकालक । पु । क्षुद्ररोगभेदे । तिल ।
तत्पर्य्याय,—तिलक (अ), व्यालक, पिप्लु,
जड़ुल (हे) । लक्षण—"कृष्णानि तिलमात्राणि
नीरुजानि समानि च । वातपित्तकफोद्रेकात्तान्
विद्यात्तिलकालकान् ॥" मा नि । शूकरोगभेदे ।
"कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ।
पातितानि पचन्त्याशु मेढ्रं निरवशेषत ॥ कालानि
भूत्वा मांसानि शीर्य्यन्ते यस्य देहिन । सन्निपात
समुत्थान त विद्यात्तिलकालकम् ॥" सु नि १४अ ।

तिलकाश्रय । पु । ललाटे । कपाटे ।
शब्दार्थकल्पतरु ।

तिलकिट्टम् । क्ली । तिलकल्के । तिलेर
थइल । गुणा—लेखन रुच विष्टम्भि दृष्टिदोष
करञ्च । भा पू १भ ।

तिलकी (इन्) । त्रि । तिलकालकयुक्ते ।

तिलकुट्टम् । क्ली । तिलकिट्टे । भा ।

**तिलखलि:** । पु । तिलकिट्ट । भा ।

**तिलचित्रपत्रक:** । पु । तैलकन्दनामककन्द शाके । रा नि व ७ ।

**तिलचूर्णम्** । क्ली । तिलकल्के । তিলকুটো । तत्पर्य्याय,—तिलकल्क, पलल, पिष्टकम् । गुणा—मधुर रुच्य रक्तपित्तबलपुष्टिकरत्व । रा नि व १६ ।

**तिलच्छक.** । पु । दृढ़ागर्भे । वै निघ ।

**तिलजम्** । क्ली । तैले । वै निघ ।

**तिलजटा** । स्त्री । तिलमञ्जर्य्याम् । दुग्धेनैतत् क्राथ आखुविषहर । वा उ ३८ श्र ।

**तिलजा** । स्त्री । तिलवासिनीशाली । হৈমন্তিক धान्यविशेष । रा नि व १६ ।

**तिलतण्डुलकम्** । क्ली । आलिङ्गने । श मा । तिलतण्डुले । सतिलतण्डुले ।

**तिलतैलम्** । क्ली । तिलभवतैले । তিলের তেল । गुणा—तीक्ष्ण लघ्दीपकृत् चक्षुष्य सूक्ष्म कफकृत् बद्धविट्क कृमिघ्न श्वेत शोधकं क्लमघ्न धातुपुष्टिकरत्व । वा तैलव । कैश्य मधुर तिक्त कषायम् उष्ण तीक्ष्ण बल्य कफवातजन्तुखजुघ्न कण्डू विषहर कान्तिकरत्व । रा नि व १५ । "कषायानुरस स्वादु सूक्ष्मञ्चोष्ण व्यवायि च । पित्त कृद्वातशमन श्मरीरोगादिवर्द्धन । बल्य रुचिकर मेध्य कण्डूकुष्ठविकारनुत् । ह्रद्य श्रमापह श्रेष्ठ तिलतैल विदुर्बुध । छिन्ने भिन्ने च्युते घृष्टे भग्नेऽपि दाहकेऽपि च । वाताभिषद्विस्फुटने चाभ्यङ्गे तिल तैलकम् । विषे व्यालगत सर्पे मेकेऽभ्यङ्गावगाहने । पाने वस्तौ वलाशे च तिलतैल विधीयते । तिल तैल विशेष स्यात् ज्वररोगनिवारणे ॥' अत्रि १४ श्र ।

**तिलनामा** । स्त्री । तिलवासिनीशाली । रा नि व १६ ।

**तिलनालभूति.** । स्त्री । तिलनालक्षारे । তিলের ক্ষার । गुणा—अश्मरीघ्न । च द अश्म चि ।

**तिलनी** । स्त्री । तिलवासिनीशाली । रा नि व १६ ।

**तिलपर्ण** । पु, क्ली । श्रीवेष्ट । দেবদারু-নির্য্যাস । रा नि व १२ ।

**तिलपर्ण(क)म्** क्ली । रक्तचन्दने । भा । श्रीखण्डचन्दने । শ্বেতচন্দন । रा नि व १२ ।

**तिलपर्णिका** । स्त्री । श्रीखण्डचन्दने, श्रीवे ष्टके । अश्वगन्धायाम् । शाकुनि । रा नि व २३ । रक्तचन्दनवृक्षे । ऐ च ।

**तिलपर्णी** । स्त्री । रक्तचन्दने । प मु । वै निघ २म ज्व भैरवीगद्याम् । तिलवासिनीशाली । रा नि व १६ । "तिलौनी"नामकशाकभेदे । र सा सारसमारणे । गुणा—लघु कफशोथहरी च । सु सू ४६ श्र । चन्दने । वै निघ ।

**तिलपिच्चटम्** । क्ली । तिलपिष्टके । তিল-কুটো । कश्चित् ।

**तिलपिञ्ज** । पु । श्वेततिलकवृक्षे । শাদা তিল । निष्फलतिलवृक्षे । अम । वन्यतिले । কাটতিল । वै निघ । [ प मु ।

**तिलपिण्डी** । स्त्री । तिलकल्के । তিল খইল ।

**तिलपिष्टकम्** । क्ली । पलले, कुट्टिततिल लतपिष्टके । তিলকুটো, তিলে সন্দেশ । गुणा —"पललन्तु समाख्यात हैमन्त तिलपिष्टकम् । पललं मलकृद्वृष्य वातघ्न कफपित्तकृत् । वृ हण गुरु ह्रद्यञ्च स्निग्ध मूत्रनिवर्त्तकम् ।" भा ।

**तिलपुष्पक** । पु । विभीतकवृक्षे । वै निघ । व्याघ्रनखवृक्षे ।

**तिलपेज** । पु । तिलपिञ्ज । শ্বেত তিল, নিষ্ফল তিল । वै निघ ।

**तिलभाविनी** । स्त्री । जातीपुष्पवृक्षे । रा नि व १० । [ व निघ ।

**तिलभेद.** । पु । खाखसवृक्षे । পোস্ত গাছ ।

**तिलमयूर** । पु । पक्षिभेदे । তিলে ময়ূর । तत्पर्य्याय,—गुरुशृङ्गक । त्रिका ।

**तिलमलम्** । क्ली । तिलकिट्टे । कै ।

**तिलमोदक** । पु । तिललड्डुके । वै निघ ।

**तिलरस.** । पु । तिलतैले । वै निघ ।

**तिलवासिनी (सी)** । स्त्री, पु । स्वनामख्यात शालिधान्यविशेषे । হৈমন্তিক धान्यविशेष । गुणा—पित्तकफघ्नी स्निग्धा कासश्वासहरा शीघ्र पाककारी लघु रुच्या शुक्रवर्द्धिनी महागुणा पाण्डुशूलामवातघ्नी प्रशस्ता च । रा नि व १६ ।

**तिलशालिः** पु, स्त्री। तिलवासिशाली। रा नि व १६।

**तिलश्यामा**। स्त्री। क्षुपरायाम्। থিচুড়ী। प मु।

**तिलसम्भवम्**। क्ली। तैले। वै निघ।

**तिलस्नेह**। पु। तिलतैले। (शब्दकल्पतरु)।

**तिलाङ्कितदल**। पु। तैलकन्द। रा नि व ७। See तैलकन्द।

**तिलापत्त्या**। स्त्री। कृष्णजीरके। श च।

**तिलित्स**। पु। गोनाससर्पे। अम।

**तिलौदनम्**। क्ली। तिलान्ने। हारा।

**तिल्यम्**। क्ली। तिलक्षेत्रे। रा नि व २।

**तिल्व (ल्व) (क)**। पु। मरुवकवृक्षे। মরুয়া ফুলের গাছ। र मा। लोध्रवृक्षे। अम। श्वेतलोध्रे। रक्तलोध्रे। षटी प्रभृति स्वा। लोध्राकारे वृहत्पत्रे रक्तवैरेचनिकवृक्षे। सु सू ३८ अ। श्यामादि ग। वा सू १५ अ। स्वल्पलोध्र। सु सू ३८ अ। अध प्रशमने। इङ्गुदीवृक्षे। वै निघ विषमज्व कोलादिघृते।

**तिल्वकतरु**। पु। लोध्रवृक्षे। वै निघ।

**तिल्वनी**। स्त्री। कर्णस्फोटायाम्। কাণছিড়া। वै निघ।

**तिष्य (क)**। पु। पौषमासे। श र। आमलकवृक्षे। अशनवृक्षे। वै निघ।

**तिष्यद्रु**। पु। सन्ध्यायाम्। भट्टि।

**तिष्यपुष्पा (फला)**। स्त्री। आमलकीवृक्षे। श च। अम।

**तिष्या**। स्त्री। आमलकीवृक्षे। श र।

**तिस्रा**। स्त्री। भद्रपुष्पीलतायाम्। वै निघ।

**तिहा(न्)**। पु। तण्डुले। वि। रोगिणि। यथा। धनुषि। स सा।

**तीर**। पु, क्ली। वङ्गे। मे।

**तोरण**। पु। करञ्जिकायाम्। वै निघ।

**तीरभुक्ति**। पु। मिथिलादिति ख्याते देशभेदे। वि।

**तीर्णपदी**। स्त्री। कुपथीकन्दे। তালমূলী। श च।

**तीर्थम्**। क्ली। स्त्रीरजसि। मे। योनौ। हे च। अग्नौ। निदाने। यथा। स्त्री। कदलीवृक्षे। रा नि व ११।

**तीर्थवाक**। पु। केशे। हे च।

**तीर्थसेवी (इन्)**। पु। वकपक्षिणि। रा नि व १९।

**तीवर**। पु। समुद्रे। अ।

**तीव्रम्**। क्ली। लौहे। तीक्ष्णलौहे। रा नि व १३। वङ्गे। यथा। त्रि। तीक्ष्णे। कटुनि। त्रिका।

**तीव्रकन्द (ठ)**। पु। शूरणे। ওল। कटु शूरणे। বুনো ওল। रा नि व ७।

**तीव्रगन्धा (न्धिका)**। स्त्री। यमान्याम्। रा नि व ६।

**तीव्रज्वाला**। स्त्री। धातकीवृक्षे। रा नि व ६।

**तीव्रवेदना**। स्त्री। अतिवेदनायाम्।

**तीव्रशक्ति**। स्त्री। कटुवीरायाम्। লঙ্কা-মরিচ। अ।

**तीव्रसन्ताप**। पु। श्येनपक्षिणि। বাজ পাখী। वै निघ।

**तीव्रा**। स्त्री। महाज्योतिष्मतीलतायाम्। বড় লতাফটকী। तरटीवृक्षे। तुलसीवृक्षे। रा नि व ६।८।१०। धातकीवृक्षे। पाण्डुशिंशपायाम्। वै निघ। गण्डदूर्वायाम्। राजिकायाम्। রাই। कटुकायाम्। मे।

**तीक्ष्ण**। पु। कृष्णसर्षपे। विषे। अम। तिक्तायाम्। यवक्षारे। शाखाश्रमूलके। रेचनधूमपानविशेषे। तत्र धूमनाडी २४ अङ्गुलय, धूपद्रव्याणि च तीक्ष्णानि भाव्यानि। मल्लकीवृक्षे। श्वेतशिग्रौ। छिक्किका। श्वेतमरुबके। कृष्णशिग्रपाया। पुरीषे। वै निघ। सितदर्भे। कुन्दुरौ। কুন্দুরখোটী। रा नि व ८।१२। क्ली। मणिका लवणे। तीक्ष्णवस्तुनि। कोरबादी। खर्परवालो। वै निघ। समरे। लौहे। प मु। तीक्ष्णलौहे। र मा। लवणे। मुष्कके। मे। मरिचे। वै निघ २अ अतिसारे चित्रकदार्व्वादि। चविकायां। रा नि व ६। मूत्रके। अम। त्रि। तीव्रगन्धयुक्ते। तदाश्यद्रव्य पित्तकर वातकफघ्न लेखनच। सु।

**तीक्ष्णक**। पु। सिद्धार्थे। শ্বেত সরিষা। रा नि व १६।

तीक्ष्णकण्टः (क) । पु । यासवृक्षे । गृध्रदृशानखा । रा नि व ४ । इङ्गुदीवृक्षे । करीरवृक्षे । वर्व्वूरकवृक्षे । रा नि व ८ । धुस्तूरवृक्षे । जटा । स्नुहीवृक्षे । व निघ । क्ली । धुस्तूरफले ।

तीक्ष्णकण्टका । स्त्री । कन्यारीवृक्षे । रा नि व ८ । फणवर्जीवृक्षे । फणिमनसा । वै निघ ।

तीक्ष्णकन्द. । पु । पलाण्डौ । रा नि व ७ ।

तीक्ष्णकल्क' । पु । रेचनाख्यधूमपानकल्क । स च वा पूर्णादि । भा । कुस्तुम्बुरुवृक्षे । তাম্বূল যল, নেপালি ধনে' । रा नि व ६ ।

तीक्ष्णकोल: (क) । पु । चकर्कटे । शुक्लमदन वृक्षे । वै निघ ।

तीक्ष्णगन्ध (क) । पु । पलाण्डौ । भैरवी वचायां । शोभाञ्जनवृक्षे । गन्धतुलस्यां । प मु । चवकवृक्षे । হেঁচেতা । रा नि व ९ । कृष्णशिग्रौ । एलायां । कृष्णार्जके । फणिज्झकवृक्षे । वै निघ । कुन्दुरखोटी । ग्रन्थार्थव । महाराजप्रसातैने ।

तीक्ष्णगन्धा । स्त्री । सूक्ष्मैलायां । र मा । श्वेत वचायां । कन्यारिवृक्षे । रक्तसर्पपे । राइ । रा नि व ६।८।१६ । वचायां । मे । भा म ४म चुद्रौ वि । जीवन्त्याम् । ग्र च । श्वेतजीरके । वै निघ ।

तीक्ष्णगन्धोग्रा । स्त्री । शुक्लवचायां । वै निघ ।

तीक्ष्णगुणकर्म्म । क्ली । तीक्ष्णद्रव्यगुणक्रियायाम् । तत् दाहपाकस्राव सावण मृदु च । सु ।

तीक्ष्णतण्डुला । स्त्री । पिप्पल्याम् । प मु । रा नि व ६ । भा पू १भ ।

तीक्ष्णतरु । पु । पीलुवृक्षे । वै निघ ।

तीक्ष्णतैलम् । क्ली । मद्ये । सर्ज्जरसे । स्नुही क्षीरे । श र । ज्योतिष्मतीतैले । মতাফট্‌কীর তৈল । रस र ।

तीक्ष्णत्वक् । पु । तुम्बुरौ । নেপালি ধনে' । वै निघ ।

तीक्ष्णदंष्ट्र' (क) । पुं । व्याघ्रे, चित्रकव्याघ्रे । रा नि व १८ ।

तीक्ष्णदुग्धा । स्त्री । क्षीरमये ख्याते यावनाल वृक्षे । वै निघ ।

तीक्ष्णद्रु । पु । पीलुवृक्षे । वै निघ ।

तीक्ष्णपत्र: । पु । कुमरिचे । लर्कामरिच । प मु । तुम्बुरुवृक्षे । रा नि व ११ । रक्तौषधी । इङ्गुदीवृक्षे । वै निघ ।

तीक्ष्णपर्णम् । क्ली । कम्मरङ्गवृक्षे । कै ।

तीक्ष्णपुष्पम् (ष्पा) । क्ली, स्त्री । लवङ्गे । रा नि व १२ । (ष्पा) श्वेतकेतकीवृक्षे । रा नि व १० ।

तीक्ष्णप्रियः । पु । यवे । वै निघ ।

तीक्ष्णफल' । पु । तुम्बुरुवृक्षे । रा नि व ११ । क्ली । तैल फले । वै निघ ।

तीक्ष्णफला । स्त्री । राजसर्षपे । বাই সরিষা । रा नि व १६ ।

तीक्ष्णमञ्जरी । स्त्री । नागवल्लीलतायाम् । পানের গাছ । वै निघ ।

तीक्ष्णमूल: । पु । कुलञ्जनवृक्षे । रा नि व ६ । शिग्रुवृक्षे । সজিনে গাছ । रा नि व ७ ।

तीक्ष्णरस' । पु । यवक्षारे । र मा ।

तीक्ष्णलौहम् । क्ली । कृष्णलौहे ' इस्पात, विदरोति भाषा । गुणा—रुक्षम् उष्ण तिक्त वातपित्तकफप्रमेहपाण्डुशूलघ्न मुण्डाधिकगुणञ्च । रा नि व १३ ।

तीक्ष्णवल्क' । पु । तुम्बुरुवृक्षे । रा नि व ११ ।

तीक्ष्णवृक्ष' । पु । पीलुवृक्षे । खा टी ईसा, ग्ररण्यश्च । सु १५म ग्रामादि ।

तीक्ष्णशूक । पु । यवे । प मु । रा नि व १६ ।

तीक्ष्णसार' । पु । मधूकवृक्षे । গউন গাছ । कृष्णशिग्रुयायाम् । घण्टापाटलायाम् । ঘণ্টা-পারুল । लौहे । वै निघ । स्त्री । कृष्णशिग्रुपायां । কাল শিশু বা অগুরু । रा नि व ९ ।

तीक्ष्णा । स्त्री । चत्यम्लपर्णाम् । वचायाम् । सर्पकदालिकालतायाम् । प मु । चविकायाम् । रा नि व ६ । महाज्योतिष्मतीलतायाम् । লতা ফট্‌কী । कपिकच्छौ । আলাকুশী । रा नि व ३ । छिक्किण्याम् । হেঁচেতা । वै निघ ।

तीक्ष्णाग्नि । पुं । जाठराग्न्यन्यतमे च्यग्नौ । পাচক অগ্নিবিশেষ । "मात्रातिमात्राप्यशिता तीक्ष्णाग्ने पच्यते सुखं । चतएव हि, क्वापि मतमीक्ष्णाग्निरुत्तम ।" भा । See चग्नि ।

तीक्ष्णायसम । क्ली । तीक्ष्णलौहे । তিখা বা

ईष्यार। रा नि व १३। तत्पर्य्याय,—सीसं, सत्रायस, शस्त्र, पिण्ड, पिण्डायस, शठ, कायसं, निशितं, तीव्र, खड्ग, कुण्डित, भय, चित्रायस, चीनज। गुणा—रूक्षोष्णतिक्ततीक्ष्णत्व वातपित्त कफप्रमेहपाण्डुशूलनाशित्व सुक्ष्णलौहादगुणाधिक लघ। रा।

**तुका(गा)क्षीरी।** स्त्री। वंशलोचनायाम्। इति। रा नि व ६। च द य स्य चि सितोपलादि चूर्णे।

**तुगा (ख्या)।** स्त्री। वंशलोचनायाम्। वंश-लोचन। रा नि व ६। च द सि यो स्व मे चि। वा मू १५श।

**तुङ्ग।** पु। पुन्नागवृक्षे। পুন্নাগ গাছ। र मा। च सू ४थ। इङ्गदारकवृक्षे। सु कल्प द्रुम। नारि केलवृक्षे। भा। गण्डके। গণ্ডার। रा नि व १६। पद्मकेसरे। निघ। वि। उच्चे। प्रधाने। उग्रे।

**तुङ्गक।** पु। पुन्नागवृक्षे। श र। इङ्गदारक वृक्षे। पद्मकेसरे। वै निघ। [केशरे।

**तुङ्गकेशर।** पु। पुन्नागवृक्षे। प मु। नाग

**तुङ्गभद्रा।** स्त्री। दक्षिणदेशप्रसिद्धनद्याम्। तज्जलं स्निग्धं निर्मलं स्वादु गुरु कण्डूपित्तजनक सात्म्यं पथ्यकरञ्च। रा नि व १४।

**तुङ्गवृक्ष।** पु। नारिकेलवृक्षे। वै निघ।

**तुङ्गस्कन्धफल।** पु। नारिकेलवृक्षे। भा आसववर्गे।

**तुङ्गा।** स्त्री। वंशलोचनायाम्। रा नि व ६। वै निघ च सा चि इक्षुवङ्गादिचूर्णे। शमीवृक्षे। रा नि व ८। अल्पशमीवृक्षे। च वि ८म।

**तुङ्गारि।** श्वेतखदिरवृक्षे। र।

**तुङ्गाक्षीरी।** स्त्री। वंशलोचनायां। वै निघ।

**तुङ्गिनी।** स्त्री। महाशतावर्य्यां। रा नि व ४।

**तुङ्गी।** स्त्री। कर्कोटयां। কাঁকড়া। वै निघ। वनतुलस्यां। हरिद्रायाम्। मे। बर्बरी वृक्षे। शब्दर।

**तुङ्गीनस।** पु। मांसनाशककीटविशेषे। सु कल्प द्रुम।

**तुङ्गीपति।** पु। चन्द्रे। वि।

**तुङ्गीश।** पु। सूर्य्ये। शब्दर।

**तुच्छम्।** क्ली। पुलाकके, तुषे। तूषि। उणा।

**तुच्छद्रुः।** पु। एरण्डवृक्ष। श च।

**तुच्छधान्यकम्।** क्ली। नीवारधान्ये। উড়ি ধান। पुलाके। আগড়া। र मा।

**तुच्छा।** स्त्री। नीलीवृक्षे। तुत्थके। भा।

**तुटुमः।** पु। मूषके। त्रिका।

**तुडी।** स्त्री। आढक्यां। অড়হর। र मा।

**तुणः (णि) क.।** पु। नन्दिवृक्षे। তুণ গাছ। च टी स्रा।

**तुण्डम्।** क्ली। मुखे। रा नि व १८।

**तुण्डकी।** स्त्री। करञ्जवल्ल्यां। वै निघ।

**तुण्ड(ण्डि)केरि. (रिका) (री)।** स्त्री, पु। कार्पास्याम्। কাপাস গাছ। बिम्बिकायां। তেলাকুচা। च टी स्रा। रा नि व ४। वन कार्पासीफले। (क, का) तन्नामकतालुरोगविशेषे, मिश्रीगलरोगभेदे। लक्षणम्—"शोथ स्थूलस्तो दद्दाहप्रपाकी श्लेष्मासृग्भ्यां कीर्तिता तुण्डिकेरी।" भा। सु। "हनुसन्ध्याश्रित कण्ठे कार्पासीफलसन्निभ। पिच्छिलो मन्दरुक् शोफ कठिनस्तुण्डिकेरिक॥" दा उ २१श। वायस कीटविशेषे। तद्दष्ट वातजन्यरोगा भवन्ति। सु कल्प द्रुम।

**तुण्डाहतदष्टकम्।** क्ली। अदष्टाक्षतवने। ছোবলান। "यत्र लालापरिक्लेदमात्र गात्रे प्रदृश्यते। न तु दंष्ट्राकृतो दंश तत्तुण्डाहतमादिशेत्॥" वा उ ३६श।

**तुण्डि (ण्डी)।** पु, स्त्री। मुखे। पक्षिचञ्च्वाम्। পাখীর ঠোঁট। उणा। स्त्री। शिशोर्नाभिगण्ड रोगे। গোঁড। लक्षणं यथा—"वातेनाध्मापिता नाभि सरुजा तुण्डिरुच्यते।" भा। सु शा १० श। नाभौ। श र। अरण्यबिम्बिकायाम्। रा नि व २३। देवधान्ये। वै निघ। (ण्डी) काकादनी वृक्षे। र।

**तुण्डिका।** स्त्री। पीलुपर्ण्याम्। रा नि व २३। बिम्बिकायाम्। তেলাকুচা। नाभौ। श र। कार्पास्याम्। काकजङ्घायाम्। कुन्दुरुलतायाम्। कुन्दुरकी। वै निघ।

**तुण्डिकेरि(री)फला।** स्त्री। कुन्दुरुलतायाम्, मधुरबिम्ब्याम्। कुन्दुरकी। वै निघ।

**तुण्डिकेरफला ।** स्त्री । नानागगलरोगविशेषे । वै निघ ।

**तुण्डिकेशी ।** स्त्री । बिम्बिकायां । अटी ।

**तुण्डिभ' (ल) ।** त्रि । पुष्टे । वृहन्नाभियुक्ते । अम ।

**तुत्थ(क)म् ।** क्ली । Sulphate of copper. ताम्रस्योपधातौ खनामख्यातपदार्थे । तुँतिया । रमा । तुत्थ द्विविध मयूर खर्परीतुत्थञ्च । तत् पर्य्याय,—नीलाञ्जन, हरिताश्म, तुत्थक, मयूर ग्रीवक, ताम्रगर्भ, अमृतोद्भव, मयूरतुत्थ, शिखि कण्ठ, नील (रा), तुत्थाञ्जन शिखिग्रीव, वितु न्नक, मयूरक (अ), मृतक, मृषातुत्थ, मृतामद्द (श), हेमसार । रत्नि । गुणा —"तुत्थं कटु कषायोष्ण श्वित्रनेत्रामयापहं । विषदोषेषु सर्व्वेषु प्रशस्तं शान्तिकारकं । खर्परी कटुका तिक्ता चक्षुष्या च रसायनी । लम्दोषशमनी रुच्या दीप्या पुष्टिविवर्द्धनी ॥" रा नि व १३ । 'तुत्थं ताम्रोप धातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्मात् वक्ष्यमाणगुणञ्च तत् ॥" भा पू १भ । क्षार निर्म्मल लघु भेदक क्रमि कण्डू कुष्ठ कफ पित्तघ्नम् । राज । "गन्धकेन पचेत्तुल्यं तुत्थार्द्धं नार्द्दयामक । वान्तिभ्रान्ती यदा न स्त तदा शुद्धि विनिर्द्दिशेत् ॥" इति शुद्धि । रा को । अपरञ्च— "शिग्रुया मर्द्दयेत्तुल्यं मार्ज्जारकपोतयो । दशांश टङ्कणं दत्त्वा पचेल्लघुपुटे तत । पुटं दध्ना पुटं क्षौद्रैः देयं तुत्थविशुद्धये ॥" भा । क्रमिरसाञ्जने । चषा ।

**तुत्थखर्परिका (री) ।** स्त्री । खर्परिकायां । खापरा । वै निघ ।

**तुत्थनी ।** स्त्री । एलायां । शिवलिङ्गिन्यां । वै निघ ।

**तुत्था ।** स्त्री । नीलीवृक्षे, महानील्यां । रा नि व ४ । क्षुद्रैलायां । अम ।

**तुत्थाञ्जनम् ।** क्ली । तुत्थे । अम ।

**तुनिकः ।** पुं । तुनीवृक्षे ।

**तुन्तुभ. ।** पु । सर्षपवृक्षे । भा पू १भ धान्यव ।

**तुन्दम् ।** क्ली । उदरे । रा नि व १८ ।

**तुन्द' ।** पु । स्थविरे । रा नि व २० । नाभौ । विका ।

**तुन्दकूपिका (पी) ।** स्त्री । नाभ्याम् । हे च । त्रिका ।

**तुन्दपरिमार्जः (मृज) ।** त्रि । अलसे । अटीर ।

**तुन्दि ।** क्ली । उदरे । हे च । स्त्री । नाभौ । त्रिका ।

**तुन्दिकः ।** पु । पृथूदरमानुषे । स्त्री । नाभौ । शर ।

**तुन्दिकरः ।** पु । नाभौ । त्रिका ।

**तुन्दिका ।** स्त्री । नाभौ । शब्दर ।

**तुन्दिभ. (ल') ।** त्रि । स्थूलोदरे । भुँड़ो । शर ।

**तुन्दिलफला ।** स्त्री । त्रपुषीलतायाम् । रा नि व ७ ।

**तुन्दी ।** स्त्री । नाभौ । शर ।

**तुन' (कः) ।** पु । (Cedrela Toona) वृक्षविशेषे, तूणीवृक्षे । तुन् गाछ । हि महा निम, तुन् । उन् महानिम्बु । पुं, द्राविड़ी । अम । त्रि । पीड़िते ।

**तुन्नकारिका ।** स्त्री । भूम्यामलक्याम् । वै निघ ।

**तुन्नसेवनी ।** स्त्री । शिर कटीकपालसन्धिविशेषु । सु शा ५ष ।

**तुभ. ।** पु । बर्करे । বোকা ছাগল । वै निघ ।

**तुमुल. ।** पु । बिभीतकवृक्षे । मे ।

**तुम्ब' (का.) ।** पु । अलाब्वाम् । লাউ । पशु । शर ।

**तुम्बकम् ।** क्ली । धन्याके । धनियाँ । कन्दर्पसार तैले ।

**तुम्बरुः ।** पु । तुम्बुरी । নেপালি ধনে' । वै निघ ।

**तुम्बा ।** स्त्री । अलाब्वाम् । पशु । तिक्त तुम्ब्याम् । वै निघ ।

**तुम्बि' ।** स्त्री । तिक्ततुम्ब्याम् । अलाब्वाम् । शर ।

**तुम्बिका ।** स्त्री । कटुतुम्ब्याम् । रा नि व ३ ।

**तुम्बिनी ।** स्त्री । कटुतुम्ब्याम् । रा नि व ३ ।

**तुम्बी** । स्त्री । अलाब्वाम् । प मु । कटुतुम्ब्यां । তিৎলাউ । भा । पु (इम्) । सरलद्रवे । रा नि व १२ । बिम्बिकाफले । कुलिकद्रवे ।

**तुम्बीतैलम्** । क्ली । गलगण्डाधिकारे तैलम् । कटुतैल ४ श पुराण तिक्तालाबूरस १६ श । कल्कार्थे—विड़ङ्ग यवक्षार सैन्धव वचा रास्ना चित्रकमूल त्रिकटु देवदारु एषां प्रति ८ तो । भैष । चद ।

**तुम्बीपुष्पम्** । क्ली । अलाबुपुष्पे । ललाम्बुली । हारा ।

**तुम्बुक**. । पुं, क्ली । अलाब्वाम् । লাউ । शब्दचन्द्र ।

**तुम्बुर (रो)** । पु, स्त्री । तुम्बुरुद्रवे । र मा । आर्द्रधान्यके । त्रिका । कुक्कुरस्त्रियां । मे ।

**तुम्बुरुः** । पु, क्ली । (Xanthoxylon alatum Syn Z hostile) स्वनामख्यातफल वृक्षविशेषे । তেজবলের গাছ, নেপালি ধ'নে, তাম্বুল ফল । हि तेजबल, तुम्रु । म तम्बु । क तुम्बुरु । तत्पर्याय,—शखघ्न (र), सौरभ, सौरभ, सौर, वनज, सानुज, द्विज, अन्धक, तीक्ष्णकल्क, तीक्ष्णफल, तीक्ष्णपत्र, महामुनि, स्फुटल, सुगन्धि । तत्फल मरिचवत् । च सू ३ अ । एतदभावे धान्यक ग्राह्यम् । गुणा —मधुर तिक्त कटूष्ण वात कफघ्न शूल गुल्मोदराध्मान क्रिमिघ्न अग्निदीपनम् । रा नि व ११ । "तुम्बुरु प्रथित तिक्त कटु पाकेऽपि तत्कटु । रूक्षोष्ण दीपन तीक्ष्ण रुच्य लघु विदाहि च । वातश्लेष्मविषकर्णरोग शिरोरुग्गुरुताक्लमीन् । कुष्ठ शूलारुचि श्वासप्लीह क्रिमीन् नाशयेत् ॥" भा ।

**तुर(ग,ङ्ग)गन्धा** । स्त्री । अश्वगन्धायां । प मु ।

**तुरग(ङ्ग)द्विप(द्विपि)णी** । स्त्री । महिष्यां । रा नि व १९ । वै निघ ।

**तुरग(ङ्ग)प्रिय** । पु । यवे । रा नि व १६ ।

**तुरगशिफा** । स्त्री । अश्वगन्धामूले । म द वा व्या चि ।

**तुरगाह्वा** । स्त्री । अश्वगन्धायाम् । मद व १ । घोण्टायां । অশ্বগুল । रा नि व ८ ।

**तुरगी (इन्)** । त्रि । अश्वारोहे । हेम । स्त्री । अश्वगन्धायां । घोण्टायां । रा नि व ४।८ । अश्वा ।

**तुरङ्ग (मः)** । पु । घोटके । अश्व । चित्ते । श र । क्ली । गन्धके । र सा स । सैन्धवे । अ ।

**तुरङ्गक** । पु । इस्तिघोषायां । र मा ।

**तुरङ्गरिपु (ङ्गारि.)** । प । करवीरद्रुवे । र मा । वै निघ २भ विषमज्वर चि । महिषे ।

**तुरङ्गा (ङ्गा) (ङ्गी)** । स्त्री । अश्वगन्धायाम् । वै निघ । मद व १ । प मु । घोण्टायाम् । ঘোড়াবদর । रा नि व ८ ।

**तुरङ्गारि** । पु । करवीरद्रुवे । र ।

**तुरङ्गिका** । स्त्री । देवदालीलतायां । দেবতাড়া । रा नि व ३ । See अगरो ।

**तुरङ्गी** । स्त्री । अश्वगन्धायाम् । शब्दर । घोण्टिकाद्रुवे । रा ।

**तुरुष्क** । पु । सिह्लके । শিলারস । प मु । सु सू ३८ अ । वा टी हेमा । अरुष्कस्तु क्रमिम निर्यासविशेषमाह । वै निघ शतावरीनारायणतैले । च द वा व्या चि १८म शतिकमहाराजप्रसारणीतैले । तद्देशीयाश्वे । म द ६ अ । वष्टापाटलद्रवे । ঘণ্টাপারুল গাছ" শ্রীবাসে । তার্পিন তেলের গাছ । माधवद्रवे । त्रिका ।

**तुलम्** । क्ली । शल्लदारुनामद्रुभेदे । अ ।

**तुलसी** । स्त्री । (Oci(y,mum sanctum ) Holy basil स्वनामख्यातक्षुद्रक्षुपे । তুলসী গাছ । हि बरण्डा, तुलसी । म तुलसीचेझाड । ते कृष्ण, गगेरचेट्टु इयुलसी, तुलसीचेट्टु । ता तुलसी । दा तुलसी । बम् तुलस । तत्पर्याय, —सुभगा, तीव्रा, पावनी, विष्णुवल्लभा, सुरेज्या, सुरसा, कायस्था, सुरदुन्दुभि, सुरभि, बहुपत्री, मञ्जरी, हरिप्रिया, अपेतराक्षसी, श्यामा, गौरी, त्रिदशमञ्जरी, भूतघ्नी, भूतपत्री (रा) पर्णास, वृन्दा, कठिञ्जर, कुठेरक (शब्दर), वैष्णवी, पुण्या, पवित्रा, माधवी अमृता, पत्रपुष्पा, सुगन्धा, गन्धहारिणी, सुरवल्ली, प्रेतराक्षसी, सुवहा, ग्राम्या, सुलभा, बहुमञ्जरी, देवदुन्दुभि (भा) । अन्या—(O gratissimum ) রামতুলসী । हि रामतुलसी । ते निम्मतुलसी । ता एलुमिच्चम् तीलसी । दा रामतुलसी । अपरा—(Ocimum Basilicum) See विश्वतुलसी । सुदपव तुलसी गन्धतुलसी कृष्णतुलसी बिल( व )गन्धतुलसी श्वेततुलसी वर्वरीतुलस्य इति षड्भेदा तुलसी ।

दीपन हृद्य हृत्पाण्डु पार्श्वरोगनुत् ग्रहण्यर्शो विकारघ्न भेदि सौवीरकं तथा॥" सुश्रु ।

**तुषाम्बुवटम्** । क्ली । तुषाम्बुपक्वान्ने । वै निघ ।

**तुषाम्भः** । क्ली । तुषाम्बुनि । भैषज्यरत्नावलि । "अम्लतुषाम्भसा ।"

**तुषार** । पु । कर्पूरे । चीनकर्पूरे । रा नि व १२ । जलकणायां । मे । "यदि नद्या समुद्रान्ते वह्निरापस्तदुद्भवा । धूमावयवनिर्मुक्ता तुषारा ख्यातास्तु ता स्मृता ॥" भा । चि । शीतले । हिमे । मे ।

**तुषारकाल** । पु । शरत्काले । वै निघ ।

**तुषारगौर** । पु । कर्पूरे । भीमसेनीकर्पूरे । चीनकर्पूरे । वै निघ ।

**तुषाराम्बु** । क्ली । नीहारजले ।

**तुषोत्थम्** । क्ली । तुषोदके । सौवीरकाञ्जिके । रा नि व १५ ।

**तुषोदकम्** । क्ली । सतुषयवकाञ्जिके । हारा । सौवीरकाञ्जिके । रा नि व १५ । च सू २७ । तल्लक्षणं—"अष्टान् माषतुषान् विद्वान् यवान्तु चूर्णसंयुतान् । आसुतानम्भसा तदज्ञात स्त्र तुषोदकम् ॥ च । "तुषोदकं यवैरामैः सतुषैः शकलीकृतैः ।" गुणा —"तुषाम्बु दीपन हृद्य पाण्डुकृमिगदापहम् । तीक्ष्णोष्ण पाचन पित्तरक्तकृत् वस्तिशूलनुत् ॥" भा । "तुषोदकं वातपित्ताइरन्तु प्रभेदकं रक्तपित्ताइरञ्च । विपाचक स्याज्जरघ्न कृमिघ्नम् अजीर्णहन्तृ कटुक विपाके ।" अत्रि ११ अ । "तुषाम्बु दीपन हृद्य हृत्पाण्डुपार्श्वरोगनुत् । ग्रहण्यर्शोविकारघ्न भेदि सौवीरकं तथा ॥' सु ।

**तुष्टि** । स्त्री । ऋद्धौषधि । वै निघ ।

**तुस** । पुं । तुषे । भटोर ।

**तुस्तम्** । क्ली । रजसि । धूला । के ।

**तुहिन** । पु । कर्पूरे । क्ली । हिमे । अम । स्त्री । शुक्लमाषायाम् । शोणी । वै निघ ।

**तुहिनांशु** । पु । कर्पूरे । रा नि व १२ ।

**तुहिनांशुतैलम्** । क्ली । कर्पूरतैले । रा नि व १५ ।

**तूण** । पु । तूणीकवृक्षे । तून गाछ ।

**तूणि(णी)क** । पु । (Cedrela Toona) कोङ्कणे नन्दीवृक्ष इति ख्याते वृक्षे । तून गाछ । हि तुणि, महानिम् । उत् महानिम्ब् । प दवी । तत्पर्याय,—तूणीक, तूणी, पीतक, कच्छप, नन्दी, कुठेरक, कान्त, तुन्नीक, आपीन, कच्छक, कान्तलक, नन्दीवृक्ष, नन्दक, तूणीयक । गुणा —कटु तिक्त पीत रक्तपित्त दाहघ्न शिरोवेदनाघ्न श्वेतकुष्ठघ्न सुगन्धि पुष्टि कर वीर्य्यकरञ्च । रा नि व १२ ।

**तूणी** (इन्) । पु । नन्दीवृक्षे । तून गाछ । रा नि व १२ । 'तूणी रक्तं कटु पाके कषायी मधुरो लघु । तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास पित्तजित् ॥" भा । नीलीवृक्षे । वै निघ । स्त्री । वातव्याधिविशेषे । लक्षण यथा—' अधो या वेदना याति वर्चोमूत्राशयोत्थिता । भिन्दतीव गुदोपस्थ सा तूणीत्युपदिश्यते ॥" सु नि १अ ।

**तूत (द)** । पु, क्ली । तूलकाष्ठे । गुणा —"तूत पक्व गुरु स्वादु हिम पित्तानिलापहम् । तदेवाम गुरु सरमम्लोष्णं रक्तपित्तकृत् ॥' भा आमव । ब्रह्मवृक्षे । रा नि व ८ ।

**तूतकम्** । क्ली । तुत्थे । श च ।

**तूरी** । स्त्री । शकधुस्तूरके । भा ।

**तूर्णक** । पु । शालिधान्यविशेषे । काश्मीरे आजव इति प्रसिद्धे । वा सू ६अ ।

**तूर्णि** । स्त्री । त्वरायां । छया । मनसि । वै [ निघ ।

**तूल** । प, क्ली । (Morus Indica or Morus Nigra) स्वनामख्यातकाष्ठविशेषे । तूँत, पलाश पिपुल, आवमूय इति कश्चित् । हि तूतरी, साहुड । म पारिसपिपलु, ब्रह्मरलि । ते कम्बलिचेट्टु । ता मधकड्डइचेड्डि । तत्पर्याय, —तूद, ब्रह्मकाष्ठ, ब्राह्मणेष्ट, पूषक, ब्रह्मदारु, सुपुष्प, सुरुप, नीलवन्तर्ष, क्रमुक, विप्रकाष्ठ, मन्सार (रा), पूष (भा) । गुणा —मधुराम्ल वातपित्तघ्न सर दाहघ्न कषाय हृद्य कफघ्नञ्च । रा नि व ९ । मधुराम्ल हृद्य दाहघ्न कषाय कफघ्न गुरु सारकम् अम्लम् उष्ण रक्तपित्त करञ्च । भा । कार्पासे । श्वेतधुस्तूरके । गगनतले । अम ।

**तूलकम्** । क्ली । कार्पासे । हेच ।

**तूलग्रन्थिसमा** । स्त्री । कर्दिनामकौषधौ । वै निघ ।

तूलनालिका (ली)। स्त्री। पिञ्जिकायाम्। পাঁইজ। বিকা। [ টীম।

तूलपिचुः। पु। कार्पासे, तूले। তুলা। অ

तूलफल। पु। अर्कवृक्षे। আকন্দ গাছ। रा नि व १०।

तूल(लि)फला। स्त्री। शाल्मलीवृक्षे। र मा।

तूलवती (शय्या)। स्त्री। तूलशय्यायाम्। তোষক। भा।

तूलवृक्षः। पु। शाल्मलीवृक्षे। रा नि व ७।

तूलशर्करा। स्त्री। कार्पासबीजे। श मा।

तूला (ली)। स्त्री। रक्तकार्पासाम्। रा नि व ४। नीलीवृक्षे। भा। वर्त्याम्। श र।

तूलि (लि(ली)का)। स्त्री। नील्यां। रक्त कार्पासे। वै निघ। चित्रलेखन्यां। তুলি। अम। वीरणादिशलाकायां। शय्योपकरणे। তোষক। मे। वर्त्तौ। श र।

तूल(लि)नी (फला)। स्त्री। शाल्मलीवृक्षे। শিমুল গাছ। प सु। र मा। भा। लक्षणा कन्दे। रा नि व ७।

तूवरः। पु। See तुवर। [ श र।

तूस्तम्। क्ली। धूलौ। ধুলো। मे। मूर्ध्नि।

तृक्षम्। क्ली। जातीफले। श च।

तृट्। स्त्री। तृष्णायां। इच्छायां। मे।

तृणम्। क्ली। कत्तृणे। गन्धतृण। रा नि व ८। खटे। नडादौ तृणवर्ग। "त्रिधा वत्र कुश काश त्रिधा, नल। गुन्द्री मुञ्जी दर्भमधीचपकादि गवक्षुणम्॥" अर्क।

तृणकतैलम्। क्ली। कुष्ठाधिकारे तैलम्। पाठ—"मञ्जिष्ठारक्तनिशा चक्रमर्दारग्वधपल्लवैः। तृणकस्वरसे सिद्ध तैल कुष्ठहर कटु॥" कटुतैल ४श पीपवासस्वरस ४ श जल १६ श। कल्कार्थ—मञ्जिष्ठा कुष्ठ (কুড়) हरिद्रा चक्रमर्दपत्र (চাকন্দার পাতা) सोनालुपत्र (সোন্দালপাতা) एषां मिलिला शराव (১ সের)। रस र।

तृणकुङ्कुमम्। क्ली। काश्मीरदेशे स्वनाम्ना प्रसिद्धे सुगन्धद्रव्य। कुङ्कुमचास् इति भाषा। म तृणकेसर। गुणा—कटूष्ण वातकफशोथघ्न कण्डूति पामाकुष्ठामदोषघ्नं दीप्तिकरञ्च। रा नि व १२।

तृणकूटी। स्त्री। तृणाच्छादितगृहे। त्रि। तत्पर्याय—तृणौक। ह।

तृणकूर्म्मः। पु। श्वेतालाबू। শ্বেত লাউ। वै निघ। श मा। [ निघ।

तृणकेतकी। स्त्री। क्षुद्रकेतकविशेषे। वै

तृणकेतुः (कः)। पु। वंशे। বাঁশ। रा नि व ७।

तृणकेसरम्। क्ली। तृणकुङ्कुमे। रा नि व १२।

तृणगन्धा। स्त्री। क्षुद्रगोरक्षलतायां। वै निघ।

तृणगोधा। स्त्री। सरटे। গিরগিটি। क्षक लासे। मे। तृणजलौकायाम्। शब्दकल्प।

तृणगोधूमः। पु। स्वनामख्यातगोधूमे। वासि गम। प सु।

तृणगौरम्। क्ली। तृणकुङ्कुमे। रा नि व १२।

तृणग्रन्थिः। पु। स्वर्णजीवन्त्यां। रा नि व ३।

तृणग्राही (हिन्)। पुं, क्ली। नीलहीरके। प सु। नीलमणौ। কাচুরমালা। रा नि व १२। तत्पर्याय,—शूकापट, तृणमणि (द्रा)।

तृणचरः। पु। गोमेदमणौ। वै निघ।

तृणजलौका। तृणचरजलौकाविशेषे। চীনে জোঁক।

तृणद्रुमः। पु। तालवृक्षे। केतकीवृक्षे। पूग वृक्षे। खर्ज्जूरीवृक्षे। ताड़ीद्रुमे। তেড়েৎ গাছ। नारिकेलवृक्षे। हिन्तालवृक्षे। হেঁতাল গাছ। एषां मज्जनिर्यासा लघव शीतला बल्या मोहना हृद्या तृणातापहराश्च। रा नि व ९।

तृणधान्यम्। क्ली। तृणोद्भवश्यामाकादौ। শ্যামা ধান প্রভৃতি। गुणा—"श्यामाक शोषणो रूक्ष वातल श्लेष्मपित्तहा। जडिका कोद्रवश्चैव हस्तिश्यामाकचीनकौ। पीनसश्वास काशोद्भवाश्मकतृषगदान् जयेत्। कङ्गुर्म्मायापि जानीयात् एतान् श्यामाकवद्गुणे। जडिका तत्र कथिता बलास्य विवर्द्धिनी। कोद्रवश्च परं ग्राही वातल कफनाशन॥' राज ३प। See कुधान्यम्।

तृणधुक्। पु। वाडवाग्नौ। त्रि।

तृणध्वजः। पु। वंशजायां। উলু। रा नि व ८। वंशे। अम।

यत् पेष्य वर्त्तितम्। दीयते गन्धद्रव्यार्थं पत्रकल्कं तदुच्यते ॥" चद वा ख्या वि मद्यासुगन्धितके।

**पत्रकीट**। पु। शालिधान्यके।

**पत्रगुप्तः**। पुं। वृक्षविशेषभेदे। তেকাঁটাসিজ্। अ च।

**पत्रघ(ध)ना**। स्त्री। सातलायाम्, सेहुण्डे। মনসা গাছ। रा नि व ८।

**पत्रजासव**। पु। पटोलतालपत्रीत्यासवे। च सू २५ च।

**पत्रतण्डुला (ली)**। स्त्री। यवतिक्तायाम्। रा नि व ७।

**पत्रतरुः**। पु। विट्खदिरवृक्षे। रा नि व ८।

**पत्रतालकम्**। क्ली। वंशपत्रहरिताले। वै निघ।

**पत्रदारकः**। पु। क्रकचे। करात। त्रिका।

**पत्रद्रुम**। पु। ताड़ीवृक्षे।

**पत्रनाडिका**। स्त्री। ताम्बूलीशिरायाम्, पत्रशिरायाम्। जटा।

**पत्रनामकम्**। पु। तेजपत्रे। वै निघ।

**पत्रपरशु**। पु। अस्त्रविशेषे। ছেনী।

**पत्रपालः**। पु। वृहच्छुरिकायाम्। ह च।

**पत्रपाली**। स्त्री। अस्त्रविशेषे। কাঁচি। हला।

**पत्रपिशाचिका**। स्त्री। वारिमायां। টোকা, পেকে। त्रिका। हारा।

**पत्रपुष्पः**। पु। Ocymum pilosum) रक्ततुलसीवृक्षे। अ च।

**पत्रपुष्पकः**। पु। भूर्जवृक्षे। अ मा।

**पत्रपुष्पा**। स्त्री। Ocymum Sanetum) तुलसीवृक्षविशेषे। अ मा। क्षुद्रपत्रतुलस्यां। र मा।

**पत्रभद्रा**। स्त्री। वृहज्जीवन्त्याम्।

**पत्रमाल**। पु। वेतसवृक्षे वै निघ।

**पत्रयौवनम्**। क्ली। नवाङ्कुरे। जटा।

**पत्ररथ**। पुं। पक्षिणि। अम।

**पत्रलम्**। क्ली। पललदुग्धे। वै निघ। द्रव्ये। पातला दई। ह च।

**पत्रवर्ण**। पु। सप्तपर्णवृक्षे। रा नि व १२।

**पत्रवल्ली**। स्त्री। पर्णलतायाम्। हे च।

रुद्रजटायाम्। पलाशीलतायाम्। रा नि व ३।

**पत्रविषम्**। क्ली। विषपत्रिकादौ। तानि च विषपत्रिकालम्बावरदारुककरम्भमहाकरम्भाणीति पञ्च। गुणा,— "जृम्भाङ्गोद्वेष्टनश्वासा ज्ञेया पत्रविषेण तु।" सु कल्प २ अ। जृम्भा वेपन श्वास कृच्छ्रा पत्रविषैर्भवेत्।" भा।

**पत्रवृश्चिक**। पु। तन्नामकाग्निप्रकृतिककीटे। सु कल्प ८ अ। See कीट।

**पत्रशङ्क**। पु। सप्तपर्णवृक्षे। ছাতিম।

**पत्रशाकः**। पु,क्ली। भक्ष्यशाकवृक्षमात्रे। तच्च षड्विधम्। "पत्र पुष्प फल नाल कन्द संस्वेदज तथा। शाक षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्॥" राज। पत्रशाकगणो यथा—काकमाचीकासमर्द पुनर्नवा पूतिका पटोलपत्र मेघनाद शालिञ्च द्विविध मौचिकापालङ्क्यनिष्पावकमिति। "द्विर्मूलक द्वि पीतकौ चिरमण्डूकपर्णीयक। द्विधा पालङ्कि द्वेधा पटया कालशाककम्। काकौ लोणिका चौली चुच्चुशङ्खेरिचुक्रिका। सुनिषण्णकगोजिह्वा द्रोणपुष्पोपटोलकम्। शतपुष्पा नालिका च कुम्भर लोचाकण्टक। धान्यक द्विधकर्णी जीवन्ती काकमाचिका। पर्पट कासमर्द्द्य द्विधा वास्तुगिरीतक। द्विधा कोष्ठ पत्रशाकगणस्त्वयम्॥" अर्के। [हारा।

**पत्रशिरा**। स्त्री। पर्णमाषा। পাণের শিরা।

**पत्रशृङ्गी**। स्त्री। मूषिककर्णिकायाम्। ইন্দুর কাণী। वै निघ। [रा नि व ३।

**पत्रश्रेणी**। स्त्री। मूषिकपर्ण्याम्। द्रवन्त्याम्।

**पत्रश्रेष्ठ**। पुं। बिल्ववृक्षे। रा नि व ११।

**पत्रसुन्दर**। पु। चीपसुन्दरके। গীমাশাক।

**पत्रसूचि**। पुं। कण्टके। त्रिका।

**पत्रहिमम्**। क्ली। हिमे। दुर्दिने। त्रिका।

**पत्राख्यम्**। क्ली। तेजपत्रे। अ च। तालीशपत्रे। रा नि व ६।

**पत्राङ्गम्**। क्ली। Soymida febrifuga or Caesalpinia Sappan Syn Swietenia febrifuga) Rohan tree रूनाम ख्यातमहाविषचन्दमाख्यतरुवन्द्मे। पतङ्ग। रक्त, द्रोहन्। हिं बम पतङ्। मं पतंगसु। गुणा—कटु-रक्ताम्ल शीत वात पित्त ज्वरोन्माद

विस्फोटकघ्नश्च। राजनि०व०१२। अस्य त्वक्क्वाथ उदरामये रक्तातिसारे च परिपाने हित। रक्तचन्दने। अम। भूर्जपत्रे। पद्मकाष्ठे। मे। See पत्तङ्गम।

**पत्राढ्यम्।** क्ली। व्रणाढ्यतृणे। गन्धतृणविशेष। पत्रतृणे। राजनि०व०८। पत्राङ्गचन्दन। राजनि०व०१२। पिप्पलीमूले। राजनि०व०६। वनपर्वदलिताले। तालीशपत्रे। वै०निघ।

**पत्राम्ला।** स्त्री। चुक्रिकायाम्। चूका पालङ्। भा। See चुक्रा।

**पत्रालु।** पु। इक्षुदर्भतृणे। रा०नि०व०८। कासालौ। राजनि०व०७।

**पत्रावलि (ली)।** स्त्री। गैरिके। अच। धूम्रशैलतायाम्। वै०निघ।

**पत्रिकम्।** क्ली। तेजपत्रे।

**पत्रिका (त्त्रा)।** स्त्री। जातीपत्र्याम्। अश्विरा। वै०निघ २भ कृमि चि सुवर्चिकादिचूर्णे।

**पत्रिकाख्य।** पु। कर्पूरभेदे। राजनि०व०१२।

**पत्रिकापत्रम्।** क्ली। तालीशपत्रे। वै०निघ।

**पत्रिणी।** स्त्री। नवाङ्कुरे। पल्लवे। अच।

**पत्री (इन्)।** पु। शालवृक्षे। रत्ना। पक्षिणि। वृक्ष। श्येनपक्षिणि। मे। स्त्री। दमनकक्षुपे। पत्रा। चद महासुगन्धतैल। गङ्गापत्र्यां। राजनि०व०१०। दुरालभायाम्। खदिरवृक्षे। तालवृक्षे। जातीपत्र्याम्। वै०निघ। महातजपत्रे। चद वाव्यापि महाराजप्रसारणीतैले।

**पत्रैला।** स्त्री। एलायाम्। वै०निघ।

**पत्रोपस्कर।** पु। कासमर्दक्षुपे। हारा।

**पत्रोण।** पु। श्योणाकवृक्षे। अम। धौतकौषेये। वै०निघ। चर्मीकवृक्षे। क्ली। धौतकौषेये अम।

**पत्रोल्लास।** पु। पुष्पकलिकायाम्। वै०निघ।

**पथिका।** स्त्री। कृष्णद्राक्षायाम्। राजनि०व० ११।

**पथिद्रुम।** पु। गुप्तखदिरे। राजनि०व०८। खादिरत्वच जटा।

**पथ्यम्।** क्ली। पादाहारे। "पादाहार पथ्यमाहु।" राजनि०व०२०। सैन्धवे। वै०निघ। सामुद्रलवणे। हितभोजने। अच। पु। हरीतकीवृक्षे। रत्ना। तण्डुलीयशाके। वै०निघ।

**पथ्यकरी।** स्त्री। कणमाली। राजनि०व०१६।

**पथ्यका।** स्त्री। मेथिकायाम्। वै०निघ।

**पथ्यकारी (इन्)।** पु। पथिकपार्श्वे। राजनि०व०१६।

**पथ्यभोजनम्।** क्ली। हितभोजने। भा।

**पथ्यशाक।** पु। तण्डुलीयशाके। नटिया शाक। राजनि०व०५।

**पथ्यसुन्दर।** पु। हरीतकीवृक्षे।

**पथ्या।** स्त्री। हरीतक्याम्। भा पू १म। राजनि०व०११। चद विजयचातुर्थके। चिर्भटायाम्। वन्ध्याकर्कोटिकायाम्। मृगादन्याम्। राजनि०व०२३।

**पथ्यापथ्यम्।** क्ली। रोगार्थां हिताहितद्रव्ये।

**पथ्यापथ्यविधि.।** पु। रोगाणां पथ्यापथ्यनिर्णयग्रन्थे। [ वसुनि। मे।

**पदन्।** क्ली। पादे। राजनि०व०१८। वाक्ये।

**पदकम्।** क्ली। निष्कमितस्वर्णे। वै०निघ।

**पदगण्डीर।** पुं। श्लीपदरोगे।

**पदन्यास:।** पुं। गोक्षुरक्षुपे। अच।

**पदरथी (इन्)।** पु। पादुकायाम्। त्रिका।

**पदरोहिणी।** स्त्री। वन्दाके। वान्दरा। वै०निघ। [याम। वै०निघ।

**पदवी।** स्त्री। भिण्डीक्षुपे। शाँटी। नागबला

**पदाक।** पु। सर्प। वै०निघ।

**पदाङ्गी।** स्त्री। रक्तलज्जालुकायाम्। वै०निघ। हंसपाद्याम। राजनि०व०५।

**पदारोही (इन्)।** पु। वटवृक्षे। मद५व।

**पदार्थ।** पु। द्रव्यगतरसवीर्यादौ। स पञ्चविध—"द्रव्यं रसो गुणो वीर्यं विपाक शक्तिरेव च। पदार्था पञ्च तिष्ठन्ति स्व स्व कुर्वन्ति कर्म च॥" भा। "वीर्य्योऽभिहित सूत्रे पदे वा स पदार्थ।" सुश्रु०४५अ।

**पदिका।** स्त्री। रक्तलज्जालुकायाम्। हंसपाद्याम। लज्जालुकायाम्। राजनि०व०५। [२०५।

**पदेन्द्राभ।** पु। विष्किरपक्षिविशेष। चसु।

**पद्मिमम्।** क्ली। पादशीतलतायाम्। न्याक।

**पद्मम्।** पु क्ली। Nelumbium Speciosum Salvadora Indica.) कमल। पद्म। राजनि०व०१०। हि कमल। तैं तम्मिपुव्वु। ता थामरा। तत्पर्याया,—नलिन, अरविन्द,

महोत्पल, सहस्रपत्र, कमल, शतपत्र, कुशेशय, पङ्केरुह, तामरस, सारस, सरसीरुह, बिसप्रसून, वारिज, राजीव, पुष्कर, अम्भोरुह, कवार, शाम्यपत्र, बनशोभन, सरोरुह, अम्बुजन्म, जलरुट्, जलरुह, सरोज, सरोजन्म, सरोरुट्, पङ्केज पद्मज, अम्भोज, अम्बुज, सरसिज, श्रीवार, श्रीवर्षी, इन्दिरालय, जलजात अब्ज, कञ्ज, नल, नालिक, नालीक, वनज, अम्लान, पुटक, अब्ज। गुणा—वीज वान्तिहर। पत्रशय्या शीतला ज्वरे दाहहरं। पुष्प गुदभ्रंशहर। "यत्र तु पद्ममित्युक्ति तत्र प्राय पद्मकेशर ग्राह्यम्।" सि यो पि श्लेष्मज्व चि श्रीकण्ठ। त्रियो सन्निपातज्व अभ्यङ्गे। च द वा पि ज्व चि। See कमलम्। श्वेतकमले। च सू ४ अ। शीपधातौ। रा नि व १३। पुष्करमूले। रा नि व ६। सा नि। वै निघ २ भ ज्व चि गुडूच्यादि। जले। वै निघ। पद्मकाष्ठे। धरणि। वै निघ अ सा चि पद्मादिचूर्णे। भैष कुष्ठ चि कन्दर्पसारतैले। धुस्तूरवृक्षे। पद्मकेसरे। च द गर्भाधिकारे मधुकादि। पु। गुग्गुलुविशेषे। 'पद्मोमाणिक्यसमप्रभ।' दर्वीकरसर्पभेदे। सु कल्प ४ अ।

**पद्मकम्।** क्ली। पद्मकाष्ठे। पद्मकाष्ठे। धरणि। हि पद्माक। तै पद्मगुसदवि। तत्पर्य्याया,—पद्मकाष्ठ, पीत पीतक, मालय, शीतल, हिम, शुभ, केदारज, रक्त पाटलापुष्प सन्निभ। गुणा—पद्मक तुवर तिक्त शीतल वातल लघु। विसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्त हृत्। गर्भसंस्थापन रुच्य वमिव्रणतृषाप्रणुत्॥' भा। शीतल तिक्त रक्तपित्तघ्न मोहदाहज्वरभ्रान्तिकुष्ठ-विस्फोटघ्न। अपिच,—पद्मक पद्मगन्धि स्यात् तथा पद्माह्वय मृत। पद्मक तुवर तिक्त शीतल वातल लघु॥ विसर्पदाहविस्फोट कुष्ठ श्लेष्मास्र पित्तहृत्। गर्भसंस्थापन रुच्य वमिव्रणतृषाप्रणुत्॥ रा नि व १२। तत्प्रशस्त यथा—पद्मक सर्वभद्र कीटदोषविवर्जितम्" भप। कुष्ठे। कूड। रा नि व १२। च सू ३ अ। तन्नामकलूतादिकीट विषघ्नागदे। वा उ ३७अ।

**पद्मकण्टक।** पु। तन्नामकक्षुद्ररोगभेदे। पद्मकांटा रोग। लक्षणम्—"स पद्मकण्टका नीया ये पद्ममिव कण्टकैः। चीयन्ते मोर्द्धमुखैः शरीरं कफवातजै॥' वा उ ३१अ।

**पद्मकन्द।** पुं। कमलकन्दे। पद्मेर गोड़ो वा शालूक। हि कमलकन्द। तत्पर्य्याया,—शालूक, शालुक, पद्ममूल, कटाह्वय, जलालक। गुणा—कटु विष्टम्भी रूक्ष रुच्य कफघ्न कषाय कासपित्तघ्न तृष्णादाहघ्न। रा नि व १०। शालूक शीतल हृद्य पित्तदाहास्रनाशन दुर्जर स्वादु पाकञ्च स्तन्यानिलकफप्रदम्। सग्राहि मधुर रुक्ष भिषग्भिरपि तद्गणम्॥" भा। स्त्री (न्दा)। जलपर्णविशेष। वै निघ।

**पद्मकर्कट' (टी)।** पु, स्त्री। कमलावी। पद्मवीज। वै निघ। रा नि व १०। [ निघ।

**पद्मकर्णिका।** स्त्री। कमलकर्णिकायाम्।

**पद्मकादिगण।** पु। पद्मकपुण्डरीकवृद्धि अश्वगन्धादशजीवनरूपे। गुणा—स्तन्यकरा वातपित्तघ्ना प्रीणनादिगुणयुक्ताश्च। वा सु १४। १५ अ।

**पद्मकाष्ठम्।** क्ली। स्वनामख्यातसुगन्धकाष्ठे। पद्मकाष्ठे। रा नि व १२।

**पद्मकाह्वयम्।** क्ली। पद्मकाष्ठे। च द वा व्या चि एकादशशतीमहाप्रसारणीतैले। "फलिनी लिनियाचौरसपिर्भि पद्मकाह्वयम्।"

**पद्मकिञ्जल्क'।** पु। पद्मकेसरे। वै निघ।

**पद्मकी (इन्)।** पुं। भूर्जवृक्षे। शमा।

**पद्मकीट।** पु। अग्निप्रकृतिकीटविशेषे। सु कल्प ८अ। See कीट।

**पद्मकेश(स)र।** पु, क्ली। पद्मकिञ्जल्के। पद्मरेणु। रा नि व १०। च द वा पि ज्व चि। तिफला पद्मकेशरम्।" सु सू ३८अ प्रियङ्ग्वादि। च सू ४अ। गुणा—मलस्तम्भी शीतल दाहघ्न अस्र स्रावहरञ्च। राज। [भा।

**पद्मगन्धकम् (गन्धि)।** क्ली। पद्मकाष्ठे।

**पद्मचारटी।** स्त्री। स्थलकमलिन्याम्। स्थल पद्म। वै निघ। लक्ष्मीतन्त्रीया। च द विष चि।

**पद्मचारिणी।** स्त्री। भार्यां। वामनहाटी। प ।। शमीवृक्ष। इन्द्रिरायां। लाक्षायां हरिद्रा। म। रा नि व २३। (Hibiscus mutabilis) स्थलपद्मायाम। या लक्ष्मणापर्णे स्वनाम्ना ख्याता। तत्पर्य्याया—अव्यथा अतिचरा पद्मा, चारटी। गुणा—"पद्मा मृणा कटुतिक्ता कषाया कफवात जित्। मूत्रकृच्छ्राश्मशूलघ्नी श्वासकासविषापहा।" भा।

**पद्मतन्तु** । पु । मृणाले । रा नि व १० ।
**पद्मतीर्थम्** । क्ली । पुष्करमूले । वै निघ ।
**पद्मदशन** । पु । सर्ज्जरसे । वै निघ । श्रीवास । लोबान् इति भाषा । श च ।
**पद्मनाडिका** । स्त्री । स्थलपद्मिन्यां । वै निघ ।
**पद्मनालम्** । क्ली । कमलनाले । पद्मेर डाँटा । रा नि व १० । [ १९ ।
**पद्मनेत्र** । पु । जलचरपक्षिभेदे । रा नि व
**पद्मपत्रम्** । क्ली । आमण्ड । रा नि व २३ । पुष्करमूले । रा नि व ६ । पद्मदले । पद्मेर पाता । वै निघ ।
**पद्मपत्रा** । स्त्री । स्थलपद्मिन्याम् । वै निघ । कर्पूर हरिद्रायाम् ।
**पद्मपर्णम्** । क्ली । पद्मपत्रे । वै निघ । पुष्कर मूले । श टी ।
**पद्मपुष्करजम्** । क्ली । पुष्करमूले । रा नि व ६ ।
**पद्मपुष्प** । पु । पारिभद्रकवृक्षे । पिकाङ्गपक्षिणि । वै निघ । ( Webera Corymbosa ) कर्णिकारवृक्षे । वनके फुल । श च ।
**पद्मबन्धु** । पु । भ्रमरे । सूर्य्ये ।
**पद्ममधु** । क्ली । पद्मपुष्पाहृतमाक्षिके । पद्मेर मधु । गुणा,—अरविन्दाहृत शीतो मकरन्दाः सित हृत । विदोषशमन सर्व्वनेत्रामयनिसूदन ॥
**पद्ममुखी** । स्त्री । कण्टकार्य्याम् । वै निघ । दुरालभायाम् । श च ।
**पद्ममूलम्** । क्ली । पद्मकन्दे । शालूक । रा नि व १० । चि क्र क गर्भ चि ।
**पद्मरक्ता** । स्त्री । पद्मरक्तावृक्षे ।
**पद्मरज** । क्ली । पद्मकेसरे । वा सू २ अमिध क्रा द । "पद्मादको योजनवन्धुनन्ता ।"
**पद्मराग** । पुं । रक्तवर्ण माणिक्यभेदे । See माणिक्यम् ।
**पद्मरेणु** । पु । पद्मकेसरे । वै निघ ।
**पद्मलाञ्छन** । पु । सूर्य्य । मे ।
**पद्मवती** । स्त्री । स्थलपद्मिन्याम् । वै नि । कमलिन्यां । पद्मेर झाड़ । रा नि व ५ ।
**पद्मवर्ण** । त्रि । लोहितवर्णे । भा ४भ । "पद्मवर्णो महापद्म ।"
**पद्मवर्ण(क)म्** । क्ली । पद्मकाष्ठे । वै निघ । पुष्करमूले । जटा ।
**पद्मबीजम्** । क्ली । कमलबीजे । पद्मेर बीचि । ि कमलगाट्टा । पद्माच इति महाराष्ट्रकर्णाटयो र्व्याख्यम् । तत्पर्य्याया,—पद्माच गालीद्य, कदली, मेण्डा, क्रौञ्चादनी, क्रौञ्चा, श्यामा, पद्मकर्कटी । गुणा —कटु स्वादु पित्तघ्न छर्दिकर दाहरक्तप्रमन पाचन रुच्यञ्च । रा नि व १० । "पद्मबीजं हिम स्वादु कषाय तिक्तक गुरु । विष्टम्भि वृष्य रुच्यञ्च गर्भसंस्थापकं परम् । कफवातकर बल्य ग्राहि पित्तास्रजित् ॥" भा ।
**पद्मबीजाभम्** । क्ली । मखान्नफले । माखना इति भाषा । भा ।
**पद्मिवृक्ष** । पु । पद्मकाष्ठतरौ । रा नि व २३ । नन्दीवृक्ष । रा नि व १२ ।
**पद्मशायिनी** । स्त्री । जलचरपक्षिभेदे । वै निघ ।
**पद्मा** । स्त्री । पद्मचारिण्याम् । शूलघ्न्यां । रा नि व २३ । च वि द्र । वा सू १५ अ । भार्ग्याम् । बामनहाटी । च ग ४अ । चि ३अ । च द गर्भ स्रावे । भा म ४अ गर्भ चि । सु चि २अ । "समङ्गा रजनी पद्मा । तद्मासकौषधी । या पद्माकारा पद्मगन्धा पद्मवक्त्रा च । 'पद्माकारा पद्मरक्ता पद्मगन्धा । च चि १अ कन्दर्पसारतैल । मञ्जिष्ठा याम् । मृणाले । े निघ । लवङ्गे । श च । मनसादेव्यां । मे । कर्णिकायां । श र । कुसुम्भ पुष्प । रमा ।
**पद्माकर** । पु । तड़ागे । श्रम ।
**पद्माट** । पु । चक्रमर्दवृक्षे । चाकन्दा । श्रम । भैष सु रो चि व खदिरवट्यां । क्ली । तद्बीजे । गङ्गाभल्लातकगुड़े ।
**पद्मान्तरम्** । क्ली । पद्मपत्रे । वै निघ ।
**पद्मालया** । स्त्री । लवङ्गलतायाम् । श्रम ।
**पद्मावती** । स्त्री । स्थलपद्मिन्याम् । जटा । मनसादेव्यां । श र ।
**पद्माह्व(य)म्** । क्ली । पद्मकाष्ठे । भा । वै निघ २भ सप्तम्ब विं हृदयमकुष । च द म रीचि इदराद्रिवट्यां । [ निघ ५ ।
**पद्माह्वया (ह्वा)** । स्त्री । स्थलपद्मिन्यां । रा

**पराक्पुष्पः (ष्पी)**। पु। धूलीकदम्बवृक्षे। रा नि व ९। श्वेतापामार्गे। रा नि व ४।

**परागः**। पु। पद्मकेसरे। कर्पूररजसि। वै निघ। पुष्परजौ। अम। चन्दने। मे।

**परागपुष्प.**। पु। धूलीकदम्बे। वै निघ।

**पराचीन**। त्रि। पराङ्मुखे। वा उ २८अ।

**पराञ्ज.**। पु। तैलनिष्पीडनयन्त्रे। फमे। ग्र र।

**पराप्रिय'**। खलुपवृक्षे। उलू। ग्र च। कासहृण। व निघ।

**परादिगुणा.**। पु। परापरत्वादौ। यथा— "परापरत्वे युक्तिश्च सङ्ख्या संयोग एव च। विभागश्च पृथक्त्वञ्च परिमाणमथापि च। संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः॥" च।

**परानसा**। स्त्री। औषधप्रयोगे, चिकित्सायाम्। ग्र च।

**परान्नम्**। क्ली। पलान्ने। पाकराज।

**परापरम्**। क्ली। परूषकफले। भा।

**पराभिधम्**। क्ली। कुङ्कुमे। वै निघ।

**परामृतम्**। क्ल। वर्षोपले। विका।

**पराह्र.**। पु। कारवेल्लके। विका।

**पराहक.**। पुं। पाषाणे। विका। [निघ।

**परार्द्धम्**। क्ली। चन्दने। कुङ्कुमे। उशीरे। वै

**परावतम्**। क्ली। परूषकफले। रा नि व ११।

**परावरम्**। क्ली। परूषकफले। रा नि व ११।

**परावेदी**। स्त्री। वृहत्याम्। व्याघ्रोड़। कौवालदम्। [तन्त्रकार।

**पराशर**। पु। तन्नामकायुर्व्वेदतन्त्रकारे। See

**पराश्रया**। स्त्री। माधवीलतायाम्। वै निघ। वन्दायाम्। पवगाछा। ग्र च। [सु सू ३५अ।

**परासङ्ग**। प। अवरोधे। शोणितरोधे।

**परिकर्त्तनम्**। क्ली। अधश्छेदे। सु सू ८अ। छेदनवदनुभवे। वा टी चि १अ।

**परिकर्त्तिका**। स्त्री। कर्त्तनवत्पीडायाम्। च चि २अ। वमनविरेचनव्यापद्विशेष। सु चि ३४अ।

**परिकर्म्म**। क्ली। अभ्यङ्गे। परिचर्य्याकरणे। वै निघ। कुङ्कुमादिना कायप्रसाधने। अमभ।

**परिकर्म्मी**। त्रि। मध्यदग्धकर्म्मसु, परिचारकेषु। सु म ५अ।

**परिक्रमसहः**। पु। छागे। विका।

**परिगर्भिक. (भव)**। पु। बालरोगविशेषे। এড়ঁগা লাগা। हि अहोडोति लोके। "मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि। कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः। युज्यते कोष्ठवृद्ध्या च तमाहुः परिगर्भिकम्। रोगं परिभवाख्यञ्च तत्र युञ्ज्याद्दीपनम्॥" भा। [भ।

**परिग्रह.**। पु। स्त्रियाम्। मूले। कन्दे। अम

**परिघ**। पुं। तन्नामकमूढगर्भविशेषे, यत्र गर्भः परिघ इव योनिमुखमावृत्य तिष्ठति। यथा— "योनौ स्थितः स परिघः परिघेन तुल्यः।" सु नि ८अ।

**परिचरः**। पु। भृत्ये, सेवके। रमा।

**परिचरकर्म्म**। क्ली। सेवाकार्य्य।

**परिचर्य्या**। स्त्री। सेवायाम्। अम। ग्र र।

**परिचारक**। पुं। सेवके। अम। सुश्रुत —"स्निग्धो जुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे। वैद्यवाक्यकृदश्रान्तो युज्यते परिचारकः॥" भा।

**परिच्छदः**। पु। परिधानवस्त्रे, आच्छादने। भागवत। परिवारे। हेम।

**परिजातः**। पु। श्वेतजवाकुचे।

**परिणत'**। त्रि। परिपक्वे। अम।

**परिणामः**। पु। परिपाके। विकारे। वै निघ।

**परिणामज(शूल)म्**। क्ली। पक्तिशूले। रा नि व २०।

**परिणाह.**। पु। वर्त्तुलतायाम्। सु सू ७अ। विस्तारे। अम।

**परिताप**। पुं। रोगे। वै निघ। कम्पे। विश्व। उष्णतायाम्। च।

**परितिक्त**। पु। निम्बवृक्षे। वै निघ।

**परिदर**। पु। दन्तमूलगतमुखरोगे। सुश्रुत —"दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्। पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः॥" सु नि १६अ।

**परिधूमायनम्**। क्ली। धूमोद्गारे। ঢোঁয়া ঢেকুর। सु नि ८अ।

**परिपचनम्**। क्ली। तैलपाकनिष्काशने। च सू १५अ।

**परिपाकः**। पुं। परिणामे। भा।
**परिपाकिनी**। स्त्री। त्रिवृतायाम्। श च।
**परिपिष्ट(क)म्**। क्ली। सीसके। रा नि व १३।
**परिपुटनम्**। क्ली। पाककरणे। वै निघ।
**परिपुष्करा**। स्त्री। कर्कटीभेद, गोडुम्बायाम्। वाळगोमुक। श च।
**परिपूतम्**। क्ली। अपतुषधान्ये। मनु। वि। पवित्रीकृते।
**परिपेलम्**। क्ली। कवर्त्तमुस्तके। प मु। वि-ब ८ब।
**परिपेलवम्**। क्ली। कुटन्नटे, जलमुस्तायाम्। কেওট মূতা। वा सू १५श दीप्रादि। "शैलवाल परिपेलवमोचा।" मुस्तायां। च द १२श।
**परिपेलम्**। क्ली। जलजाततृणविशेषे, जल मुस्तायाम्। জলের মূতা, কেওট মূতা। मं जलमडवी। क बलिगड्ड। गुणा—कटूष्ण कफ वातघ्न व्रणघ्न दाहघ्नम् आमशूलघ्न रक्तदोषघ्न। रा नि व ६।
**परिपोटः (क)**। पु। कर्णपालीगतरोगे। কাণের পাতার রোগ। लक्षण—"सौकुमार्या च्चिरोत्सृष्टसहसाभिप्रवर्द्धिते। कर्णशोफो भवेत् पाल्यां सरुज परिपोटवान्।' सु चि २५श। लगभेदे। वा उ १८श।
**परिपोषणम्**। क्ली। हिङ्गुनि। च द १२श।
**परिप्लुता**। स्त्री। योनिरोगविशेषे। लक्षण यथा—"परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम्।" सु। तथा—"पित्तलाया नृसंवासे क्षवथूद्गारधारणात्। पित्तसम्मूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः। शूना स्पर्शाक्षमा सार्त्तिः नील पीतमसृक् स्रवेत्। श्रोणिवङ्क्षणपृष्ठार्त्तिज्वरार्त्तायाः परिप्लुता॥" च। वा उ ३३श। मदिरायाम्। हे च।
**परिभवः**। पु। पारिगर्भिकरोगे। এঁড়েলাগা।
**परिभाव्यम्**। क्ली। कुष्ठौषधे। कूड।
**परिभाषा**। स्त्री। वैद्यकमानादिविषयकपर्य्ये।
**परिमण्डल**। पु। मशकजातिभेदे। सु कल्प ८श। See मशक। वि। सम्यग्वर्त्तुले। भा पूर्वखण्ड। सु सू ७श। [ चमम।
**परिमलः**। पु। सुगन्धे। मैथुने। विमर्दने।
**परिमाणम्**। क्ली। माने। See मानम्।
**परिमार्ज्जनम्**। क्ली। खाद्यभेदे। मधुमस्तके। श च। परिष्कारणे। मधुतैलपात्रे।
**परिमोचः**। पु। मलोत्सर्गे।
**परिम्लानः**। पु। रक्तमिश्रष्ठीभेदे। वै निघ।
**परिम्लायितिमिरः**। पु। पित्तजन्यापर तिमिररोगे। लक्षण—"पित्त कुर्यात्परिम्लायि मूर्च्छितं पित्ततेजसा। पीता दिशस्तु खद्योतान् भास्करश्चापि पश्यति। विकीर्य्यमाणान् खद्योतै र्वृक्षांस्तेजोभिरेव वा॥" मा नि।
**परिलेही**। पु। कर्णपालीरोगे। लक्षणम्—"कफासृक्कृमिसम्भूत सर्षिसर्पान्वितस्तत लिह्यात् सशष्कुलीं पालीं परिलेहीति स स्मृत॥" सु चि २५श।
**परिवर्त्तनम्**। क्ली। पार्श्वपरित्यागे। मा नि।
**परिवर्त्तिका**। स्त्री। शूकरोगे, मेढ्रजक्षुद्ररोगे। मूতে। लक्षणम्। "मर्दनात् पीडनाच्चापि तथैवाप्यभिघातत। मेढ्रचर्म्म यदा वायुर्भजते सर्वतश्चरन्। तदा वातोपसृष्टन्तु तच्चर्म परिवर्त्तते। सवेदन सदाहञ्च पाकञ्च व्रजति क्वचित्। मणेरध स्तात् कोशस्तु ग्रन्थिरूपेण लम्बते।" इत्यादि। सु नि १३श। [ हे च।
**परिवाप (नम्)**। पु, क्ली। मुण्डने। मे।
**परिवृंहितम्**। क्ली। वृद्धौ। वि। परिवर्द्धिते।
**परिवेषक**। पु। परिवेषणकर्त्तरि। तल्लक्षणम् —"स्नातश्चन्दनचर्चित सुवसन स्रग्वी प्रसन्नानन स्पष्टात्मा सुभग प्रसन्नहृदय श्रीकान्तपूजारत। स्वामिस्नेहपर स्वपाकनिपुण प्रौढो वदान्य शुचिर्विप्रो वा परिवेषकस्तु कुलजश्चान्योऽपि वा भूपते॥" पाकराज।
**परिवेषणम्**। क्ली। भोजनार्थं भोजनपात्रे अन्नादिदाने।
**परिव्याध**। पु। (*Pterospermum acerifolium*) द्रुमोत्पले। ওলট কম্বল। प मु। जलवेतसे। रा नि व ९। भा। कर्णिकार द्रुमे। কনকে ফুলের গাছ। रा नि व ८। आरग्वधद्रुमे।
**परिव्राजी**। स्त्री। श्रावणीमहाचूर्णे। मुण्डीर्य्यां। रा नि व ५।

**परिशुष्क(मांस)म्।** क्ली। पक्वमांसभेदे। मांसेर व्यञ्जन विशेष। "मांसं बहुघृते भृष्टं सिक्तंचैवाम्बुना मुहुः। जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते। श च। राज। See मांसम्।

**परिश्रु(स्र)तम्।** क्ली। सुरायाम्। वै निघ।

**परिश्रमसहः।** पु। छागे। छागल।

**परिषत्।** स्त्री। सभायाम्। सा द्विधा ज्ञानवती मूढपरिषच्चेति। पुनस्त्रिधा सुहृत्परिषत्, उदासीनपरिषत्, प्रतिनिविष्टपरिषच्चेति। च वि ८अ।

**परि(री)षेकः।** पु। स्नानादौ। शिरसि धारापातने। मूत्रतैलविधिभेदे। भा। व्रणवेदनोपशमनाय सुखोष्णक्वाथसेचने। सु चि १अ। दा चि १अ।

**परिषेकस्वेदः।** पु। स्वेदविशेषे। यथा—"वातिकोत्तरवातिकानां पुनर्मूलफलपत्रादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वर्षिका प्रनाडीर्वा पूरयित्वा यथार्हंसिद्धं देहमभ्यज्य वस्त्रावच्छन्नं परिषेचयेत्॥" च सू १४अ।

**परि(री)सर्पः (सर्पणम्)।** क्ली। वीसर्परोगभेदे। तन्नामकक्षुद्रकुष्ठभेदे। "शनैः शरीरे पिडकाः स्रवन्त्यः सर्पन्ति यास्तं परिसर्पमाहुः।" सु नि ५अ। पु। दर्वीकरसर्पविशेषे। सु कल्प ४अ।

**परिसर्य्या।** स्त्री। सेवायाम्। वै निघ।

**परिसिद्धिका।** स्त्री। मण्डविशेषे। वै निघ। किट्टिकायाम्। वा उ ३९अ।

**परिस्पन्दः (नम्)।** पु, क्ली। कम्पे। हे च।

**परिस्यन्दः।** पु। चरणे, स्यन्दे। बिन्दुशः चरण। चोयान। अमर।

**परिस्रावः।** पु। वमनविरेचनव्यापद्विशेषे। सु चि ३४अ। मुखस्रावे। नासास्रावे। गुदस्रावे। च सू १५अ।

**परिस्रावी (इन्)।** पु। कफजभगन्दरे। लक्षणं यथा—"कण्डूयनो घनस्रावी कठिनो मन्दवेदनः। श्वेतावभासः कफजः परिस्रावी भगन्दरः॥" मा नि। त्रि। निरन्तरस्रावशील। भा।

**परिस्राव्युदरम्।** क्ली। उदररोगभेदे। लक्षणं यथा—शल्यं यदन्नोपहितं तदन्त्रं भिनत्ति यस्यागतमन्यथा वा। तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः। नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च। एतत् परिस्राव्युदरम्।" सु नि ७अ।

**परिस्रुतः।** त्रि। बिन्दुशः क्षरिते। क्ली। मद्ये। वै निघ।

**परिस्रुतदधि।** क्ली। वस्त्रगालितदधनि। छाँका दई। गुणा—वातघ्नं कफकृत् स्निग्धं रुच्यं पित्तघ्नं। सु सू ४५अ।

**परिस्रुता।** स्त्री। द्राक्षामद्ये। वै निघ। मादकद्रव्ये। ताडी। मे।

**परिस्रुत्।** स्त्री। मद्यसामान्ये। रा नि व १४

**परिहारः।** पु। तस्यैव दोषवचनस्य परिहरणं यथा—"नित्यमात्मनि शरीरस्थे जीवितलिङ्गान्युपलभ्यन्ते। तस्य पुनरपगमान्नोपलभ्यन्ते। तस्मादन्यः शरीरादात्मा नित्यश्चेति।" च वि ८अ।

**परिहार्य्यम्।** क्ली। कुष्ठौषधे। कूड। वै निघ।

**परिक्षेपी (इन्)।** पु। वातपित्तजभगन्दरे। 'वातपित्तात् परिक्षेपी परिक्षिप्य गुदं गतिः। जायते परितस्तत्र प्राकारपरिखेव च॥"

**परीतिः।** स्त्री। पुष्पाञ्जने। वै निघ।

**परीरः।** पुं। कारवेल्ले। क्ली। तत्फले। शब्द।

**परीवर्त्तः।** पु। कच्छपे। वै निघ।

**परीष्टिः।** स्त्री। परिचर्य्यायाम्। मे।

**परु।** पु। अङ्गुलिसन्धौ। रा नि व १८। वंशग्रन्थौ। बाँशेर गाँइटे। अथ निर्गुण। रा नि व ६। परूषकवृक्षे। वै निघ। पर्व्वते। समुद्रे।

**परुद्वार.।** पुं। अश्वे। श मा।

**परु(रू)ष.।** पु। परूषकवृक्षे। रा नि व ११। नलग्रन्थौ। वामनवृक्षे। वै निघ। नीलझिण्ट्याम्। श च। तन्नामकवायव्यकीटे। सु कल्प ८अ। See कीट। स्त्री (षा)। शतपदीभेदे। सु कल्प ८अ। क्ली। परूषकफले। भा। कर्व्वुरवर्णे। शब्द।

**परु(रू)षक.।** पु। (Zylocarpus Granatum or Grewia Asiatica) स्वनामख्यातफलवृक्षे। परूषफलेर गाछ, फलसा। हि फालुदे, शुकरी, फरया। म पपका। तैलङ्गा तें पुटिकी। स द्विधा इयविटपभेदात्। सु सू ४६अ परूषकादि। वा सू १५अ। तत्पर्य्याया—परूषक, नागदलोपम, गिरिपीलु, परावत, नीलपत्र, नीलमण्डल, परापर, अल्पास्थि।

-गुणाः —अम्लकटुकं कफरोगहरं वातघ्नं पित्तकरम्। इत्यामपरूषगुणाः। पक्वं तत् मधुरं रुचिप्रदं पित्तघ्नं तथैव शोफहरञ्च। तत्फलं मेहपित्तसन्निपातघ्नम्। अत्रि १७अ। "परूषकङ्कषायाम्लमामं पित्तकरं लघु। तत् पक्वं मधुरं पाके शीतं विष्टम्भि बृंहणम्। हृद्यं तृट्पित्तदाहास्रज्वरक्षयसमीरहृत् ॥" भा। फलं मलसंग्राहि शैत्यकरं। पत्रं व्रणपिडकादौ हितम्। त्वक्कषायाः शीतला च। द्रव्यगुणान्तरम्।

**परुस्**। क्ली। परूषकफले। পরুষ ফল। रा नि व ११। पर्वणी। अम।

**परूषकादि**। पु। तदादिगणकृतकषाये। स च परूषक वरा द्राक्षा कट्फल कतकाफल राजाह्व दाडिम शाकात्मक तृष्णा वात मूत्रघ्न। वा सू १५अ।

**परेष्टुका**। स्त्री। बहुप्रसूतायां गवि। अम।

**परैधितः**। पु। कोकिले। श मा।

**परोट**। पु। घृतश्विद्ररोटिकाभेदे। পরটা। वै निघ।

**परोष्णी**। स्त्री। तैलपायिकायाम्। अम।

**पर्कट**। पु। पश्चात्तापे। क्रौञ्चपक्षिणि। वै निघ।

**पर्कटि (टी)**। स्त्री। प्लक्षवृक्षे। भा।

**पर्कटी (इन्)**। पु। प्लक्षवृक्षे। পাকুড় গাছ। तैं अुञ्चिचेट्टु। प सु। र मा।

**पर्जनी (न्या)**। स्त्री। दारुहरिद्रायाम् प सु। रा नि व ६। [अम।

**पर्णम्**। क्ली। ताम्बूले। रा नि व ११। पत्रे।

**पर्ण**। पु। पलाशवृक्षे। रा नि व १०।

**पर्णक**। पु। सुनिषण्णशाके। भा पू १भ शाव।

**पर्णकार**। पु। बारजीविनि। বারুই।

**पर्णखण्ड**। पु। ताम्बूलखण्डे। वनस्पति विशेष। श च।

**पर्णचोरक**। पु। चोरनामकगन्धद्रव्ये। গেটেলা। रा नि व १२।

**पर्णपिण्डीत**। पु। मदनवृक्षे। वै निघ।

**पर्णभेदिनी**। स्त्री। प्रियङ्गुलतायाम्। रा नि व १२।

**पर्णभोजन**। पु। छागपशौ। त्रिका। चि। पत्रभोजिमात्रे।

**पर्णमाचल**। पु। (Averrhoa carambola) कर्मरङ्गवृक्षे। श मा।

**पर्णमूलम्**। क्ली। ताम्बूलमूले। राज ३प।

**पर्णमृग**। पु। वृक्षमर्कटिकायां, रूपौति लोके। वानरे। वृक्षमार्जारे। গেছো বিড়াল। तद्वर्गश्च मद्गु मूषिक वृक्षशायिका वकुश पूतिघास वानर प्रभृतिको भवति। तन्मांसं मधुरं गुरु वृष्यं चक्षुष्यं शोषितकरं कासार्शःश्वासनाशनं मूत्रपुरीषानुलोमकञ्च। सु सू ४६अ। "वनौकोवृक्षमार्जारवृक्षमर्कटिकादयः। एते पर्णमृगाः प्रोक्ताः।" भा।

**पर्णलता**। स्त्री। नागवल्लीलतायाम्। रा नि व ११।

**पर्णवल्ली**। स्त्री। नागरदेशख्यात पलाशी लतायाम्। रा नि व ३।

**पर्णशिरा**। स्त्री। ताम्बूलपत्रशिरायाम्। পানের শির।

**पर्णसि**। पु। पद्मे। গাছিশাক? জলটুঙ্গী। शाके। उणा।

**पर्णाक**। पु। सुनिषण्णकशाके। वै निघ।

**पर्णाश (स.) (न)**। पु। कृष्णार्जकवृक्षे। तुलसीविशेषे। अम। च द सि तो हिक्काश्वासचि। पर्णाशपञ्चके। "व्याघ्री पर्णाससाधितम्।" पार्श्वोक्थमान्याम्। वै निघ।

**पर्णासि**। पु। कृष्णार्जके। वै निघ।

**पर्णिका**। स्त्री। स्थलपद्मायाम्। স্থলপদ্ম। रा नि व ५। पृश्निपर्ण्याम्। চাকুলিয়া। शालपर्ण्याम्। अग्निमन्थे। गणिकारि। वै निघ।

**पर्णिनी**। स्त्री। शालपर्ण्याम्। व निघ विज कल्याणघृत। पृश्निपर्ण्याम्। माषपर्ण्याम्। र मा।

**पर्णिनीद्वयम्**। क्ली। माषपर्णी मुद्गपर्णी इति द्वये। सि यो रक्तातिसा चि कुटजादौ।

**पर्णी (इन्)**। पु। पलाशवृक्षे। आरग्वधवृक्षे। वै निघ। सप्तपर्णवृक्षे। वृक्षे। हे च। स्त्री। शालपर्ण्याम्। पृश्निपर्ण्याम्। त्रिका क।

**पर्णीचतुष्कम्**। क्ली। शालपर्णीपृश्निपर्णीमुद्गपर्णीमाषपर्णीषु। च द वा व्या चि मजमनारायण तैले।

**पर्णीरम्**। क्ली। ह्रीवेरे। বালা। वै निघ।

**पर्णीत्यम्**। क्ली। कर्पूरतैले।

पर्द्दः (नम्)। अपानवायुत्यागे। वै निघ। केशसमूहे। उणा। हेम।

पर्पम्। क्ली। नवतृणे। तृणाङ्कुर। उणा।

पर्पटः (क)। पुं। (Oldenlandia Corymbosa Syn Oldenlandia beflora) स्वनामख्यातक्षुपे पत्रशाके वा। क्षेत्पापड़ा। हि दवनपापड़ा। मं वम् पित्तपापड़ा। क पर्पाटक। उत् जड़पांपुड़ा। तत्पर्य्याया,— वियष्टि, तिक्त, चरक, रेणु, तृष्णारि, वरक, चरक, शीत, शीतप्रिय, पांशु, कल्पाङ्ग, वम्मकण्टक, कृशशाख, प्रगन्ध, सुतिक्त, रक्तपुष्पक, पित्तारि, कटुपत्र, चक्र। गुणा— शीतत्व पित्तश्लेष्मज्वरापह रक्तदाहारुचिग्लानि मदविभ्रमहत्व। रा नि व ५। शि यो पि ज्व चि। "कर्कोटक पर्पटकम्।" अपिच "पर्पटी हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान्। संग्राही शीतलस्तिक्तो दाहनुत् वातलो लघु॥" भा। कुम्भीरुचे। रक्तगन्धशीले। वै निघ। चणकमुद्गादिकृतपिष्टक भेदे। पाँपर् इति भाषा। तत्करणविधि — "धूमसौरचिता हिङ्गुहरिद्रालवणैर्युता। जीरकस्वर्जिकाभ्यात्त ततुलता च वेल्लिता। पर्पटाख्या सदाङ्गारभृष्टा परमरोचका। दीपना पाचना रुचा गुरव किञ्चिदीरिता। मौद्गाश्च तद्गुणा शीता विशेषाल्लघवो हिता। चणकस्य गुणैर्युक्ता पर्पटाशणकोद्भवा। स्नेहभृष्टास्तु ते सर्वे भवेयु मध्यमा गुणे॥' भा। "चार पर्पटक शीतो यवक्षारसमो गुणे।" वै निघ। वातपित्तज्वरे मन्दज्वरे च हित।

पर्पट(टी)द्रुमः। पु। कोङ्कणदेशप्रसिद्धकुम्भीरुचे। गुग्गुलुतरौ। रा नि व ८।

पर्पटादि। पु। पर्पटचन्दनोदीच्यनागरसिद्ध-कषाये। "एक पर्पटक श्रेष्ठ पित्तज्वरविनाशन। किं पुनर्यदि युज्येत चन्दनोदीच्यनागरै॥" च द पि ज्व चि। भा।

पर्पटी। स्त्री। सौराष्ट्रमृत्तिकापरनामसुगन्धद्रव्ये। पङ्कपर्पटी। हेम। पद्मावती, पपरी इति च पश्चिमदेशप्रसिद्धे सुगन्धद्रव्ये। गुणा —"पर्पटी तुवरा तिक्ता शिशिरा वर्णकृल्लघु। विषव्रणहरी कण्डूकफपित्तास्रकुष्ठनुत॥" भा। पलक्रमाने। च म। पिष्टकभेदे। पांपर। उणा।

पर्पटीरस। पु। ग्रहण्यरे रस। रस १ भ गन्धक २ भ, भृङ्गराजरसेन मद्य। ताम्र लोहं प्र रसगन्धयो पादांश दत्ता एकत्र समर्द्य पर्पटीवत् पचेत्। अथ सम्यक् निर्गुण्ड्यादिरसेन ७दिनानि मर्दयित्वा अङ्गारे स्वेदयेत्। रस कौ। र सा स।

पर्प(र्व्व)रीणम्। क्ली। पर्व्वणि। शाव्। श र। पु। पर्णद्रवरसे। पर्णशिरायां। मे। पत्र धूपरसे। श र।

पर्पिकः। पु, स्त्री। खञ्जे। व्याक।

पर्य्यगः। पु। कटाहे। च सू.१५अ।

पर्य्यङ्क। पु। खट्वायाम्। अम।

पर्य्यङ्कपादिका। स्त्री। कोलशिम्ब्याम्। श्वेत आलाकुशी। भा १भ शा व।

पर्य्यणी। स्त्री। दारुहरिद्रायाम्।

पर्य्ययः। पु। क्रमोल्लङ्घने, व्यतिक्रमे। अम।

पर्य्यस्तिका (स्ती)। स्त्री। पर्य्यङ्के। त्रिका।

पर्य्यागतः। त्रि। पक्वे। सु चि २१अ।

पर्य्याप्तः। त्रि। यथेष्टे। क्ली। तृप्तौ। मे।

पर्य्याप्ति। स्त्री। तृप्तौ। वै निघ।

पर्य्याय। पु। क्रमे। अनुक्रमे। अम।

पर्य्यायमुक्तावलि। स्त्री। द्रव्याभिधान विशेषे।

पर्य्युषितम्। क्ली, पु। शिलायाम्। वै निघ। त्रि। व्युष्टे। वासि।

पर्य्यूषितान्नम्। क्ली। पूर्व्वदिवसज कलसिकान्ने। पान्ता भात।

पर्व्व। क्ली। वशग्रन्थौ। बाँशेर गिंट। अम। अङ्गुल्यादिग्रन्थौ। अङ्गुलिर पाव। मे।

पर्व्वकम्। क्ली। जानुप्रदेशे। आँटू। श.च।

पर्व्वणिका (णी)। स्त्री। नेत्रसन्धिजरोगे। लक्षणम्—"ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्ज्ञेया पर्व्वणी वृत्तशोफा।" सु उ २अ। शाक विशेषे। सा च हस्तिशुण्डीति लोके। च सू २७अ।

पर्व्वत। पुं। वृचे। किरातत्तिक्ते। वै निघ। शैले। शाकभेदे। मत्स्यभेदे। पार्वा माछ। सि। तद्गुणा —"पर्व्वतो वातहा स्निग्ध शुक्रलो बलवर्द्धन।" राज।

पर्व्वतकाक। पु। द्रोणकाके। हेम।

**पर्व्वतजा।** स्त्री। गिरिजातद्राक्षाविशेषे, यहारीति लोके। गुणा—"द्राक्षा पर्व्वतजा लघ्वी साम्ला श्लेष्मास्रपित्तकृत्।" भा।

**पर्व्वतटणम्।** क्ली। पर्व्वतजाततृणाख्यतृणविशेषे। हि सड। तत्पर्य्याया,—तृणाढ्य, पत्राढ्य, मृगप्रियम्। गुणा—बलपुष्टिकरं रुच्य पशूनां हितञ्च। रा नि व ८।

**पर्व्वतनिम्ब'।** पु। महानिम्बे।

**पर्व्वतभेद'।** पु। करज्योड़िपाषाणभेदे। भा म ३म मू कृ चि।

**पर्व्वतभेदी (इन्)।** पु। पाषाणभेदे। पाथरकुचि। च द मू र चि। "पर्व्वतभेदिपषायाम्।"

**पर्व्वतमोचा।** स्त्री। गिरिकदल्याम्। वन कदल्याम्। बीचे कला। रा नि व ११।

**पर्व्वतवासिनी।** स्त्री। आकाशमांस्याम्। शृङ्गजटामांसी। रा नि व १२।

**पर्व्वताश्रय।** पु। महासिंहे। रा नि व १९।

**पर्व्वताह्वय।** पु। धाराकदम्बवृक्षे। वै निघ।

**पर्व्वतोद्भवम्।** क्ली, पु। हिङ्गुले। पारदे। वै निघ।

**पर्व्वतोद्भूतम्।** क्ली। अभ्रकधातौ। वै निघ।

**पर्व्वपुष्पिका (ष्पी)।** स्त्री। हस्तिशुण्ड्याम्। হাতিশুঁড়ে। वा सू १५म। तच्छाकगुण—वातपित्तहर'। च सू २७म। रामदूतीतुलस्याम्।

**पर्व्वभेद।** पु। सन्धिभङ्गरोगे। तथा सन्धिवेदनायाम् यथा चालने भङ्गाशङ्का जायते। च द ज्व चि।

**पर्व्वमूला।** स्त्री। श्वेतापराजितायाम्। अपराजिता। रा नि व ५।

**पर्व्वयोनि।** पु। इक्षौ। वेतसे। वंशे। हे च।

**पर्व्वरीणम्।** क्ली। पर्व्वणि। গাঁটি। पु। पर्णवृन्ते। পাতের বোঁটা।

**पर्व्वरुट्।** पु। दाड़िमवृक्षे। त्रिका।

**पर्व्ववल्ली।** स्त्री। वल्लीदूर्व्वायाम्, मालादूर्व्वायाम्। दूर्व्वालता। रा नि व ८।

**पर्व्वसन्धिः।** पु। चन्द्रसूर्य्ययोः सन्धौ। रा नि व १८।

**पर्व्वित।** पु। (Silurus pobda) पर्व्वत मत्स्ये। পাবদামাছ।

**पर्शुका / पर्शू।** स्त्री। पञ्जरास्थनि। अम। सु चि ३म। च द १०म।

**पलम्।** क्ली। मांसे। रा नि व १७।१८। च द विष चि। "कर्कटपलहरितालं।" शुक्तिद्वये, ८ तो। "शुक्तिभ्याञ्च पलं ज्ञेयम्।" प म १ख। कर्षचतुष्टये। अम। पु। पलाले। हे च। जटामांस्याम्। लाक्षायाम्। वै निघ।

**पलक्या।** स्त्री। पालङ्कीशाके। रा नि व ७।

**पलङ्क।** पु। निष्पावे। शिम्, বর্বটী। रा नि व २१।

**पलङ्कर'।** पु। पित्ते। त्रिका।

**पलङ्कष.।** पु। कणगुग्गुलौ। रा नि व १२। निष्पावे। शिम्। प मु।

**पलङ्कषा।** स्त्री। श्वेतनिष्पावे। শ্বেত শিম্। रा नि व १६। गोक्षुरके। मे। च सू ४थ सन्धानीये। वै निघ अ श्वा चि वचायाचष्टते। गुग्गुलौ। मे। च द सिद्धो महापैशाचघृते। विज्व चटा दशाङ्गधूपे, पलङ्कषायष्टते। पलाशबीजे। वै निघ २भ क्रमिचि सावित्रवटके। लाक्षायाम्। प मु। वा उ ६ष महापैशाचघृते। क्षुद्रगोक्षुरके। वै निघ। मक्षिकायाम्। रा नि व १८। रास्नायाम्। वै निघ २भ अ श्वा चि पलङ्कषातैले। मुण्डीर्य्याम्। म।

**पलङ्कारम्।** क्ली। रक्ते।

**पलप्रिय।** पु। द्रोणकाके।

**पलभिद्।** पु। पाषाणभेदे।

**पललम्।** क्ली। तिलकल्के। তিলকুটো। हि तिलकुटि। रा नि व १६। सु चि २०च। च द क्षुद्ररोग चि। लक्षण—"पललन्तु समाख्यातं सैंधव तिलपिष्टकं। पललं मलकृद्वल्यं वातघ्न कफपित्तकृत्। बृंहणञ्च गुरु हृद्य स्निग्धं मूत्रनिवर्त्तकम्।" भा। मांसे। रा नि व १७।१८। शुष्कमांसे। सु सू ४६च। तिलचूर्णे। वै निघ। भ्रष्टतिलकल्के। वा उ ३८च। पङ्के। मे।

**पललज्वर।** पु। पित्ते। हारा।

**पललप्रिय.।** पु। द्रोणकाके। দাঁড়কাক।

**पललाशय।** पु। अजीर्णे। त्रिका। गण्ड रोगे। जट।

**पलस।** पु। पनसे। কাঁটাল।

**पलाग्निः** । पु । पित्ते । हारा ।

**पलाङ्गः** । पु । शिशुमारे । शुशोक् । हारा ।

**पलाण्डुः** । पु । Allium Cepa) Onion Fr Ognon मूलशाकविशेषे । पैंयाज । हि पियाज, पियज । म श्वेतकान्दा । क उल्लि । तें नीरुल्लिचेट्टु । ता वेङ्गयम् । बम् कान्द । पारस्य बुल्लिगड्डुनु । तत्पर्य्याया,—निकेतन, नीचभोज्य, लोहितकन्द, तीक्ष्णकन्द, उष्ण, मुखदूषण, शूद्रप्रिय, दीपन, क्रिमिघ्न, मुखगन्धक, बहुपत्र, विश्वगन्ध, रोचन, यवनेष्टक, सुकन्द, सुकन्दक, मुकुन्दक, कुकुन्दक । राजनि व ६ । स श्वेतहरिद्रवर्णभेदेन द्विधा । तयोर्द्वितीयो रक्तो वा राजपलाण्डुरित्युच्यते । गुणा —कट बल्य गुरु कफपित्तघ्न हृद्य रोचन स्निग्ध वान्तिघ्न । राजनि व ७ । "पलाण्डुस्तु गुणैर्ज्ञेयो रसोनसदृशो गुणैः । स्वादु पाके रसेऽनुष्ण कफकृन्नातिपित्तल । हरते केवल वात बलवीर्य्यकरो गुरु ॥" भा । "वातहर स्वेहभावात् ।" सुसू ४०अ । "पलाण्डुर्वातकफघ्न शुक्रल शूलगुल्मनुत् ।" अत्रि १६अ । बल्य, ज्वरे उदरे शूले सन्निपातश्लेष्मकासे पामायां कर्णशूले वरटादिदंशे च हित । द्रव्यगुणान्तरम् । "पलाण्डुर्ग्रंपपूर्व स्यात् शिशिर पित्तनाशन । कफप्रदीपनश्चैव महनिद्राकरस्तथा ॥" See राजपलाण्डु ।

**पलान्नम्** । क्ली । समांसवेशवारादिसिद्धभक्ते । पोलाओ । एतत्साधनविधि यथा—छागमांसस्य शराव तण्डुलस्य शराव, घृतस्य शरावचतुर्थाश लवङ्गेलात्वक्पत्राणां प्रत्येकं माषचय मरिचतेजपत्रयो प्रत्येकं तोलकद्वयं कुङ्कुमस्य माषक, आर्द्रक धान्ययोः प्रत्येकं तोलकद्वयं लवणस्य षट्तोलक द्राक्षायाश्च पलमिति । पाकराजेश्वर ।

**पलापः** । पु । करिगण्डे । अमा ।

**पलापहा** । क्ली । नेपाडने । वैनिघ ।

**पलाशिम्** । क्ली । सुवर्णकदर्ये । ४लो । चकल १२अ । [ अम ।

**पलालः** । पु । निःसत्वधान्यनाले । पोयाल ।

**पलालशाक**. । पु, क्ली । पलालजातशाके । पोयाल् छाक् । गुणा —"स्वादुपाकरसा रुक्षा दीपना पलालजा ।" राज ४प ।

**पलालदोहदः** । पु । आम्रवृक्षे । अमा ।

**पलाशम्** । क्ली । अ शुके । तेजपत्र । राजनि व ६ । पत्रे । पाता । अम ।

**पलाशः** । पु । किंशुके । शिमुल । सुसू ३८अ अम्बष्ठादि । च सू ४अ यवागूप्रकरणे । (Butia frondosa) Butia gum स्वनामख्यातमहातरुवर्गीयवृक्षे । पलाश गाछ । प सु । हि धारा । म पलस । क मुत्तलु । तें । मोदुग । उत् पराश । बम् खारको । ता परशन् । तत्पर्य्याया,—किंशुक, पर्ण, वातपोथ, करक, याज्ञिक, त्रिपत्रक, ब्रह्मपादप, समिद्वर, त्रिपर्ण, रक्तपुष्प, पूतद्रु, ब्रह्मवृक्षक, ब्रह्मोपनेता, रक्तपुष्पक, काष्ठद्रु । गुणा —कषायोष्ण क्रिमिघ्न । तद्बीज पामाकण्डूदद्रुत्वग्दोषघ्न क्रिमिघ्न लघूष्ण कटुपाकि रुचघ्न । भा । तत्पुष्पम् उष्ण कटु कुष्ठघ्न । "कटुतिक्तकषाय स्वादुपाकि ।" राजनि व १० । भा । स च रक्तपीतश्वेतनीलपुष्पभेदेन चतुर्विध । किंशुकेन गुणसाम्येऽपि सितो विज्ञानदो भवति । तद्वत् गाम्भारीतिलगुर्ध । भूमिकुष्माण्डे । पारीषवृक्षे । पलाश पिप्पुल । शठ्यां । मे । सुचि २०अ ।

**पलाशक** । पु । शठ्यां । आटा । स्वाध्यायाम् । राजनि व ११ । किंशुके । शिमुल । सुसू ३८अ सुष्ककादि । पलाशवृक्षे । शर । [ मिघ ।

**पलाशगन्धजा** । क्ली । वनलोचनभेदे । हे

**पलाशच्छदनम्** । क्ली । तमालपत्रे । वैनिघ ।

**पलाशतरुज** । पु । कोमलपलाशपत्रे । चदत्ति ज्वलने । "पलाशतरुजैर्दहेत् ।"

**पलाशतरुशोणितम्**
**पलाशनिर्यास** } पु । तद्वृक्षनिर्यास । पलाशेर आटा ।

गुणा —"पलाशभवनिर्यासो ग्राही च सपरीद भुवम् । यद्वर्णो ग्रहणान् व्याधीन् कासान् स्वेदातिनिर्गमम् ॥" कैयदे । भैषनेरोधि ।

**पलायन** । पु । आदिकाया । विका ।

**पलाशपत्री (र्णी) (वल्ली)** । क्ली । अश्वगन्धायाम् । राजनि व ३ । पलाशीलतायाम् । वैनिघ । [ निव० ।

**पलाशलोहिता** । क्ली । किङ्कोशाके । रा

**पलाशबीजम्** । क्ली । पलाशबीजे । पलाश

পাবুড়া। रा नि व १०। गुणा —पलाशारि गुरु टक्कहरम्। वा वि ८ष । See पलाश ।

**पलाशा**। स्त्री। गन्धशट्याम्। ग्रन्थाम। प सु। कुष्माण्डे। पलाशीलतायाम्। वै निघ।

**पलाशाख्य (ख्या)**। पु, स्त्री। नाड़ीहिङ्गौ। रा नि व ६।

**पलाशान्ता**। स्त्री। गन्धपत्रायाम्। रा नि व १०।

**पलाशाभा**। स्त्री। यमानिकायाम् वै निघ।

**पलाशिकम्**। क्ली। मद्यदारौ। पलाशि पिपुल।

**पलाशिका**। स्त्री। पलाशीलतायाम्। रा नि व ३। भूमिकुष्माण्डे। रा मा। शट्यां। लाक्षायाम्। रा नि व २१। भाषातकी। कन्नौज। वै निघ।

**पलाशी (इन्)**। पु। क्षीरीवृक्षे। शिंवनि। प सु। द्रवसामान्ये। त्रिका। स्त्री (शी)। नागरदेशे प्रसिद्धायाम् स्वनामख्यातलतायाम्, काश्मीरे शटीति ख्यातायाम्। तथा। तत्पर्याया,— पत्रवल्ली, पणवल्ली, पलाशिका, सुरपर्णी, सुपर्णी, दीर्घवल्ली, विषादनी, अम्लपत्नी, दीर्घपत्री, रसाम्ला, चन्द्रिका, कशातिका, कान्तिका। गुणा— मधुराम्ला लघु मुखदोषारोचकघ्नी पित्तकोपनी पथ्या च। रा नि व ३। लाक्षायाम्। रा नि व २३।

**पलिकाशम्**। क्ली। पलपरिमाणे। ८ आट তোলা।

**पलिक्नी**। स्त्री। वृद्धायाम्। अम। बाल गर्भिण्यां। त्रिका।

**पलिघ**। पु। काचकलशे। मे।

**पलितम्**। क्ली। केशशुक्लतायाम। रा नि व १५।२३। निदान लक्षणं—"क्रोधशोकश्रमकृत शरीरोष्मा शिरोगत। पित्तञ्च केशान् पचति पलित तेन जायते॥" सु नि १३ष। शैलजे। रा नि व २३। मरिचे। वै निघ। पु। गुग्गुलौ। कपालरोगे। वै निघ। तापे। कर्दमे। म। केशपाशे। हे च। त्रि। वृद्धे। (ता) वृद्धायां। जटा।

**पलितग्रह**। पु। पुष्पवृक्षविशेषे। तगर-डूलेर गाछ। वै निघ।

**पलिनी**। स्त्री। काकोदुम्बरे। काक् डुमुर। वै निघ।

**पली**। स्त्री। गृहमत्तिकायाम्। वै निघ।

**पलीस**। पु। पटोले।

**पल्यगन**। पु। शयिते। वै निघ।

**पल्ल**। पु। पलाले। পোয়াল। च चि १८ष पिच्छावषे।

**पल्लक**। पु। मत्स्यभेदे।

**पल्लव**। पु, क्ली। किसलये। त्रिका। तेजपत्रे। भा म १भ ज्व वि। "चन्दनपल्लवदाहसनाथ।" लाक्षारागे। खड्गे। विटपे। त्रिका। बलये। अ र। चम्पकपुष्पवृत्ते।

**पल्लवक**। पु। मत्स्यविशेषे। हला।

**पल्लवद्रु**। पु। अशोकवृक्षे। रा नि व १०।

**पल्लवाद**। पु। हरिणमृगे। वै निघ।

**पल्लवाधार**। पु। शाखायाम्। अ च।

**पल्लवाह्वयम्**। क्ली। तालीशपत्रे।

**पल्लवितम्**। क्ली। लाक्षारक्ते। मे।

**पल्लवी (इन्)**। पुं। वृक्षे। अमा।

**पल्लिका**। स्त्री। सरटे। गोधायां। वै निघ। गृहगोधिकायाम्। रा नि व १९।

**पल्लिवाह**। पु। तामप्रचक्षविशेषे। वम्। पीकलगवत। गुण —पम्नामवलदम्। "पल्लिवाहो दीर्घदण्ड सुपक्वाममवधक। अदद शाकपवादि पमनामबलप्रद॥" रा नि व ८।

**पल्ली**। स्त्री। गृहगोधायाम्। टिकटिकी। रा नि व १९।

**पल्लूरम्**। क्ली। शुष्कमांसे। पथ्यापथ्यम्।

**पल्ल**। पु। राशौ। গাদা। च चि १५ भत्ता-तक्रचीरे।

**पल्वलम्**। पु, क्ली। स्वल्पसरोवरे। अम। लक्षण यथा—"अल्प सर पल्वल स्यादस चन्द्रमा रवौ। न तिष्ठति जल किञ्चित् तदल्प वारि पल्वलम्॥ पल्वल गुर्वभिष्यन्दि विष्टम्भि दोषलं परम्॥" भा। See जलम्।

**पल्वलावास**। पु। कच्छपे। रा नि व १९।

**पल्वलोदकम्**। क्ली। पल्वलजले।

**पव**। पु। वायौ। अ च। निष्पावे, धान्यानौं

निर्बुषीकरणे। বওনা, পাছড়ান। अम। क्ली। गोमये। श च।

**पवनः**। पु। वायौ। रा नि व २१। पीतभृङ्गराजे। रा नि व ४। See मार्कव। मज्जरवणे। रा नि व ८। क्ली। जले। श मा। आमघटादि पाकस्थाने। পোয়ান। मे।

**पवनद्विषः**। पु। गुग्गुलौ। वै,निघ। निष्पावे। मे।

**पवनरिपुः**। पु। एरण्डवृक्षे। रा नि व ८।

**पवनरिपुजटा**। स्त्री। एरण्डमूले। वै निघ २भ अभिन्यासज्व चि।

**पवनव्याधि.**। पुं। वायुरोगे। त्रिका।

**पवनालः**। पु। (Andropogon saccharatus) देवधान्ये। দেধান, জনার। हिं पुनेरा, कुट्टल। तत्पर्य्याया,—देवधान्य चूर्णाह्व, जूर्णाह्व, कुट्टल, जुलन, बीजपुष्प, पुष्पगन्ध। गुणा—हिम स्वादु लोहित शुक्रपित्तकृत् बल्य तुवरोरुच क्लेदकृच। भा द्र १भ धान्यव।

**पवनाशः (न.)**। पु। सर्पे। हला। अम। शोषके। र सा स।

**पवनाशनाशः**। पु। मयूरे। वै निघ। गरुड़े। हला।

**पवनाशय.**। पु। वाताशये।

**पवनी**। स्त्री। वनबीजपूरके। रा नि व ११।

**पवनेन्द्रियः**। पु। गर्भविकारसम्भूतयुक्तहीन पुरुषविशेषे। कदाचिद्दुष्टो वायु गर्भस्थस्य शुक्रस्थान समूल हत्वा तमशुक्र करोति, स पवनेन्द्रिय। यथा—"शुक्राशय गर्भगतस्य हत्वा करोति वायु पवनेन्द्रियत्वम्।" च शा २च।

**पवनेष्ट.**। पु। निम्बवृक्षे। বাতাবীলেবু। वै निघ। महानिम्बे। र.मा।

**पवनाम्बुज.**। पुं। परुषकवृक्षे। क्ली। तत्फल। श च।

**पवमानः**। पुं। वायौ। रा नि व २१।

**पवारु**। पुं। कारवेल्ले। त्रिका।

**पवि.**। पु। वज्रे। रौद्रे। रा नि व १२। शुक्रोदके। वै निघ २भ च्यव चि मैत्रीवरविलासमयि रसे।

**पवितम्**। क्ली। मरिचे। रा नि व ६।

**पवित्रम्**। क्ली। मधुनि। घृते। रा नि व १४। १५। ताम्रे। जले। भीमसेनीकर्पूरे। कुशे। मे। घर्षणे। विश्व।

**पवित्रः (कः)**। पु। तिलवृक्षे। रा नि व १६। पुत्रजीवकवृक्षे। रा नि व ९। (क) दमनकवृक्षे। रा नि व १०। उदुम्बरवृक्षे। अश्वत्थवृक्षे। रा नि व ११। शरपत्रदर्भे। रा नि,व ८। हिज्जलवृक्षे। हरिद्रायाम्। तिलकवृक्षे। वै निघ। क्ली। जले। अम। जाले। श र।

**पवित्रधान्यम्**। क्ली। यवे। रा नि व १६।

**पवित्रा**। स्त्री। अश्वत्थिकायाम्। गंधा अश्वथ। रा नि व ११। तुलसीवृक्षे। श मा। हरिद्रायाम्। रा नि व ६। शमीवृक्षे। वै निघ.।

**पशुः**। पु। जन्तुभेदे। अम। उदुम्बरवृक्षे। যজ্ঞডুমুরের গাছ। श च। छागे। त्रिका। स ग्राम्यारण्यभेदेन चतुर्दशविध। गौरविरजोऽश्वी ऽश्वतर गर्दभ मनुष्यश्चेति सप्त ग्राम्या। महिष वानरर्क्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्या। मांसगुणा—"लघव शीतमधुरा सकषाया हिता नृणाम्।" राज।

**पशुक्रिया**। स्त्री। मैथुने। हे च।

**पशुगन्धा (न्धिका)**। स्त्री। अजगन्धायाम्। वनतुलसी। वा सू १५भ वत्सकादि। "पशुगन्धा पञ्चकालकं हन्ति।"

**पशुपल्वलम्**। क्ली। कैवर्त्तमुस्तके। श च।

**पशुमोहनकारिका**। स्त्री। चन्द्रशूरे। भा।

**पशुमोहनि (नी) का**। स्त्री। कटुकायाम्। रा नि व ३।

**पशुराजः (ट्)**। पु। सिंहे। श च।

**पशुहरीतकी**। स्त्री। आम्रातकफले। আমড়া। त्रिका।

**पश्चात्कर्म**। क्ली। मलदर्प्पादिकार्य्ये। पेयायत्र संसर्ज्ज मे। निःशल्यदृष्यानुबन्धापचर्य्याय यत् क्रियते तस्मिन् कर्मणि। सु सू ५भ।

**पश्चाद्गुल.**। पुं। बालानां नयनरोगविशेषे। "दुष्टमस्त्रादिभिर्मातु स्तन्य सन्पिबत शिशो। यदा प्रकुपितश्लेष्म गुदे समभिधावति। तदा सञ्जायते तस्य जलौकोदरसन्निभ। तत्र सदाह आरक्त स्वरकात्यकर पर। हरित पीतक वापि

वर्चसेन भवेद्ध्रुवम्। व्रण पश्चाद्गती नाम व्याधि परमदारुण॥" रस र बाल वि।

**पक्षिमवातः**। पु। पश्चिमदिग्भववायौ। পশ্চিমে বাতাস। गुणा—विषदी रूचपरुष खर स्वेदबलापहः। पश्चिमो मारुतस्तीच्ण कफ मेदोविशोषण। सद्य प्राणक्षयकर शोषणस्तु शरीरिणाम्॥" सु चि १५।

**पक्ष्म**। पु, क्ली। विन्दुजाले। पक्षे। त्रिका।

**पक्षिका**। स्त्री। मारिपर्णाम्। टौवापाना। श मा।

**पक्षः**। पु। शरीरे। पिच्छे। हेच। पक्षतौ। ডানা। अम। पार्श्वे। पञ्चदशाहोरात्रे। बले। वृक्षोरस्थ्नि। राजहस्तिनि। मे। पक्षिणि। श र। गरुति। পাখা। भ। वीरपाशे। वै निघ।

**पक्षघात**। पुं। पक्षवधरोगे। निदा। See पक्षवध।

**पक्षचरः**। पु। हस्तिनि। मे।

**पक्षतिः**। स्त्री। पक्षमूले। পাখনা। अम।

**पक्षधरः**। पु। पक्षिणि। वै निघ।

**पक्षपनः**। पु। सोमलतायाम्। वै निघ।

**पक्षभाग**। पु। पार्श्वभागे। गजपार्श्वभागे। अम।

**पक्षमार्ज्जार**। पु। पक्षविडाले। वै निघ।

**पक्षमूलम्**। क्ली। पक्षतौ। ডানার মূলভাগ। अम।

**पक्षवध (वात)**। पु। वातव्याधिविशेषे। পক্ষাঘাত। निदा। "गृहीत्वार्द्ध तनोर्वायु शिरा स्नायुर्विशोष्य च। पक्षमन्यतर हन्ति सन्धि बन्धान्विमोचयन्। क्रत्स्नोऽर्द्धकायस्तस्य स्यादकर्म्मणो विचेतन। एकाङ्गरोगं तद्विदन्ति पक्षवध विदु॥" मा नि।

**पक्षवान्**
**पक्षवाहन**। पु। पक्षिणि। श च।

**पक्षविन्दु**। पु। क्रौञ्चपक्षिणि। কোঁচবক। वै निघ।

**पक्षसुन्दर**। पुं। लोध्रवृक्षे। हारा।

**पक्षालु**। पुं। पक्षिणि। श च।

**पक्षिक**। पु। पक्षिराजशालौ। रा नि व १६।

**पक्षिणी**। स्त्री। वनकार्पासाम्। वै निघ। स्त्रीपक्षिणि।

**पक्षिपातः**। पु। पतङ्गज्वरे। शब्दे।

**पक्षिराजः**। पु। गरुडे। मयूरे।

**पक्षिराजशालि**। पु। स्वनामख्यातशालि-धान्यविशेषे। পক্ষিরাজ ধান। म पाखियाशालि। रा नि व १६। [ नि व १६।

**पक्षिलावण्यः**। पु। पक्षिराजशालौ। रा

**पक्षिशाला**। स्त्री। पक्षिकुलाये। त्रिका।

**पक्षिसिंहः**। पु। गरुडे। त्रिका।

**पक्षिस्वामी (इन्)**। पु। गरुडे।

**पक्षी (इन्)**। पु। माक्षिकधातौ। स्वर्णमाक्षि। रसास। विहङ्गमे। পাখী। हि चिडिया। तत्पर्य्याया,—खग, विहङ्ग, विहङ्गम, विहग, विहायः, शकुन्त, शकुन, द्विज, पतत्री, पतग, पतन्, पत्ररथ, अण्डज, नगौका, वाजी, विकिर, विष्किर, पतत्रि, नीडोद्भव, गरुत्मान्, पित्सन्, नभसङ्गम, नाड़ीचरण, कण्ठाग्नि, पतङ्ग, अगौका, चञ्चुभृत्, कुरण्ड, सरण्ड, विपतिषु, पत्रवाह, द्युग, कुलायस्थ, इच्छालय, पक्षमान् जिह्वारद, तरुशायी, नीडज, पतङ्गम, पतम, पतस, विहायस, यथेष्टाचारी, व्योमचारी। स चतुर्विध विष्किरप्रतुदप्रसहप्लव भेदेन। तत्र विष्किरा लावतित्तिरकपिञ्जलादय। कपोतपारावतादय प्रतुदा। काककङ्कुररादय प्रसहा। हससारसक्रौञ्चादयय प्लवा इति। एषां गुणादिक स्वस्वपर्य्याये द्रष्टव्यम्। आनूपमांसगुणा —"धान्या कुलचरा ये तु तेषां मांस लघूत्तमम्। आनूपवनजन्मांस स्निग्धङ्गुरुतर स्मृतम्॥" भा पु १भ। स्थूलकायपक्षिमांसगुणा—"गुरुभक्षा बहुभुजो ये चोपचितमेदस। एकदेशेऽपि पूर्व्वाद्यं मृगाणां पक्षिणा परम्॥" शरीरस्थ तदङ्गगुर लम्। यथा—"सर्व्वपाद शिर स्कन्धोदरस्थ यकृद्धृदम्। पादपुच्छान्तु मत्स्यस्तु मक्षीड़ा समीहना। धातव शोणितादाय गुरव स्यु परम्परम्॥" राज।

**पक्ष्म**। क्ली। पक्षे। अम माला। पुष्पदेशरे। नेत्ररोमि। अम भ।

**पक्ष्मकोप**। पु। नेत्रवर्त्मगतरोगे। কোঁয়ার রোগ, কোতো। लक्षण यथा—"पक्ष्माशयगता

दोषा तीक्ष्णाग्राणि खराणि च । निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते ॥ उद्धाटितै पुन शाम्यन्ति पक्ष्मभिर्योपजायते । वातातपानलद्वेषी पक्ष्मकोप स उच्यते ॥” सु उ ३८ ।

पक्ष्मघातः । पु । पक्ष्मगतनेत्ररोगभेदे । पक्ष्म वधरोगे । निदा ।

पक्ष्मयूका । स्त्री । पक्ष्मगतकीटे । वै निघ ।

पक्ष्मरोधः । पुं । पक्ष्मगतरोगविशेषे । ‘पक्ष्मो परोधे सङ्कोच वर्त्मनां जायते तथा । खरताम्र मुखत्वञ्च लोमामन्यानि वा पुनः । कण्टकैरिव तीक्ष्णाग्रै घृष्ट नेत्रञ्च दूयते । उष्णते चानिलादि विङ्ख्याद्य शाम्तिरुद्वते ॥” वा उ ८च ।

पक्ष्मशातः । पुं । पक्ष्मकोपरोगे । लक्षण— “वर्त्म पक्ष्माशयगतं पित्त रोमाणि पातयेत् । कण्डू दाहञ्च कुरुते पक्ष्मशात तमादिशेत् ॥” मा नि ।

पक्ष्मार्शः । क्ली । नेत्रवर्त्मार्शोरोगे । निदा ।

पक्ष्मि (क्ष्मी) कः । पु । आच्छुकवृक्षे । आँचफुल गाछ ।

पक्ष्मोत्सङ्गः । पु । पक्ष्मशोथरोगे । निदा ।

पांशवः । पु । पांशुलवणे । पाँङा लवण । रा नि व ६ ।

पांशु । पु । पर्पटके । रा नि व ४ । भा म १ भ विसममज्व चि । “पुरपायिजपांशुभि ।” भीमसेनीकर्पूरे । रा नि व १२ । क्षारमृत्तिकायां । तालवृक्षे । पुन्नागवृक्षे । धूली । चम । शालि धान्यविशेषे । गुणा —शालिवत् । च सू २७च । शस्यार्थं रक्षितगोमये । सार । मे ।

पांशुकम् । क्ली । कासीसे । हिङ्गुकम् । रा नि व १३ ।

पांशुका । स्त्री । रजस्वलायाम् । वै निघ ।

पांशुकासीसम् । क्ली । धातुकाशीशे । हीरे कस् । भा ।

पांशुखुरः । पु । अश्वस्य पादतलस्यरोगे । लक्षणम् यथा—“पांशुभि शर्कराभिश्च पूर्य्यते यस्य कोटरम् । तले तल विजानीयात् रोग पांशुखुरं भिषक् ॥” ज द ३८च ।

पांशुचत्वरम् । क्ली । पांशुधाने । पाँशकुड़ । श मा । घनोपले । शिल ।

पांशुचन्दन । पु । शिव । त्रिका ।

पांशुचामरः । पुं । पटकर्कटिकायाम् । दूर्व्वामयप्रदेशे । मे । पटभवने । जटा ।

पांशुजम् । क्ली । पांशुलवणे । पाँङा लवण । र मा । मृत्तिकालवणे । सोरा । [ रवी ।

पांशुपटु । क्ली । पांशुलवणे । र सा,स रवप्रक

पांशुपत्रम् । क्ली । वास्तूके । बेतो शाक । श मा ।

पांशुभवम् । क्ली । मृत्तिकालवणे । वै निघ ।

पांशुभिचा । स्त्री । धातकीवृक्षे । धाईफुलेर गाछ । वै निघ. । [ हारा ।

पांशुरः । पुं । खञ्जनघोटके । दंशके । डाँश ।

पांशुरागिणी । स्त्री । महामेदायाम् । रा नि. व ५ ।

पांशुलः । पु । शिवे । पूतिकरञ्जे । काँटा- करञ्ज । श च ।

पांशुलवणम् । क्ली । औद्भिदलवणे । फुला लवण, पाँङा लवण । तत्पर्य्याया —रोमकं, औद्भिज्ज, वसुक, वहुपांशु, ऊषरज, औवर्र, ऐरिण, और्व्व, सह, ऊष, औद्भिद, पाक्य, पांशुज । प सु. । गुणा —“औद्भिदम्पांशुलवण यज्जात भूमित स्वयम् । क्षारं गुरु कटु स्निग्ध शीतल वातनाशनम् ॥” भा पू १भ । तीक्ष्णम् अनुष्ण कटु तिक्त दीपनं दाहशोषकरं ग्राहि पित्तकोपनञ्च । रा नि व ६ । भेदक पाचन पित्तकरञ्च । राज ।

पांशुला । स्त्री । केतकीवृक्षे । केया गाछ । रजस्वलायाम् । रा नि व १०।१८

पांशुवाप्यः । पु । पांशुभूमिवापित शालिधान्य विशेषे ।

पांशुक्षार. । पुं । क्षारमृत्तिकायां । सोरा । वै निघ ।

पांसवम् । क्ली । मृत्तिकालवणे । सोरा । वै निघ ।

पांसु । पु । धूली । ऊषा ।

पांसुक(ज)म् । क्ली । पांशुलवणे । मृत्तिका लवणे । च द सन्निपातज्व चि कर्णमूलशोथे । “गैरिक पांसुज षष्ठो ।”

पांसुजक्षार । पुं । मृत्तिकालवणे । सोरा । वै निघ ।

सन्धानीय पित्ते हिता प्रवरीपवाश्च । वा,सू,१५अ ।

**प्रियजीवः (कः)** । पुं । श्योनाकवृक्षे । শোণা গাছ । रा नि व ९ । लोध्रवृक्षे । वै,निघ ।

**प्रियतमः** । पुं । मयूरशिखायाम् । श च ।

**प्रियदर्शनः** । पुं । क्षीरिकावृक्षे । क्षीरी । शुकपक्षिणि । जटा । पीतशाले । পিয়াশাল । वै निघ ।

**प्रियदर्शनी** । स्त्री । शारिकापक्षिणि । वै निघ ।

**प्रियदा** । स्त्री । स्वर्णजात्याम् । वै निघ ।

**प्रियवर्णा (र्णी)** । स्त्री । प्रियङ्गुलतायाम् । जटा ।

**प्रियवल्ली** । स्त्री । प्रियङ्गौ । रा नि व १२ ।

**प्रियवादिनी** । स्त्री । शारिकायाम् । वै निघ ।

**प्रियवादी (इन्)** । पुं । शारिकानायके । चातके । च द १२अ ।

**प्रियशा(सा)लः** । पुं । निम्ववृक्षे । प सु । असनवृक्षे । পিয়াশাল । रा नि व ९ ।

**प्रियशा(सा)लकः** । पुं । असनवृक्षे । रा नि व ९ ।

**प्रियसखः** । पुं । खदिरवृक्षे । श च ।

**प्रियसन्देशः** । पुं । चम्पकवृक्षे । श च ।

**प्रिया** । स्त्री । भार्य्यायाम् । हे च । ऋद्धिनाम्नी पर्ण्यौ । वृद्धि । रमा । मल्लिकापुष्पवृक्षे । মল্লিকা ফুলের গাছ । रा नि व १० । वार्षिकीमल्लिकाभेदे । रा नि व १० । प्रियङ्गौ । रा नि व २२ । एलायाम् । श च । मदिरायाम् । रा नि व १४ ।

**प्रियात्मजः** । पुं । स्वनामख्याते मत्स्यजातीय पक्षिभेदे । च सू २७अ ।

**प्रियाम्बुः** । पुं । आम्रवृक्षे । আম গাছ । रा नि व ११ । क्ली । आम्रफले ।

**प्रियालः (कः)** । पुं । प्रियङ्गौ । प सु । चारवृक्षे । পিয়াল গাছ । तत्पर्य्याया,—खरद्रु, ललन, चारक, बहुवल्क, सन्नद्रु, तापसप्रिय, स्नेहबीज, उपवट, मोचवीर्य्य, द्रुमल्लक । रा नि व ११ । अपिच "प्रियालस्तु खरस्कन्धश्चारोबहुलवल्कल । राजादनस्तापसेष्ट सन्नकद्रुर्धनुष्पट ॥ चार पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् । प्रियालमज्जा मधुरो वृष्य पित्तानिलापह । हृद्योऽति दुर्ज्जर स्निग्धो विष्टम्भी चामवर्द्धन ।" भा । क्ली । पक्वप्रियाल फले । भा म १भ ज्व,चि । "द्राक्षादाडिमखर्ज्जूर प्रियालै ।"

**प्रियाला** । स्त्री । द्राक्षायाम् । रा नि व ११ ।

**प्रियाह्वा** । स्त्री । प्रियङ्गुपिकायाम् । शा:नि । वा उ ५अ ।

**प्रीणनम्** । क्ली । तृप्तिकरणे । अम । [ १२ ।

**प्रीणनः** । पुं । खड्गमृगे । গণ্ডার । रा नि व

**प्रीतिः** । स्त्री । तृप्तौ । अम ।

**प्रोहा (न्)** । पं, स्त्री । प्लीहायाम् । हि कोष ।

**प्रुष्ठम्** । क्ली । दुग्धे । वै निघ ।

**प्रेङ्खितम्** । क्ली । कम्पिते । अम ।

**प्रेतग्रहः** । पुं । भूतग्रहविशेषे । लक्षण— "प्रेताकृतिक्रियागन्ध भीतमाहारविद्विष । तृष्णाच्छि-दश्च प्रतेन गृहीतं नरमादिशेत् ॥" वा उ ।

**प्रेतजिह्वा** । स्त्री । स्तब्धतादिलक्षणयुक्तायाम् जिह्वायाम्, अरिष्टलक्षणभेदे । यथा—"स्तब्धा निश्चेतना गुर्व्वी कण्टकोपचिता भृश । श्यावा शुष्काथवा शून्या प्रेतजिह्वा विसर्पिणी ॥" च इ ८अ ।

**प्रेतदेहः** । पुं । मुमूर्षोः शरीरे ।

**प्रेतराक्षसी** । स्त्री । सुरसायाम् । বাবুই তুলসী । प सु ।

**प्रेतलक्षणम्** । क्ली । अरिष्टलक्षणे । च इ २अ ।

**प्रेमपातनम्** । क्ली । नेत्रजले । श च । रोदने ।

**प्रेयोपत्य.** । पुं । क्रौञ्चपक्षिणि । वै निघ ।

**प्रेषणम्** । क्ली । प्रेरणे । पीडायाम् ।

**प्रेष्ठा** । स्त्री । जङ्घायाम् । श च ।

**प्रेक्षणम्** । क्ली । चक्षुषि । श र ।

**प्रेक्षणकूटः** । पुं । चक्षुर्गोलके । मा नि पाण्डौ ।

**प्रेक्षा** । स्त्री । तरुशाखायाम् । श र । दर्शने ।

**प्रैष.** । पुं । उन्मादे । পাগল ।

**प्रोज्झासनम्** । क्ली । मारणे । हे च ।

**प्रोञ्छनम्** । क्ली । लोपने । মোছা । तन्त्रम् ।

**प्रोत्प(फ)ल.** । पुं । ताम्रवृक्षभेदे । श मा । तत्पर्य्याया,—छिद्दलास्थान, कटा, छड़ी, पिका ।

**प्रोथः** । पुं । प्रपाणोर्द्ध्वभागे । घोटना । अ द २४ । कट्याम् । मे । स्फिचि । तथा ।

**प्रोर्णुनाव** । पु । सन्निपातज्वरविशेषे । तल्लक्षणं यथा—"उत्क्षिप्य च समङ्ग विपत्त्यथसान्नितान्त मुह्यतिति । तं प्रोर्णुनावमुष्ट विषितकष्ट विज्ञानीयात् ॥ भा म १म ।

**प्रोत्साहित:** । त्रि । रोगमुक्ते । वै निघ ।

**प्रोषः** । पुं । सन्तापे । रा नि व २० ।

**प्रोषितप्रिया** । स्त्री । कुलकट्वे । पीतवाँटी । रा नि व २३ । फलिन्याम्, प्रियङ्गौ । वापिकमल्लिकायाम् । रा नि व २३ ।

**प्रोष्ठः** । पुं । प्रोष्ठीमत्स्ये । शटीरा ।

**प्रो(प्रौ)ष्ठपद** । पु । भाद्रपदमासि । अम ।

**प्रोष्ठी** । स्त्री । (Cyprinus sophore) क्षुद्रशफरीमत्स्ये । पुँटिमाछ । तत्पर्य्याया,— शफर शफरी सफरी श्वेतकोल श्वेत । गुणा— "प्रोष्ठी तिक्ता कटु स्वादु शुक्रला कफवातजित् ।" राज २प ।

**प्रौढ** । पुं । गजचरणपर्व्वणि । त्रिका ।

**प्रौढा** । स्त्री । दृष्टार्त्तवस्त्रियि । रा नि व १८ । त्रिंशद्वर्षादूर्द्ध्वं पञ्चपञ्चाशद्वर्षपर्य्यन्तवयस्कायाम् । "आषोडशी भवेद् बाला तरुणी त्रिंशता मता । पञ्चपञ्चाशतो प्रौढा भवेद् वृद्धा ततःपरम् ॥ तत्सङ्गमदोषा यथा—"बाला तु प्राणदा प्रोक्ता तरुणी प्राणधारिणी । प्रौढा करोति वृद्धत्वं वृद्धा मरणदा भवेत् ॥"

**प्लव** । पु । सङ्घातचारिपक्षिमात्रे । ते च हंस सारस क्रौञ्च चक्रवाक कुरर कादम्ब कारण्डव जीव जीवक बक बलाका पुण्डरीक प्लव शरारिमुख नन्दिमुख मद्गु उत्क्रोश काचाक्ष मल्लिकाक्ष शुक्लाक्ष पुष्कर शायि काकोनालकाम्बुकुक्कुटिका मेघराव श्वेतवारल प्रभृतय प्लवा सङ्घातचारिणश्च । गुणा— "रक्तपित्तहरा शीता स्निग्धा वृष्या मरुज्जित । सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयी ॥" सु सू ४६ अ । कैवर्त्तमुस्तायाम् । हि कैवटीमोथा, गुड़तृणी । भा म ४म सु रो चि । च द छर्दिचि विष चि । प्लक्षवृक्षे । मद व ५ । गन्धतृणे । मे । हंसिन्याम् । विकङ्कतवृक्षे । वै निघ । सारस पक्षिणि । मे । च सू २७ अ । बकवृक्षे । च । क्रौञ्चे । पुष्पशाकविशेषे । भेके । गजे । अश्वे । कपौ । त्रिका । जलकाके । मे । गोपालकरञ्जे । सु चि ११ अ ।

**प्लवकः (ग)** । पु । प्लक्षवृक्षे । रा नि व ११ । भेके । मे । (ग) । वानरे । मे । प्लवपक्षिणि । श च । शिरीषवृक्षे । रा नि व ९ ।

**प्लवगति** । पुं । भेके । श च ।

**प्लवङ्गः** । पुं । वानरे । अम । प्लक्षवृक्षे । रा नि व ११ । मृगे । श च ।

**प्लवङ्गम** । पुं । वानरे । पशु । भेके । अम ।

**प्लवधान्यम्** । क्ली । परिपेलद्रव्ये । रा नि व ८ ।

**प्लवनम्** । क्ली । सन्तरणे । सु नि १४ ।

**प्लक्ष** । पु । (Thespesia populnea Syn Hibiscus populnes, or Ficus infectoria) Waved-leaf fig tree पर्कटीवृक्षे । পাকুড়গাছ । गांजौवँटि । ष्मा । हि पाकड़ि, पखर, गजदन्तसहोरा । तें गङ्गरयजुव्वि । ता पोरिश्रावि । तत्पर्य्याया,— पर्कटि, पर्कटी, कन्दराल, कमण्डलु, कमण्डलु तरु, सुपार्श्व, पीतन, कपीतन, दृढप्ररोह, प्लवक, प्लवङ्ग, महाबल, गर्द्दभाण्ड, श्वरोह शाख, चीरीवृक्ष, प्लक्षा, जटि, प्लीचा । सु सू ३८ अ न्यग्रोधादि । महाङ्कस्वभेदेन द्वौ भेदौ । सा गुणा—कटु कषाय शीतल रक्तदोषजित् मूर्च्छाभ्रमप्रलापहरश्च । ह्रस्वोऽपि महतोगुणं लभते । रा नि व ११ । व्रणघ्न श्लेष्मपित्त शोष शोथविसर्पघ्नश्च । मद व ५ । अश्वत्थवृक्षे । मे ।

**प्लक्षा** । स्त्री । प्लक्षवृक्षे ।

**प्लक्षेश** । पु । गर्भभाण्डवृक्षे ।

**प्लावग** । पु । मर्कटे । वै निघ ।

**प्लावनम्** । क्ली । द्रवद्रव्यस्योर्द्ध्वगतौ । ৩ৎलान ।

**प्लावी (इन्)** । पुं । पक्षिणि । वै निघ ।

**प्लाक्षम्** । क्ली । प्लक्षफले । अम ।

**प्लि(प्ली)ह (हा)** । पु, स्त्री । जाठररोगविशेषे । पिले । निदानलक्षणे—"वात श्लेष्मानुद्धय कुपितौ यस्य तिष्ठति । शनैः परितुदन् पार्श्वं प्लीहा तस्याभिवर्द्धते ॥" च सू १८ अ । स चतुर्विध । "विदाह्यभिष्यन्दिरतस्य जन्तो प्रदुष्टमत्यर्थमसृक् कफश्च । प्लीहाभिवृद्धिं कुरुत प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति । तद्वामपार्श्वे परिवृद्धिमेति विशेषत

सीदति चातुरोऽत्र । मन्दज्वराग्नि कफपित्त लिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ।" भा नि । "श्रमोभ्रमोविदाहश्च वैवर्ण्यं गात्रगौरवम् । मोहो रक्तोदरत्वञ्च ज्ञेयं रक्तजलक्षणम् ॥ सज्वरः सपिपासश्च सदाहो मोहसंयुतः । पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ॥ प्लीहा मन्दव्यथः स्थूलः कठिनो गौरवान्वितः । अरोचकयुतः शीतः प्लीहा कफज उच्यते ॥ नित्यमानद्धकोष्ठः स्यान्नित्योदावर्त्त पीडितः । वेदनाभिः परीतश्च प्लीहा वातिक उच्यते ॥" भा । [ शच ।

**प्लीहघ्नः** । पु । रक्तरोहितकवृक्षे । वक्तवोटा ।

**प्लीहघ्नी** । स्त्री । शरपुङ्खायाम् । वन नील ।

**प्लीहशत्रुः** । पु । रोहितकवृक्षे । प मु । हनुषा वृक्षभेदे । रा नि व ४ ।

**प्लीहहन्त्री** । स्त्री । हनुषायाम् ।

**प्लीहारिः** । पु । अश्वत्थवृक्षे । श च । शर पुङ्खायाम् । वै निघ ।

**प्लीहोदरम्** । क्ली । उदररोगविशेषे । लक्षणम् —"विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थं मसृक् कफश्च । प्लीहाभिवृद्धिं सततं करोति प्लीहोदरं तत् प्रवदन्ति तज्ज्ञाः ॥" सु नि ७ अ । अन्यच्च यथा—"वर्णान्यत्वं महत्त्वञ्च काठिन्यञ्च विशेषतः । प्लीहोदरे विजानीयाद्देहे च कृशतां तथा ॥' ज द ५२ अ ।

**प्लोचा (न्)** । पु । प्लक्षवृक्षे । पाकुड़ गाछ ।

**प्लुतगतिः** । पु । शशके । थवृगोश । वै निघ ।

**प्लुषः** । पुं । अग्निदाहे । व्याकरणम् ।

**प्लुष्ट** । पु । अग्निदग्धे । अम ।

**प्लुष्टिः** । पुं । अग्नौ । आगुन ।

**प्लोतः** । पु । कपटे । सु सू ५ अ । कापड़ ।

**प्लोषः** । पु । दाहे । अम ।

**प्सा** । स्त्री । भक्षणे । भक्ते । हे च ।

**प्सानम्** । क्ली । भक्षणे । त्रिका ।

---

# फ

**फः** । पु । जृम्भानिस्कारे । विश्व । झञ्झावाते । झड़ । मे ।

**फञ्जिका** । स्त्री । भार्ग्याम् । वामुनहाटी । प मु । सु सू ३८ अ । दन्तीवृक्षे । वै निघ । देवताडवृक्षे । दुरालभायाम् । श च । आखु कर्ण्याम् ।

**फञ्जिप(पु)त्रिका** । स्त्री । आखुपर्ण्याम् । प मु । (पुत्रिका) । वनस्पतिभेदे । वै निघ ।

**फञ्जी** । स्त्री । भार्ग्याम् । वामुनहाटी । रा नि व ६ । चद सि यो हिक्काश्वास चि । एतत्पर्य्यायः कफघ्नम् । अपि । हृद्दारकविशेषे । रा नि व ३ । दन्तिवृक्षे । योजनवल्ल्याम् । वै निघ ।

**फञ्जीकरः** । पुं । फञ्ज्याम् । वै निघ ।

**फञ्ज्यादिपञ्चकम्** । क्ली । फञ्जिका जीवनी पद्मा मर्कटी चुचुक इति वनजपञ्चशाकवर्गः । गुणाः—वातदाहित्व वाहित्व दीपनत्व रुच्यत्वञ्च । श्लेष्मा कृमपर कण्ठ स्नेहपि मदगमध्ये रुच्यत । सर्वेषु दीपन पाचन रुच्य बलवर्द्धकरश्च । त्रिदोषशमन पथ्य दाहो .... । रा नि व ७ ।

**फट (टा)** । पु, स्त्री । अहिफणायाम् । अम । जटा ।

**फटकी** । स्त्री । स्फटिकायाम् । फट्‌किरि । वै निघ २ भ वय चि क्षयकेशरिरसे ।

**फटिकारी** । स्त्री । (Alumen) Alum स्वनामख्यातक्षारविशेषे । फट्‌किरि । हि फिटु करी । ते पतिकुराम । ता पतिकारम । दा फटकी । गुर्ज फकरी । बम फटिकी । गुणाः— सर्वाहिणी सङ्कोचकरी अपूतिकरी बालविमूच्याम् उदरामये नासारक्तस्रावे च हिता । "फटी च कटुका स्निग्धा कषाया प्रदरापहा । मेहकृच्छ्रघ्नी शोषदोषघ्नी हृदरदा ।" रा नि व १३ ।

**फडिङ्गा** । स्त्री । झिल्लीकीटे । फड़िङ् । श च ।

**फणः (णा)** । पुं, स्त्री । सर्पफणायाम् । अम । प्राणमार्गसुभयतः स्रोतोमार्गप्रतिबद्धे मर्म्मणि । सु शा ६ अ ।

**फण(णा)क(ध)र** । पु । सर्पे । शर ।

**फणभृत्** । पुं । सर्पे । हे च ।

**फणाभरः (वान्)** । पु । सर्पे । हारा । श र ।

**फणाश्मः** । पु । पनसवृक्षे । কাঁটাল গাছ ।

**फणि** । पुं । विषे । श सा स गदमुरारिरसे ।

**फणिका** । स्त्री । कृष्णोदुम्बरिकायाम् । वै निघ ।

**फणिके(श)सरम्** । क्ली । नागकेसरपुष्प । रा नि व ६ ।

**फणिखेल.** । पु । लावपक्षिणि । वै निघ । भारतीपक्षिणि । ভাবুই পাখী । त्रिका ।

**फणिचम्पक** । पु । वनचम्पकवृक्षे । বনজ চাঁপা গাছ । रा नि व १० ।

**फणिजिह्वा** । स्त्री । महासमङ्गायाम् । महाशतावर्य्याम् । रा नि व ४ ।

**फणिजिह्विका** । स्त्री । श्वेतशारिवायाम् । महाशतावर्य्याम् । वै निघ ।

**फणिज्ज(ज्झ)क** । पु । क्षुद्रपत्रतुलसीभेदे, गन्धतुलस्याम् । रा नि व १० । वा सू १५ अ । मधुरजम्बीरे । मरुद्द इति लोके । च सू २७ वि ८ अ । पलाशवृक्षे । भैष ने रो चि । मरुवकवृक्षे ।

**फणिप्रिय** । पु । वायौ । श र ।

**फणिफेन** । पु । अहिफेने । আফিম্ । रत्ना ।

**फणिभारिका** । स्त्री । कृष्णोदुम्बरवृक्षे । কাকডুমুর । वै निघ ।

**फणिलता** । स्त्री । नागवल्लीलतायाम् । পাণ গাছ । रा नि व ११ ।

**फणिवल्ली** । स्त्री । नागवल्ल्याम् । পাণ গাছ । रा नि व ११ । वै निघ २ भ च्य चि नवरवराज मृगाङ्के । [ वै निघ ।

**फणिसम्भारा** । स्त्री । कृष्णोदुम्बरिकायाम् ।

**फणिहन्त्री** । स्त्री । गन्धनाकुल्याम् । गन्धरास्ना । रा नि व ७ । [ निघ ।

**फणिहारी (इन्)** । पु । कपिकच्छ्वां । वै

**फणिहृत्** । स्त्री । क्षुद्रदुरालभायाम् । रा नि व ४ ।

**फणी (इन्)** । पु । मरुवकवृक्षे, क्षुद्रपत्रतुलस्याम् । श्वेतचन्दने । च द वा व्या चि महासुगन्धतैले । सर्पे । स्त्री (नी) । सर्पिण्याम् । সর্পিণী । सर्पस्त्रियाम् । रा नि व ५ ।

**फणीयम्** । क्ली । मरुकाष्ठे । वै निघ ।

**फण्ड** । पुं । जठरे । পেট ।

**फत्कारी (इन्)** । पु । पक्षिणि । श च ।

**फम्फणः** । पु । सन्निपाते । वै निघ ।

**फरङ्गरोग.** । पु । See फिरङ्गरोग ।

**फरेन्द्र** । पु । जम्बूवृक्षे । वै निघ ।

**फर्फरी** । स्त्री । कवाटे । পাশা । वै निघ ।

**फलम्** । क्ली । आम्रादौ प्रसिद्धम् । ফল । "फलेषु परिपक्व यत् गुणवत्तदुदाहृतम् । बिल्वादन्यत्र विज्ञेयमाम तद्धि गुणाधिकम् । फलेषु सरस यत् स्यात् गुणवत्तदुदाहृतम् । द्राक्षाबिल्वशिवादीनां फल शुष्क गुणाधिकम् । फलतुल्यगुणं सर्व्वं मज्जानमपि निर्दिशेत् ।" भा । इन्द्रयवे । रा नि व ८ । वै निघ क्री चि मुस्तादि । वा सू १५ अ वत्सकादिव । त्रिफलायाम् । मे । सा कौ दूर्व्वाद्यतैले । भैष अरिमेदा तैले । च द अशो चि । शणपुष्प्यां । अम । क्षीरौषधि । श र । जातीफले । त्रिका । र सा स सर्व्वतोभद्ररसे । भैष वा व्या चि गन्धद्रव्यकथने । च द योनिरो चि । भैष सु रो चि स्वल्पखदिरवट्यां । शस्ये । अम । कक्कोलके । কাঁকলা । मे । फाले । हे च । मदनफले । प सु । च द वमने । च द वा व्या चि एकादशशतिकमहाप्रसारणीतैले । पु । कुटजवृक्षे । श र ।

**फलक** । पुं । अस्थिखण्डे । जटा । नागकेशरवृक्षे । श च । नितम्बे । क्ली । प्रसाधनार्थं जलरक्षणाधारविशेषे । কলসী বসাইবার ঘরাক্কে । सु सू ४१ अ ।

**फलकण्टक.** । पु । पर्पटके । ক্ষেৎপাপড়া । वै निघ । स्त्री (का) । इन्दीवरायाम् । वै निघ ।

**फलकर्कशा** । स्त्री । वनबदरवृक्षे । सप्त ।

**फलकी (इन्)** । पु । मत्स्यविशेषे । চিতল, ফলুই মাছ । त्रिका । तत्पर्य्यायौ,—फलिफली । गुणा,—स्वादुत्वं गुरुत्वं स्निग्धत्वं बलप्रदवर्द्धनत्वञ्च ।

**फलक्षण** । पु । करञ्जवृक्षे । वै निघ । पानीयामलके । श च ।

**फलकेशर** । पु । नारिकेलवृक्षे । जटा ।

**फलकोश (ष) (क)** । पुं । वृषणे । মিশ্রি । त्रिका ।

**फलङ्कया ।** स्त्री । महाश्रावणिकायाम् । रा नि व ५ ।

**फलग्रहिः ।** पु । फलितवृक्षे । शब्दर.।

**फलग्राही (इन्) ।** पुं । वृक्षे । भरत्रि ।

**फलघृतम् ।** क्ली । पक्वघृतविशेषे । तत् योनि रोगमात्रे हितम् । अत्र मेदामहामेदयोरभावे शतावरी द्विगुणा, काकोलीक्षीरकाकोल्यभावे अश्वगन्धा द्विगुणा । काकोल्यौ इति द्वैगुण्यार्थं प्रयोग । जीवकर्षभकयोरभावे विदारीकन्दो द्विगुणो देय । भा म ४भ यो रो चि । पाठ —"मञ्जिष्ठा मधुक कुष्ठ त्रिफला शर्करा बला । मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम् । अजमोदा हरिद्रे द्वे हिङ्गु कटुकरोहिणी । उत्पल कुमुद द्राक्षा काकोल्यौ चन्दनद्वयम् । एतेषां कार्षिकैर्भागै घृतप्रस्थ विपाचयेत् । शतावरीरस क्षीरं घृताद्देय चतुर्गुणम् ।" च द योनि व्या चि । अन्यच्च— "महाघरे द्वे त्रिफला गुडूची सपुनर्नवा । शुकनासा हरिद्रे द्वे रास्ना मेदा शतावरी । कल्कीकृत्य घृत प्रस्थ पचेत् क्षीरचतुर्गुण ॥" च द योनि व्या चि । जीवद्वत्सैकवर्णाया गो घृत ४ श । शतमूलीरस १६ श. दुग्ध १६ श । कल्कार्थं मेदा अभावे (गुडची) मञ्जिष्ठा यष्टिमधु कुष्ठ त्रिफला शर्करा बला (वेलेड़ा) शृङ्गभूमिकुष्माण्ड काकोली अश्वगन्धामूल यमानी हरिद्रा दारुहरिद्रा हिङ्गु कटुकी उत्पल (नीलशुन्दी) द्राक्षा क्षीरकाकोली चन्दन रक्तचन्दनमेषां प्र २तो । अन्यत्—कल्कार्थं —श्वेतपीतभिण्टीमूल त्रिफला गुडूची पुनर्नवा (श्वेतपुष्पा) चर्मचटक (चामचिके) । हरिद्रा दारुहरिद्रा रास्ना मेदा शतावरी एषां मिलित्वा १ श । जीवद्वत्साघृत ४ श । दुग्ध १६ श ।

**फलचमसम् ।** क्ली । वटत्वक्वल्कले । हे नि घ ।

**फलचीरकः ।** पु । चीरकनामगन्धद्रव्ये । रा नि व १२ । [ श र. ।

**फलजाति' (ती) ।** स्त्री । जातीफलवृक्षे ।

**फलत्रय(त्रिक)म् ।** क्ली । त्रिफलायाम् । रा नि व २२ । मिलितद्राक्षापरूषकाश्मर्यैतिफलत्रये ।

**फलत्रिकादि' ।** पु । पाण्डौ कषाये । फल त्रिकामृतावासातिक्ताभूनिम्बनिम्बज । क्वाथ क्षौद्र युतो हन्यात् पाण्डुरोगं सकामलम् ॥ रस र ।

**फलद. ।** पु । वृक्षे । भरत्रि ।

**फलद्रुमः ।** पु । फलितवृक्षे । वै.निघ ।

**फलपश्चाम्लम् ।** क्ली । अम्लफलपञ्चके । रा नि व २२ ।

**फलपाकः ।** पु । करमर्दवृक्षे । शब्दर । पानीयामलके । श च ।

**फलपाकान्ता ।** स्त्री । ओषध्याम्, धान्यादौ । अम ।

**फलपाकी (इन्) ।** पुं । गर्दभाण्डवृक्षे । र मा ।

**फलपिप्पली ।** स्त्री । फलवीजे । सु सू ४३ अ ।

**फलपुच्छः ।** पु । कन्दशाकविशेषे, वरष्णाली । त्रिका ।

**फलपुष्पा (ष्पी) ।** स्त्री । पिण्डीखर्जूरीवृक्षे । रा नि व ११ ।

**फलपूरः (क') ।** पुं । मातुलुङ्गवृक्षे । प सु । मद व ६ । वै निघ २भ आकल्लकादिचूर्णे । च द र.पि चि ।

**फलप्रियः ।** पु । द्रोणकाके । रा नि व १९ ।

**फलप्रिया ।** स्त्री । प्रियङ्गौ । रा नि व १२ ।

**फलमत्स्या ।** स्त्री । गृहकन्यायाम् । घृत कुमारी । हे निघ ।

**फलमुख्या ।** स्त्री । अजमोदायाम् । वन योग्रान । रा नि व ६ ।

**फलमुण्डः ।** पु । नारिकेलवृक्षे । श र ।

**फलमुद्गरिका ।** स्त्री । खर्जूरवृक्षभेदे । श मा ।

**फलयुग्मा ।** स्त्री । इन्दीवरायाम् । वै निघ ।

**फलराज. ।** पु । खर्बुजेति ख्याते फलशाके । थर्मुजा । हे निघ ।

**फलवर्गः ।** पु । फलगणे । दाडिमामलकवदर कोलकर्कन्धुसौवीरशिम्बितिकाफलकपित्थमातुलुङ्गा मामातक करमर्द पियाल लकुच भव्य पारावत वेत्र फल प्राचीनामलक-तिन्तिडीक नीप कोशाम्रामलिका नारङ्गजम्बीरप्रभृतिषु । एषां गुणा —स्वस्वपर्याये द्रष्टव्या ।

**फलवर्त्ति. (र्त्ती) ।** स्त्री । मलशोधिन्या वर्त्तौ । भैप व शूल चि । "इत्वाध्मतौ गुदे क्षिप्ता श्लक्ष्णा स्याङ्गुष्ठसन्निभा । मलप्रवर्त्तिनी वर्त्ति फलवर्त्तिश्च सा स्मृता ॥" भा ।

**फलवर्त्तुल. ।** पुं । तरम्बुजवृक्षे । रा नि व,० ।

**फलवाटिका** । स्त्री । काकोदुम्बरिकायाम् ।

**फलवान्** । त्रि । फलिते । श्रम ।

**फलविरेचनम्** । क्ली । हरीतक्यादौ । तदुक्त —"हरीतक्य विडङ्गानि खर्ज्जूराणि परुषकम् । आरग्वधोऽथामलकं हरीतकी विभीतकम् । कम्पिल्लकीपचिते च वपुषच सुकूलकम् । नीलिका वकुलं पीलु भवेत् फलविरेचनम् ।" वा चि ६७ अहय ।

**फलविषम्** । क्ली । यस्य फले विषं वर्त्तते । तच्च द्वादशविधम्—कुमुद्वती वेणुका करम्भ महाकरम्भ कर्कोटकरेणुकखद्योतकचर्म्मरीभगन्धासपघातिनन्द नसारपाकानीति । तदुक्तं—"सुश्रुतोक्त फलविषे दाहोऽन्नद्वेष एव च ।" सु कल्प २ अ ।

**फलवीज** । पुं । खर्ज्जूरमिति ख्याते फलशाके ।

**फलवृन्ताक** । पु । श्वेतवार्त्ताकभेदे ।

**फलवृत्त (क)** । पु । पनसवृक्षे । कँठाल गाछ । रा नि व ११ ।

**फलशाकम्** । क्ली । फलप्रधानवृक्षवर्गे । यथा —'कूष्माण्ड कालिङ्ग कलिङ्ग चिभटं पटोलतुम्बच तथाच तुण्डी । वीजाढ्यकर्कोटककारवेल्ल कोषा तकी वालुफलानि चैव ॥" भवि १६अ । एषां गुणादिकं पर्य्याये द्रष्टव्यम् ।

**फलशाखी (न्)** । पु । पीलुवृक्षे ।

**फलशाडव** । पु । दाडिमवृक्षे । रा नि व ११ । विका ।

**फलशैशिर** । पु । बदरवृक्षे । रा नि व ११ ।

**फलश्रेष्ठ** । पु । आम्रवृक्षे । श च ।

**फलश्रेष्ठा** । स्त्री । त्रिफलायाम् । वै निघ ।

**फलषाडव** । पु । दाडिमे ।

**फलस** । पु । पनसवृक्षे । कँटाल ।

**फलसम्बद्ध** । पुं । उदुम्बरवृक्षे । वै निघ ।

**फलसम्भारा** । स्त्री । काकोदुम्बरिकायाम् । वै निघ ।

**फलस्नेह** । पुं । अक्षोटवृक्षे । रा नि व ११ ।

**फला** । स्त्री । इन्दीवरायाम् । झिञ्झिरीटावृक्षे । रा नि व ४ ।

**फलाढ्या** । स्त्री । काष्ठकदल्याम् । दन कला । रा नि व ११ ।

**फलात्मिका** । स्त्री । कारवेल्याम् । करला, उच्छे । वै निघ ।

**फलादन** । पु । शुकपक्षिणि । हे च । त्रि । फलभक्षके । [ प सु ।

**फलाधमः** । पु । लकुचवृक्षे । मान्दार गाछ ।

**फलाध्यक्ष (क्षा)** । त्रि । राजादनवृक्षे । खिर्नी । भा ।

**फलानालु** । पु । पानशालु इति प्रसिद्धे कन्दशाके । प सु । वृक्षाख्ये । रा नि व ६ ।

**फलान्त** । पु । वंशे । श मा ।

**फलान्नम्** । क्ली । फलोपकरणकृतान्ने । गुणा —"फलान्न स्याद्रुचिकरं गुरु फलसमं गुणे ।" वै निघ । वृक्षाख्ये । रा नि व ११ । [ २ अ ।

**फलाम्बु** । क्ली । द्राक्षादिसिद्धजले । वा चि

**फलाम्ल** । प । अम्लवेतसे । रा नि व ६ । च चि २ अ वृक्षाम्ले । क्ली । अम्लरसविशिष्टफलमात्रे । च चि २ अ मातुलुङ्गरसदाडिमरसादौ, महाषट् कटुतैले ।

**फलाम्लपञ्चकम्** । क्ली । जम्बीरनागरङ्गाम्ल वेतसचिञ्चामातुलुङ्गेषु । गोँड़ा, नारांगा, अम्ल-वेतस, तेँतुल, टाबा ।

**फलारिष्ट** । पु । अर्शोऽधिकारे अरिष्टभेदे । —"हरीतकीफलप्रस्थं प्रस्थमामलकस्य च । विशालाया दधित्थस्य पाठाचित्रकमूलयोः । द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपां । पादावशेषे पूते च रसे तस्मिन् प्रदापयेत् । गुडस्यैकां तुलां वैद्य सन्धाय घृतभाजने । पचस्थितं पिबेदेनं यहण्यर्शोविकारवान् ॥" च चि ८ अ ।

**फलालु** । पुं । आलुकभेदे । पानीशालू । "फलालु स्यात् ग्रन्थिफलस्तथा चपफल स्मृत ॥"

**फलाशन** । पुं । शुकपक्षिणि । कारण्डवृक्षे ।

**फलासव** । पुं । द्राक्षा खर्ज्जूरादि-फलोद्भव षड्विंशत्यासवेषु । च सू २५ अ ।

**फलास्थि** । पुं । नारिकेलवृक्षे । वै निघ ।

**फलाह्वी** । स्त्री । चोरिकोवृक्षे । वै निघ ।

**फलि (ली) (इन्)** । पु । मत्स्यविशेषे । फलुई माछ । गुणा—"फलि मादर्गुरु विष्ट बलकृच्छुक्रवर्द्धन ।" राज १प ।

**फलिका।** स्त्री। पारिभाषत्वे। निष्पावे। वर्वटी। रा नि व १६। फलिमत्स्ये।

**फलितः।** पुं। वृक्षे। धर्मणि। स्त्री। रक्त लतायाम्।

**फलिनः।** पुं। श्योणाकवृक्षे। पनसवृक्षे। रा नि व ११। अरिष्टकवृक्षे। रीठा। वै निघ।

**फलिनी।** स्त्री। प्रयोगे प्रशस्तसमफलाया हृद्गदि। च सू १४। सुपल्याम्। ताल्मूली। प्रियङ्गौ। रा नि व १२। लघ्वाकन्दे। रा नि व ० वै निघ कल्याणघृते। गन्धप्रियङ्गौ। वा सू १५ एलादि। त्रायमाणायाम्। वै निघ २भ चयचि द्राक्षासवे। मधरसककृष्चे। मेहेन्दी। व निघ २भ दाह चि प्रलेपे। लाङ्गलीवृक्षे। विषलाङ्गुलिया। चम। वै निघ २भ वा व्या चि विषगर्भतैले। श्योणाकवृक्षे। दुग्धिकायां। थिकई। र मा। अग्निशिखायाम्। कटुतुम्ब्याम्। निष्पावीभेदे। वर्वटी।

**फली।** स्त्री। सुपल्याम्। ताल्मूली। प्रियङ्गु वृक्षे। प सु। शकनासायाम्। चर्म्मकषा। वै निघ। आम्रातकवृक्षे। फलिमत्स्ये। श मा।

**फलीशः।** पु। पारिशपिप्पले। अश्वत्थविशेष, पलाशपिपुल। वै निघ।

**फलूषः।** पु। लताविशेषे। उषा। [ श र।

**फलेग्राहि.** ( **ही** (**इन्**) )। पुं। फलितवृक्षे।

**फलेन्द्रः।** पु, स्त्री। राजजम्बुवृक्षे। बड जाम। फलेन्दा जाम। भा।

**फलेपाकी।** स्त्री। गन्धमुखे। गरुडाङ्गुलिया विशेष। प सु।

**फलेपुष्पा।** स्त्री। द्रोणपुष्प्याम्। घलघसा। भा। [ प सु।

**फलेरुहा।** स्त्री। पाटलवृक्षे। पारुल गाछ।

**फलेलाङ्कु.।** पु। जीवनवृक्षे। छारा।

**फलोत्तमा।** स्त्री। दुग्धिकायाम्। शीकई। र मा। कपिलद्राक्षायाम्। त्रिसमिम्। त्रिफलायाम्। रा नि व ११।

**फलोत्पत्ति.।** पुं। आम्रवृक्षे। श च।

**फलोनि।** स्त्री। स्नोयोनौ। वै निघ।

**फल्गुः।** स्त्री। काकोदुम्बरिकायाम्। शाक द्रुमुत। र मा। "तर्पणं तु हन फल्गु गुरु विष्टम्भि शीतलम्।" च सू २०भ। शाकद्रुम दे। च सू ३ भ.। पुं। वसन्तर्त्तौ। पित्तश्लेष्मोलवणसन्निपातज्वरे। भा। पटवासचूर्णे। आविर। चि। च्यवादि। विका। [ टी म।

**फल्गुनः (नालः)।** पुं। फाल्गुनमासे। च

**फल्गुनी।** स्त्री। काकोदुम्बरिकायाम्। रा नि व ११। च चि २भ।

**फल्गुफलम्।** क्ली। काकोदुम्बरिकाफले। चि यो र चि चि सिद्धसमयोगे।

**फल्गुमूलम्।** क्ली। काकोदुम्बरिकामूले। च द सि यो मूर्च्छा चि वृहत्पञ्चगव्यघृते।

**फल्गुवाटिका (टी)।** स्त्री। काकोदुम्बरिकायाम्। रा नि व ११।

**फल्गुवृन्तः (न्ता) (कः)।** पुं, स्त्री। पीत लोध्रवृक्षे। श्योणाकविशेषे। रा नि व ९।

**फल्यम्।** पुं। पुष्पे। पुष्पकलिकायाम्। श च।

**फलविन्।** पु। मत्स्यविशेषे। फलुई माछ। श मा।

**फा॑।** पुं। सन्तापे।

**फाटकी।** स्त्री। स्फट्यां। फट्‌किरि। रा नि व १३।

**फाणिः।** स्त्री। गुड़। उषा। करम्भे।

**फाणितम्।** क्ली। अर्द्धावर्त्तितेक्षुरसे। गुड विशेषे। झोलागुड़। सु सू ४४भ। लक्षणम्— "इक्षो रसस्तु यः पक्व किञ्चिद्गाढो बहुद्रव। स एवेक्षुविकारेषु ख्यात फाणितसज्ञया॥" गुणा— "फाणित गुर्व्वभिष्यन्दि वृंहणं कफपित्तकृत्। वातपित्तश्रमान् हन्ति मूत्रवस्तिविशोधनम्॥" भा।

**फाण्ट (का)।** पु। कषायभेदे। कल्कितद्रव्यपलं चतुष्पलं उष्णतोये क्षिप्ता चषकाच्छ शरावाहृतं सस्थाप्य अथ मर्दित वस्त्रपूतञ्च फाण्ट उच्यते। कुट्टित द्रव्य १ प ४ पल उष्ण जले मृत्पात्रे वा প্রস্তরপাত্রে ক্ষিপ্ত করিয়া ক্ষণকাল ঢাকিয়া পরে মর্দিত ও বস্ত্রপূত করিবে। क्षुण्णद्रव्यस्य पलं पलचतुष्टयमितसुष्णोदकञ्च एकत्र स्रावयेत्। "क्षुण्णद्रव्यपले सम्यक् जलमष्टगुणक्षिपेत्। पात्रे चतुष्पलमितं ततस्तु स्रावयेज्जलम्। सोऽयं पूतो द्रव्यफाण्ट, ॥" प म १ख। शार्ङ्, १ए

द्रवाख्याया वर्त्तीर्दीर्घां समाचरेत्। तास्तु समिहिता दीर्घा. पीठस्थो दि धारयेत्। वेल्लयेद्वेल्लनेनैता यथैका दर्पटा भवेत्। ततस्तुरिकया तास्तु खण्डशा एव कर्त्तयेत्। ततस्तु वेल्लयित्वैव सद्देकेन च खेदयेत्। आखिखण्डं घृत तोयं मिश्रितं सद्देकं भवेत्। तत सद्देय तां खीर्तु विदधीत पृथक् पृथक्। पुनस्तां वेल्लनेनैव यथा स्याम्मण्डला कृति। ततस्तां सुपचेदाज्ये भवेयुः पुटाः स्फुटाः। सुगन्धया शर्करया तदुक्तु खनमाचरेत्। सिद्धैषा फेनिका नाम्नी मण्डकेन समा गुणे। तत्र किञ्चि न्मधुरिय विशेषोऽयमुदाहृतः ॥" भा।

फेणि(नि)लः। पु। Sapindus trofoliatus, or S Trifoliatus or S Detergens Rox) Soapnut tree रीटा करञ्ज। रा नि व ९। रीठी। हिं रिठा। तै कुकुदुकायल। मदरवृक्षे। रा नि व ११। स्त्री। बदरीफले। भा म १भ ज्व चि मदालाबादितैले।

"फेनिले मधुकं यथा।" रीठाफले। त्रिका। मदनफले। मे।

फेणि(णि)लच्छदः। पुं। कोलिवृक्षे। कूल गाछ। "दये खये" इति प्रसिद्धे वृक्षभेदे।

फेणि(नि)ला। स्त्री। सोमराज्याम्। वै निघ।

फेर (रण्ड:)। पुं। शालावृके। शृगाल। रा नि व १९।

फेरवः। पुं। शृगाले। रा नि व १९।

फेरुः। पु। शृगाले। रा नि व १९।

फेलः (क)। त्रि। उच्छिष्टे। श र।

फेला (लि:,ली)। स्त्री। भुक्तावशिष्टे। च म। जटा। श र।

फोगः। पुं। शाकविशेषे। वै निघ।

फोग्डालुः। पुं। आलुकविशेषे। फोग्डालुको इति कोङ्कणदेशे प्रसिद्धा। गुणा—वातश्लेष्म कटूष्ण दीपनश्च। रा नि व ०।

---

## व

व। पुं। कलसे।

वकः। पु। प्रवगजातीयपक्षिणि। बक् पाखी। वगलिवृक्षे। वकफूलेर गाछ। रा नि व १९।

वकदर्शी (र्शिन्)। पुं। पारावते। पायरा। वै निघ।

वकपुष्पा। स्त्री। शिवलिङ्गिन्याम्। वै निघ।

वकुलः। पु। स्वनामख्यातवृक्षे। वकुल गाछ। हि मौलसरी। तत्पर्याया,—केसर केसर सिंहकेसर वकुल वरलब्ध सीधुगन्ध सीधुगन्ध मकुल मुकुल स्त्रीमुखमधु दोहल मधुपुष्प सुरभि भ्रमरानन्द स्थिरकुसुम शारदिक करक विशारद गूढपुष्पक धन्वी मदन मद्यामोद चिरपुष्प। गुणा—"वकुलस्तुवरोऽनुष्ण कटु पाकरसो गुरु। कफपित्तविषश्वित्रकृमिदन्तगदा पहः॥" फलगुणा—वकुल मधुर ग्राही दन्तस्थैर्य करं परम्॥ भा। स्त्री। कटुकायाम्। कटुकी। रा नि व ६।

वकेरुका। स्त्री। वलाकायाम्। त्रिका।

वकोटः। पुं। वकपक्षिणि। त्रिका।

वटुः। पुं। तिवर्णशिम्बी। रा नि व १८।

वडवा। स्त्री। घोटक्याम्। अम।

वडवासुतौ। पुं। अश्विनीकुमारौ। श च

वडिशः। पुं। मत्स्यवेधनयन्त्रे। वडिश इवा हरणायशस्त्रविशेषे। सधानतया तीक्ष्णकण्टक प्रथमयवपत्रमुखश्च। सु सू ७श्च। "वडिशो चापि कर्त्तव्यौ प्रमाणेन षडङ्गुलौ। खानतस्तु तयोरेक एको नात्यानतो भवेत्। अर्द्धचन्द्राङ्गुल हन्त शेष कार्यं मुख तयो। अर्द्धचन्द्राकृतिमुखं कार्यं नात्यानतस्य तु। खानतस्थानत तथात् वडिशस्य शिखान्तरे। तन्त्रायस्तोऽन्तर स्यात् यावदर्द्धाङ्गुल मत॥" तन्त्रान्तरम्। सु टी ड।

वणिग्बन्धुः। पुं। नीलवृक्षे। श च।

वणिग्वहः। पुं। उष्ट्रे। श च।

वदर' (क')। पु, स्त्री। Fruit of the jujube वृहत्कोलीवृक्षे, राजवदरे। वर्ड कूल गाछ। हि वेरी, बेर, वयेर। तै रेगुचेट्टु, रेंघ। उत् कुड़ि। वम् बोर। ता रेयन्ति। तत्पर्याया।

—सौवीर सौवीरक कोलिमाम गूढफल वालेष्ट फलशैशिर दृढवीज ह्रस्वफल कण्टकी वक्र कण्टक सुरस सुफल स्वच्छ कर्कन्धु बदर कोला कोली कुवली स्वादुफला स्थूलवल्ली पिच्छिला कुवल। चदपि न्व चि शिरोलिपे। क्षुद्रकोल्याम्। छोटि कुल। हेच। चसू४च विरेचने। देवसर्षपवृक्षे। राजनि व८। कोलि साधारणे। कुलगाछ। म साधारणवोर। क थिरद। बदरञ्च सौवीरकोलकर्कन्धुभेदेन त्रिविधम्। लक्षणगुणा—"पक्वमाम सुमधुरं सौवीर बदरं महत्। सौवीर बदर शीत भेदन गुरु शुक्रलम्। बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम्॥" इति। सौवीर लघु सम्पक्व मधुरं कोलमुच्यते। कोलन्तु बदर ग्राहि रुच्यमुष्णञ्च वातलम्। कफपित्त करञ्चापि गुरु सारकमीरितम्॥" इति। "कर्कन्धु क्षुद्रबदरम्। अम्ल स्यात् क्षुद्रबदरं कषायं मधुरं मनाक्। स्निग्धं गुरु च तिक्तञ्च वात पित्तापहं स्मृतम्॥" भा। सा गुणा—बदरं मधुरं कषायमम्लं, परिपक्व मधुराम्लम्, उष्णं रुच्यं कफकरम् अतीसाररक्तश्रमशोषघ्नम् अपाचकञ्च। बदरस्य पत्रलेप ज्वरदाहघ्न। त्वक् विस्फोटघ्नम। बीजं नेत्ररोगे हितम्। राजनि व११। अम्ल मधुर स्निग्धं ग्राहि श्रमघ्नञ्च। अचि १०च। लघु ग्राहि रुच्यमुष्णञ्च। शुष्क भेदि अपिक्वत् लघु तृष्णावातघ्नञ्च। मदव६। "पुराणं दृष्टमघ्नम ... दीपनं लघु।' राज २प। सेवफले। ... शिवराजनिघण्टु। शृगालकोल्याम्। शेयाकुल। न। तत्पर्य्याया,—घोण्टा गोपघोण्टा गोप ... हस्तिकोलि बदरीच्छदा शृगालकोलि ... दिर कर्कन्धू। कुक्कुटीपादपे। कार्पासवीजे। ... ह्रियमाणे। वा कल्प ६च। शेयाकुल।

...रत्रयम्। क्ली। हृहद्दर क्षुद्रबदर शृगाल ...लिकासु। चसू२च विरेचने। सौवीर कोल ...कन्धु। भा।

...रफली (वल्ली)। स्त्री। भूबदर्य्याम्। ...टे कुल। राजनि व११।

...रबीजम्। क्ली। बदरास्थनि। कुलेर ...टि। चसू४च।

...रा। स्त्री। आदित्यभक्तायाम्। हुड़हुड़िया। ...नि व४। कार्पासाम्। पसु। वराहक्रान्ता ...। वराक्रान्ता। एलापर्ण्याम्। मे। वाराही

कन्द। श्वेतविदार्य्याम्। श्वेत भूँइकुमड़ा। वैनिघ। विष्णुक्रान्तायाम्। विश्व

बदरामलकम्। क्ली। (Flacourtia cataphracta) पानीयामलके। हारा।

बदरास्थि। क्ली। बदरबीजे। कुलेर आँटि। संदह।

बदरास्थिमज्जा। पुं, स्त्री। तन्मज्जायाम्। कुल-आँटिर शस्य। गुणा—तृष्ण वीर्य्यबलप्रदत्वं। मदव६।

बदरि। स्त्री। बदरीवृक्षे। शब्द।

बदरिका। स्त्री। घोण्टायाम्। शेयाकुल। राजनि व८।

बदरि(री) पत्र[क]म्। क्ली, पुं। नखीनामगन्धद्रव्ये। राजनि व१२। जटा। बदरपत्र।

बदरी। स्त्री। बदरवृक्षे। बड़कुलगाछ मदव६। कपिकच्छ्वां। घोण्टाबदरे। राजनि २८। कार्पास्याम्। राजनि व४।

बदरीच्छद (पत्र)। पुं, क्ली। नखीनाम गन्धद्रव्ये। वैनिघ। कोलिपत्रे।

बदरीच्छदा। स्त्री। हस्तिकोलिवृक्षे। शेयाकुल। शङ्खमल्याम्। रमा।

बदरोपल्लव। पु, क्ली। कोलिकोमलपल्लवे। कुलेर कचि पाता। चदपिक्य शिरोलिपे।

बदरीफला। स्त्री। नीलशेफालिकायां। शमा।

बद्धगुद। पुं। उदररोगविशेषे। लक्षणम्—"यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा सहितैः पृथग्वा। सञ्चीयते तत्र मल सदोष क्रमेण नाड्यामिव सङ्करो हि। निरुध्यते चास्य गुदे पुरीष निरेति कृच्छ्रादपि चाल्पमल्प। हृन्नाभिमध्ये परि वृद्धिमेति यच्चोदरं विट्‌समगन्धिकञ्च। प्रच्छर्दयन् बद्धगुदी विभाव्य॥" सुनि१च। अन्यच्च यथा—"अल्पमल्प पुरीषन्तु कृच्छ्रादास प्रमुञ्चति। आध्मातकुक्षिर्यो वाजी तस्य बद्धगुदे बदेत्॥" वाद५२च।

बद्धपिक्की। स्त्री। शुण्ठी। शाठेर शूँठी।

बद्धफल। पुं। करञ्जवृक्षे।

बद्धमूलक। पु। चीरमूर्व्वायाम्। वैनिघ।

बद्धरसाम् (ल)। पुं। राजायक्षविशेषे।

आमविशेष। तत्पर्य्याया —चक्रलताम. मध्याम सितनामक वनेज्य मन्मथानन्द मदनेच्छाफल। कोमलफलगुणा —अम्ल कटु पित्त दाहकरत्व। पक्वस्य गुणा —स्वादु मधुर पुष्टि वीर्य्य बलप्रदत्व। रा नि व ११।

वद्धवल्कः। पुं। दारुचिनीति ख्याते मधुरद्रव्ये। वै निघ।

वद्धविट्कता। स्त्री। वायुजन्यरोगे। मल वद्धता। वै निघ।

वद्धशिखा। स्त्री। लघुनी। वै निघ। उच्च टायाम्। पु। शिशौ। मे।

वद्धामयपति.। पुं। ऋषभकौषधौ। वै निघ

वद्धोदरः। पुं। वद्धगुदे उदररोगे। च सिहि २ष। See वद्धगुद।

वधम्। क्ली। मारणे, हत्यायाम्।

वधक'। पुं। व्याधौ। मृत्यौ।

वधत्रम्। क्ली। अस्त्रे।

वधिर'। पु। वर्गे। सुगन्धद्रव्ये। ग्रामकर्पूरे। वै निघ। त्रि। श्रवणेन्द्रियरहिते। काला। बधिरत्वनिदानलक्षणे यथा—"यदा शब्दवहो वायु स्रोत आवृत्य तिष्ठति। शुद्ध श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते॥" मा नि। असाध्यता— "बाधिर्य्यमालक्ष्णोत्थ चिरोत्थञ्च विवर्ज्जयत्॥" भा। "श्लेष्मणानुगतो वायु नादो वा समुपेक्षित। उच्चैं कृच्छ्रात् श्रुति कुर्य्यात् बधिरत्व क्रमेण च॥" वा उ १७ष।

वधू'। स्त्री। माष्याम्। पृक्कायाम्। कर्पूरशाक, पिड़िং। अम। शारिवायाम्। अनन्तमूल। शठ्यां। शटी। मे।

वधूकपुष्प'। पुं। असनवृक्षे। पीत शाल।

वधूत्सवप्रसवः। पुं। रक्तशिग्र्वाम्। रा नि व १०।

वध्र(क)म्। क्ली। सीसके। अम।

वन्दफल'। पुं। करवृक्षे। श चि।

वन्दूकम्। क्ली। बन्धुजीवपुष्पे। गुणा— बन्दूकं श्लेष्म वातिह च। राज ५प।

वन्ध। पुं। शरीरे। हेम। आधौ। मनोव्यथा। मे मि।

वन्धकी। स्त्री। पुंश्चल्याम्। अम। व्यभिचारिणी।

वन्धनम्। क्ली। स्नायौ। वांधा। अम।

वन्धपत्रः। पुं। हिन्तालवृक्षे।

वन्धुः (न्धूः)(कः)। पु, स्त्री। बन्धुजीवद्रुमे। बांधुलि फूलेर गाछ। रमा। रा नि व १०। भा म ४भ च चि। (क) पीतशाले। पियाशाल। मे। See पीतशाल।

वन्धुकपुष्पः (कः)। पुं। बीजकवृक्षे। पियाशाल। रा नि व ९। ग्रीष्माकवृक्षे। शोणा गाछ। ष द अपकारी।

वन्धुजीवः (क)। प। (Pentapetes Phoenicea Wil) पुष्पवृक्षविशेषे। यस्य पुष्प मध्याह्ने विकसति, पराह्णे च सूर्य्योदये मुद्यति। बांधुलि फूलेर गाछ। रमा। हि दुपह रिया, गेजुलिया। म बांदुला। क वंदुरे। तें मकिमचेट्टु वेगसिमचेट्टु। वम् दुपारि। पञ्चा गुल्दुपारिया। तत्पर्य्याया—रक्तक रक्तजीवक बन्धू बन्धुल बन्धूकीव बन्धुजीवक बन्धूलि बन्धुर बन्धूर सूर्य्यभक्त उष्ठपुष्प अर्कवल्लभ मध्यन्दिन रक्तपुष्प रागपुष्प माध्याह्निक। सोऽसितसितपीत लोहितपुष्पभेदाच्चतुर्विध। गुणा —ज्वरनाशक ग्रहपिशाचघ्न सूर्य्यप्रसादनश्च। रा नि व १०। कफहृत् ग्राही लघु वातपित्तघ्नश्च। भा। सु सू ३९ष सुशमने।

वन्धुरः। पु। ऋषभके। रा नि व ६। स्त्रीचिह्ने। हंसे। तिलवल्के। बन्धूकवृक्षे। वधिरे। मे। विड़ङ्गे। हेम। वकपक्षिणि। श र। सारस- पक्षिणि। वै निघ। त्रि। उन्नतानते। अम।

वन्धुरा'। पं मद्व। शक्तुप। छातु। मे।

वन्धुल'। पुं। बन्धुजीवद्रुमे। श र।

वन्धुवेतस'। पुं। जलवेतसे। वै निघ।

वन्धूकपुष्प'। पु। बन्धुजीवपुष्पवृक्षे। वै निघ। पीतशाले। अम। असनवृक्षे। आसन गाछ। रा नि व ९। क्ली। तत्पुष्पे। [श रा

वन्धूलिः। पुं। बन्धुजीववृक्षे। बांधुलि।

वन्ध्या। स्त्री। वन्ध्याकर्कोटक्याम्। रा नि व ३। अप्रजस्त्रियाम्। वांझा। मे। वायुजन्य स्त्रीयोनि रोगविशेषे। तस्यां नारी नष्टार्त्तवा भवति। "वन्ध्या नष्टार्त्तवा ज्ञेया।" भा म ४भ। स्त्रीवेरे। वाला। श च।

**बन्ध्याकर्कोटकी**। स्त्री। तिक्तकर्कोटक्याम्। তিৎকাঁকড়ী, তিৎকাকুরোল। हि बाभङ खाखा, बाभूखसा, बांझ्काकरोल। म वंझा कष्टोली। कं बजेमडुबागलु। बम बझाक टौली। तत्पर्य्याया,—बन्ध्या देवी नागारातिः नागहन्त्री मनोज्ञा पथ्या दिव्या पुत्रदा सगन्धा कन्दवल्ली ईश्वरी श्रीकन्दा सुकन्दा सर्पदमनी विषकन्दकिनी परा कुमारी भूतहन्त्री योगेश्वरी कान्ता मन्त्रदमनी विषकण्टकिनी। रा नि व ३। सा च विषाधिकारे। गुणा—लघ्वी कफनुत् शस्त्रशोधिनी सर्पदमनी तीक्ष्णा विसर्पविषघ्नी च। भा पू ग व। तिक्ता कटु उष्णा कफघ्नी स्थावरादिविषहरी च। रा नि व ३।

**बन्ध्याकार्पासी**। स्त्री। वनकार्पास्याम्। वै निघ।

**बभ्रम्**। क्ली। सीसके।

**बब्बु(ब्बू)र (ल) (क)**। पुं। बर्व्वुरवृक्षे। বাব্‌লা গাছ। उत् गुइडा।

**बब्बु(ब्ब)र[ल]निर्य्यास**। पु। बर्व्वुर निर्य्यासे। বাব্‌লার আঠা। वै निघ।

**बभ्रु' (भ्रु)**। पुं। नकुले। নেউল। मे। च सू १०ष। मूषिके। रास्नायाम्। वै निघ। वातपित्तोल्वण-सन्निपातज्वरे। निदान लक्षणे—"वातपित्ताधिको यत्र सन्निपातः प्रकुप्यति। तस्य ज्वरो मदस्तृष्णा मुखशोषः प्रमीलकः॥ आध्मानारुचितन्द्राश्च कासश्वासभ्रमश्रमाः। मुनिभि र्बभ्रु नामायं सन्निपात उदाहृतः॥" भा म १म। वातकफपित्ते। विशा। मुनिपत्रकशाके। रा नि व ४। त्रि। खञ्जती। हेच।

**बभ्रुदेह**। पुं। नकुले।

**बभ्रुधातु**। पुं। स्वर्णगैरिके। रा नि व १३।

**बभ्रराली**। स्त्री। मक्षिकायाम्। भ्रमर। वै निघ।

**बरम्**। क्ली, पुं। कुङ्कुमे आर्द्रके। दाना। लाय। গুড়ত্বক্। आर्द्रके। रा नि व ६ १२। पुं। सिह्लके। गन्धके। [জাফ্‌রান।

**बरजम्बू**। स्त्री। राजजम्बूनामकवृक्षफले?।

**बरा**। स्त्री। त्रिफलायाम्। गुडूच्याम्। मेदायाम्। ब्राह्म्याम्। हरिद्रायाम्। पाठायाम्। विडङ्गे।

**बरी**। स्त्री। शतावर्य्याम्। শতমূলী।

**बर्व्वट:**। पुं। स्त्री। (टी) राजमाषे। বর্বটী।

**बर्व्वणा**। स्त्री। नीलमक्षिकायाम्।

**बर्व्वरशाक**। पुं। भार्ग्याम्। বামুনহাটী।

**बब्बु(र्ब्बु)र:(ल)(क)**। पुं। बब्बुरवृक्षे। বাবলা গাছ। बाबुर, बाबुल इति भाषा। उत् गइडा। गुणा—"बब्बुरस्तु कषायोष्णः कफकासामयापहः। आमरक्तातिसारघ्नः पित्तार्शोदाहनाशनः॥" रा नि व ८।

**बब्बु(ब्ब)र[ल]निर्य्यास**। पु। बर्व्वुर-निर्य्यासे। বাবলার আঠা।

**बर्हम्**। क्ली। मयूरपुच्छे।

**बर्हिशिखा**। स्त्री। मयूरशिखायाम्। वै निघ चर्श चि गोजिह्वादिकषाये। लघुपालक्यां। भा।

**बर्हिष्ट(ष्ठ)म्**। क्ली। बालके। বালা। वै निघ च सा चि पञ्चमूलीबलादिकषाये। उशीरे।

**बल**। क्ली। स्थौल्ये। घन। जटामांस्याम्। लाक्षायाम्। रा नि व १३। सामर्थ्ये। लक्षण—'रसादिशुक्रपर्य्यन्त पुष्टधातुनिमित्तकम्। चेष्टासु पाटवं यत्तु बलं तदभिधीयते॥" सुश्रुतम्। "तस्तु गर्भस्थस्य षष्ठे मासि जायते।" सुखबोध। बलं त्रिविधं सहजं कालजं युक्तिकृतञ्चेति। तत्र सहजं यच्छरीरसत्वयोः प्राकृतं। कालजम् ऋतुविभागजं वयस्कृतम्। युक्तिकृतम् आहारचेष्टायोगजम्। च सू ११अ। शरीरे। रूपे। कासे। बोले। विका। रुधिरे। श्च। शुक्रे। हेच। पल्लवे। शर। सम्प्रासे रोगाधिकनामभेदे। "हेलादिकार्श्यावयवे बलकाश्यविशेषणमिति।" सा नि।

**बल'**। पु। काके। घन। बलदेवे। श्च। हस्तिनि। धातौ। वै निघ। गन्धोनामगन्धद्रव्ये। रा नि व १२।

**बल खदिर**। पु। खदिरभेदे। পাপড়ী খয়ের।

**बलकन्द**। पुं। मालाकन्द। रा नि व ७।

**बलकरम्**। क्ली। अस्थिनि। वै निघ। त्रि। बलजनक।

**बलजम्**। क्ली। फले। मे। पु। मज्जधातौ। वै निघ।

**बलजा**। स्त्री। Arabian Jasmine

आरवीयमल्लिकायाम्। यूथिकायाम्। युँई। मे।

**वलदः।** पुं। पर्पटके। क्षेतपापड़ा। रा नि व ४। जीवके। वै निघ। स्त्री। अश्वगन्धायाम्। रा नि व ४।

**वलदीनता।** स्त्री। ग्लानौ। क्लान्तौ।

**वलदेवः।** पुं। वायौ। मे।

**वलदेवा (वी)।** स्त्री। त्रायमाणालतायाम्। बला लता। मे।

**वलनखः।** पु। व्याघ्रनखे। नखिविशेष। रा नि व १२।

**वलपाण्डुकरः।** पु। कुन्दवृक्षे। वै निघ।

**वलपुच्छकः।** पु। काके। वै निघ।

**वलपृष्ठकः।** पु। रोहितमत्स्ये। वै निघ।

**वलभद्रः।** पु। शुक्लकदम्बवृक्षे। रा नि व २२। लोध्रवृक्षे। भ प। न्यग्रोधे। रा निघ १९। त्रि। बलवति। [वि ९।

**वलभद्रप्रियकः।** पुं। धूलीकदम्बे। रा नि

**वलभद्रा (द्रिका)।** स्त्री। त्रायमाणायाम्। बनालता। रा नि व ५। वनजातायां गवि। वै निघ। कुमार्य्याम्। मे। मायरोटिकायाम्।

**वलमोटा।** स्त्री। क्षुपविशेषे, बलामोटा ।म्। अग्रखी गाछ। भँवरीति लोके। गुणा—कटु तिक्ता शीता जयदा कण्ठशोधनी लघु कफघ्नी मदगन्धि मूत्रकृच्छ्रविषपित्तवातभूतघ्नी च। रा नि व ४। वै निघ।

**वलयम्।** क्ली। गोलकास्थिभेदे। पुं। गलरोग-भेदे। तल्लक्षण यथा—"वलास एवायतमुन्नतञ्च शोफं करोत्यन्नगतिं निवार्य्य। त सर्व्वथैवाप्रतिवार वीर्य्य विवर्ज्जनीय वलयं वदन्ति॥" मा नि।

**वलवती।** स्त्री। एलायाम्। वै निघ।

**वलवर्द्धिनी।** स्त्री। जीवके। जटा।

**वलवल्लभा।** स्त्री। सुरायाम्। वै निघ।

**वलवसा।** स्त्री। गन्धके। मा।

**वलवान्।** पु। आहारे। कफे। क्ली। अश्ववीजे। त्रि। वलिष्ठे।

**वलव्यापत् (त्ति)।** स्त्री। वलक्षये। लक्षण—"गौरव स्तब्धता गात्रे सुखग्लानिर्विवर्णता। तन्द्रा निद्रा वातशोथो वलव्यापत्तिलक्षणम्॥" मा म १म चि।

**वलसम्भवः।** पुं। षष्टिकधान्ये। रा नि व १६

**वलहा।** (न्)। पुं। कफे। श र।

**वलघ्नः।** पुं। शुभ्रवर्णे।

**वलचयः।** पुं। वायौ। वै निघ।

**वला।** स्त्री। ( Sida cordifolia ) स्वनाम ख्यातक्षुपविशेषे। वेड़ेला। हि बिज्वन्द। मं बला चिकणा। क वेलेगर बलियारा। तै पाचितोगे, मुत्तवपुलगमु, करिवेपचेट्टु। तत्पर्य्याया,—वाट्यालक वलिनी समङ्गा ओदनिका ओदनी भद्रा भद्रौदनी खरकाष्ठिका कल्या खिनी भद्रवला मोटा पीटी वलाह्वा शीतपाकी वाटिका वाटी वाट्या वाट्यायनी मिलया। सा चतुर्धा वलामहावलातिवलानागवलाभेदेन। गुणा—अतितिक्ता मधुरा पित्तातिसारघ्नी वलवीर्य्यदा पुष्टिदा कफदोषशोधनी च। रा नि व ४। "वलाचतुष्टय शीतं मधुर वलकान्तिकृत्। स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम्॥" भा म १म। विड्ङ्गायाम्। जयन्त्याम्। रा नि व २३। महासमङ्गायाम्। वनजपत्रके। वै निघ। स्थूल वाट्यालके। त्रिका।

**वलाका (की)।** स्त्री। वकपङ्क्तौ। त्रिका। प्लवजातीयदहातचारिपक्षिविशेषे। वकविशेष। तत्पर्य्याया,—करायिका विसकण्ठिका वकेरुका बिसकण्ठा बिसकण्ठिका बिसकण्ठी शुक्लाङ्गा दीर्घकन्धरा धर्म्मान्तकामुकी श्वेता मेघानन्दा जलाश्रया। एतद्गुणा प्लवमांसवत्। सु सू ४६अ।

**वलाटः।** पुं। क्षुद्रविशेषे। हरि मुग। हे च।

**वलाढ्य'।** पुं। माषे। माष कलाय। रा नि व १६। स्त्री। वलाक्षुपे। रा नि व ४।

**वलात्मिका।** स्त्री। हस्तिशुण्डीक्षुपे। हाति शुँड़े। श र। सूर्य्यकमले। आधापत्र। वै निघ।

**वलाद्यघृतम्।** क्ली। वद्रोगे घृतम्। "घृतं वलानागवलार्ज्जुनानां क्वाथेन कल्केन च यष्टिकाया। सिद्ध . ।" भा।

**वलाधिष्ठानम्।** क्ली। वलाधाने। "वलाधिष्ठानमारोग्यम्।" च सू १अ।

**वलापञ्चकम्।** क्ली। वलातिवलानागवला महावलाराजवलासु। वै निघ।

**वलामोटा।** स्त्री। जयन्त्याम्। रा नि व ४। नागदमन्याम्। भा।

**बलाय**। पुं। वरुणवृक्षे। अम।

**बलार्द्दम्**। क्ली। हिक्काभेदे। तल्लक्षणं यथा— "हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते। मुखस्य शोषं लभते तद्बलार्द्दस्य लक्षणम्॥" "ललाटे शिरा नासायां शाखसन्धिषु कण्ठयोः। यदा सञ्जायते स्वेदो बलार्द्दस्तु तदादिशेत्॥"

**बलालक**। पु। पानीयामलके। अम।

**बलाश**। पु। कफे। हेम।

**बलास**। पुं। कफे। तन्नामककण्ठगतमुखरोगे। निदानलक्षणे—"गले च शोफं कुरुते प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम्। मर्म्मच्छिदं दुस्तरमेनमाहुर्बलाससंज्ञं निपुणा विकारम्॥" सुनि १६५

**बलासक**। पुं। शुक्लगतनेत्ररोगे। लक्षणं यथा—"कांस्याभो भवति सिरावृत्तः स्थिरो यो बिन्दुर्वा स तु गौरवो बलासकाख्यः।" सुउ ४५। [वै निघ।

**बलासघ्नी**। स्त्री। तेजोवत्याम्। তেজবল।

**बलाहम्**। क्ली। जले। वै निघ।

**बलाहक**। पु। मुस्तके। रसार्स पिपासा ज्वरे। पर्व्वते। मेघे।

**बलाहकन्द**। पुं। गुडूचीकन्दे।

**बलाह्वया**। स्त्री। वाट्यालके। वा उ २५।

**बलि**। पुं। गन्धके। रसार्सगदसुरारिरसे। अग्निमन्थवृक्षे। स्त्री। त्रिवल्याम्। रा नि व १८। मलद्वारान्तवल्याम्। গোগল। सा त्रिविधा अध्यर्द्धाङ्गुलान्तरभूता, यथाक्रमं प्रवाहणी विसर्जनी संवरणी चेति कथ्यते। चतुरङ्गुलायता सर्व्वास्तिर्य्यगेकाङ्गुलोच्छ्रिता। "शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः। गजतालुनिभाश्चापि वर्णतः सम्प्रकीर्त्तिताः॥" सु नि २५। लोलमांसे।

**बलिका**। स्त्री। अतिबलायाम्। रा नि व ४।

**बलिचन्दनम्**। क्ली। रक्तचन्दने। वै निघ।

**बलिनी**। स्त्री। वाट्यालके। अच।

**बलिपुष्ट**। पुं। काके। अम।

**बलिप्रियः**। पुं। लोध्रवृक्षे। अच। कदम्बवृक्षे। वै निघ।

**बलिभः**। पु। वृद्धपुरुषे। अम।

**बलिभुक्**। पुं। चटके। काके। बके। त्रिका।

**बलिमान्**। त्रि। जराजन्यवलियुक्ते। अटोम।

**बलिमुखः**। पु। वानरे। अट्ट।

**बलिवत्स (सा)**। पु, स्त्री। गन्धके। वै निघ॥

**बलिष्ठ**। पु। उष्ट्रे। रा नि व १६। त्रि। बलवति।

**बली (लिन्)**। पुं। महिषे। रा नि व १६। उष्ट्रे। मेषे। वनशूकरे। कफे। महिषे। कुन्दपुष्पवृक्षे। जटा। माषे। शायदलाम्र। हेम। पारिभाश्वत्थे। शल्लकीनिर्य्यासे। गन्धके। वै निघ। स्त्री (ली)। बली, মাষাড়ে। अटोम।

**बलीन**। पु। वृश्चिके। वै निघ।

**बलीमुख**। पु। मर्कटे। अम

**बलीयान् (स्)**। पु। गर्द्दभे। वै निघ।

**बलीवर्द्द**। पुं। वृषे। अम।

**बलीशाक**। पु। आम्रातकवृक्षे। वै निघ।

**बलोत्तमा (त्तरा)**। स्त्री। बलायाम्। रा नि व ४। वै निघ।

**बल्य**। त्रि। बलकरे। मे। क्ली। हृदये। पार्श्वास्थनि। पार्श्वभागे। वै निघ। शुक्रे, प्रधानधातौ। मे। पुं। चिरीपवृक्षे।

**बल्यवर्ग**। पुं। बलकरमहाकषायवर्गे। स चतुष्कस्य प्रथमो दशकः। यथा—"ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणीबलातिबला इति दशेमानि बल्यानि भवन्ति।" বাবানশমা, আলাকুশী, শতমূলী, মাষাণী, ভূমিকুষ্মাণ্ড, অশ্বগন্ধা, শালপাণি কটুকী, পীত বেলেড়া, শ্বেত বেলেড়া। चसू ४प।

**बल्या**। स्त्री त्रिपुडीक्षुपे। अतिबलायाम्। रा नि व ४। अश्वगन्धायाम्। प सु। बलायाम्। वै निघ ४म सपञ्चतालीशादिचूर्णे। प्रसारण्याम्। গন্ধভাদুলি। रा नि व ५। पाषाणभेदे। পাথর কুচা। व निघ।

**बल्याख्यपञ्चमूलम्**। क्ली। बलाश्वगन्धात्रिपुडीपाषाणभेदातिबलासु। अन्यत्—हरिद्रागुडूचीविदारीशारिवामेषशृङ्गीषु। वै निघ।

**बल्ल**। पुं। त्रिगुञ्जापरिमाणे।

**बल्लक**। पुं। निषादे।

**बल्लकी**। स्त्री। शल्लकीवृक्षे।

**बल्लरी।** स्त्री। लतायाम्। मेथिकायाम्।

**बल्लवः।** पुं। पाचके। त्रिका।

**बल्वजा।** स्त्री। तृणविशेषे। उलू। म, वम् मोलु। क मोर्‌ई। गुणा—मधुरा शीता पित्त दाहतृष्णाघ्नी वातला रुच्या कण्ठशोधनी च। रा नि व ८।

**बष्कयः।** पु। एकवर्षदेशीयवत्से। वै निघ।

**बष्कय(यि)णी।** स्त्री। बहुदिनप्रसूतायां गवि। अमरटीका।

**बस्तः।** पुं। छागे। त्रिका।

**बस्तकम्।** क्ली। शाकम्भरलवणे। वै निघ।

**बस्तकर्णः (र्णी (इन्))।** पु। अजकर्णशालवृक्षे। धुनोर गाछ। रा नि व ८।२३।

**बस्तगन्धकः।** पु। अरण्यतुलसीवृक्षे। रा नि व ४। वै निघ २भ वा व्या चि। [रा नि व

**बस्तगन्धा।** स्त्री। अजगन्धायाम्। वनयमानी। ४। सु चि ३०म। वै निघ २भ वा व्या चि षड् शीतिगुग्गुलौ। चीनयमान्याम्। अर्कुनी,। च द वहणी चि कल्याणगुडे।

**बस्तगन्धाकृति।** स्त्री। पुत्रदात्रीलतायाम्। वै निघ।

**बस्तमोदा।** स्त्री। अजगन्धायाम्, वनयमान्याम्। रा नि व ६।

**बस्ताण्डम्।** क्ली। छागाण्डे।

**बस्तान्त्री।** स्त्री। अजान्त्रीलतायाम्। रा नि व ३। सु चि ६म। च द श्व चि।

**बस्ताम्बु।** क्ली। छागमूत्रे। भा म पित्तविसर्प चि। "बस्ताम्बुविमिश्रितानि।"

**बहल।** पुं। इक्षौ। वै निघ। त्रि। स्थूले। भा म कुष्ठ चि।

**बहलगन्धकृत्।** पु। पवित्राख्यशालिधान्ये। पवित्राखधान। रा नि व १६।

**बहलत्वच्।** पुं। भूर्जवृक्षे। शक्तरोध्रे। वै निघ।

**बहलदल।** पुं। कृष्णशोभाञ्जने। काल-सजिना। वै निघ।

**बहलवर्त्म।** क्ली। सितवर्त्मगतरोगभेदे। लक्षणं— "वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः। सवर्णाभिः समाभिश्च विद्याद्बहलवर्त्म तत्॥" सु उ ३य।

**बहलाङ्गः।** पु। मेघगर्जायाम्। वै निघ।

**बहिः।** अ। बहिर्भागे। बाहिरे। वै निघ।

**बहिःकुटीचरः।** पु। कुलीरके। त्रिका।

**बहिर्गलगण्डः।** पु। गलरोगभेदे। स त्रिविध वातजकफजमेदोजभेदात्। लक्षणं यथा— "पवनश्लेष्ममेदोभिः गलगण्डो भवेद्बहिः। वर्द्धमानः स कालेन मुष्कवल्लम्बते निरुक्॥ कृष्णोऽरुणो वा तोदाढ्यः स वातात् कृष्णराजिमान्। वृद्धस्तालुगले शोषं कुर्य्याच्च विरसास्यताम्॥ इति। स्थिरः सवर्णः कण्डूमान् शीतस्पर्शो गुरुः कफात्। वृद्धस्तालुगले लिप्तं कुर्य्याच्च मधुरास्यताम्॥ मेदसः श्लेष्मवद्धानिवृद्धी सोऽनुविधीयते। देहः वृद्धश्च कुरुते गले शब्दः स्वरेऽल्पताम्॥" इति वा उ २१अ।

**बहिर्मृजा।** स्त्री। स्नानादिना बहिः शुद्धौ। वा चि १य।

**बहुः।** त्रि। अधिके। अधिक। पुष्कले। प्रचुर। वै निघ।

**बहुकः।** पुं। हरिणविशेषे। वै निघ। अर्के। दात्यूहे। जलखातके। कर्कटे। मे।

**बहुकण्टकः।** पुं। क्षुद्रगोक्षुरे। यवासक्षुपे। दुरालभा। शिग्रुडीक्षुपे। रा नि व ४। गुल्मगुप्ये। र मा। हिन्तालवृक्षे। रा नि व ९। कण्टकालवृक्षे। गुण्डीवृक्षे। मनसा गाछ। पारिभद्र विशेषे। श्वेत पाल्ते। खर्ज्जूरीवृक्षे। वै निघ।

**बहुकण्ट(ण्टि)का।** स्त्री। अग्निदमनीक्षुपे। रा नि व ४।

**बहुकण्टा।** स्त्री। कण्टकार्य्याम्। रा नि व ४। कर्कटिकायाम् काँकुड़ गाछ। वै निघ।

**बहुकन्दः।** पु। शूरणे। ओल। कटुशूरणे। वुनो ओल। स्त्री। कर्कटाराम्। रा नि व ७।

**बहुकन्या।** स्त्री। गृहकन्यायाम्। घृत कुमारी। रा नि व।

**बहुकरः।** पुं। उष्ट्रे। त्रिका। क्षुद्रबदरे। त्रि। सम्मार्जके। अम। स्त्री। सम्मार्जन्याम्। हेम।

**बहुकर्णिका।** स्त्री। आखुकर्ण्याम्। मूषाकाणी पाना। रा नि व ३।

बहुकूर्च । पु । मधुनारिकेलवृक्षे । নিষ্ট নারিকেলবিশেষ । रा नि व ११ ।

बहुगन्ध । पु । कुन्दुरौ । কুন্দুরু গাছ । रा नि व १२ । क्ली । त्वचि । গুড়ত্বক্ । रा नि व ६ । पीतचन्दने । व निघ ।

बहुगन्धदा । स्त्री । कस्तूर्य्याम् । मृगनाभि । रा नि व १२ ।

बहुगन्धा । स्त्री । कृष्णजीरके । रा नि व ६ । चम्पककलिकायाम् । চাঁপার কলি । यूथिकायाम् । रा नि व १० ।

बहुगुडा(ढा) । स्त्री । कण्टकार्य्याम् । (ढा) भूम्यामलक्याम् । वै निघ ।

बहुग्रन्थि । पु । झावुकवृक्षे । श च ।

बहुच्छद । पु । सप्तपर्णवृक्षे । ছাতিম গাছ । वै निघ ।

बहुच्छिन्ना । स्त्री । कन्दगुडूच्याम् । रा नि व ३ ।

बहुतरकणिश । पु । राजिधान्ये । তৃণধান্য বিশেষ । रा नि व १६ ।

बहुतिक्ता । स्त्री । काकमाच्याम् । रा नि व ४ ।

बहुतृण । पु । मुञ्जवृक्षे । মুঞ্জ । व निघ ।

बहुत्वक् । पु । सप्तच्छदवृक्षे । व निघ ।

बहुत्वच । पु । भूर्जवृक्षे । श मा । इ च ।

बहुदल । पु । राजिमाषधान्ये । रा नि व १६ । स्त्री (ला) । चिञ्चोटकक्षुपे । চেঁচকো, কেশুর । वै निघ ।

बहुदुग्ध । पु । यवगोधूमे । प मु । गोधूमे । रा नि व १६ ।

बहुदु(ग्ध)ग्धिका । स्त्री । स्नुहीवृक्षे । মনসা সিজুর গাছ । श च ।

बहुधार(क)म् । क्ली । हीरके । रा नि व १३ ।

बहुधूप । पु । सर्जवृक्षे । শাল গাছ । व निघ ।

बहुध्वज । पु । मकरे । वै निघ ।

बहुनाडिक । पु । दण्ड । व्याक ।

बहुनाद । पु । शङ्खे । শাঁখ । रा नि व १३ ।

बहुप(पु)ट । पु । भल्लूकवृक्षे । वै निघ । वा गू १५४ ।

बहुपत्रम् । क्ली । अभ्रधातौ । प मु । अभ्रक-हरिताल । वै निघ । पु । पलाण्डौ । रा नि व ७ । मुचुकुन्दवृक्षे । रा नि व १० । पलाशवृक्षे । वै निघ । वंशवृक्षे ।

बहुपत्रा । स्त्री । लिङ्गिन्याम् । শিবলিঙ্গিনী লতা । अनुकाया । रा नि व ३ । गोरक्षदुग्धायां । तरुणीपुष्पवृक्षे । रा नि व ५ । १० । भूम्यामलक्यां । घृतकुमार्य्याम् । बृहत्याम् । वै निघ ।

बहुपत्रिका । स्त्री । महाशतावर्य्याम्, भूम्यामलक्याम् । मेथिकायाम् । रा नि व ४ ५ ६ । वचायां । वै निघ ।

बहुपत्री । स्त्री । तुलस्यां । তালমূলী । [illegible] क्षुपे । बृहत्यौ । रा नि व ४ । तुलसीभेदे । रा नि व १० । तरुणीपुष्पवृक्षे । वै निघ १म खण्डे शिवलादिकषाये । गृहकन्यायाम् । घृतकुमारी । शिवलिङ्गीलतायां । अनुकायां । गोरक्षदुग्धायां । रा नि व ३ ५ ।

बहुपर्ण । पु । सप्तपर्णवृक्षे । रा नि व १२ । पलाशवृक्षे । वै निघ ।

बहुपर्णिका । स्त्री । आखुकर्णी । रा नि व ३ ।

बहुपर्णी । स्त्री । मेथिकायां । रा नि व ६ ।

बहुपर्व्वा (न्) । पु । वंशे । বাঁশ । वै निघ ।

बहुपल्लव । पु । शोभाञ्जनवृक्षे ।

बहुपात् (द) । पु । वटवृक्षे । प मु । रा नि व ११ । भा म ४म सम दि ।

बहुपादिका । स्त्री । आखुकर्णीलतायाम् । মূষাকাণী । रा नि व ३ ।

बहुपुच्छिका [च्छी] । स्त्री । भूम्यामलक्याम् । धातक्याम् ।

बहुपुत्र । पु । सप्तपर्णवृक्षे । श च ।

बहुपुत्रा । स्त्री । बृहत्याम् । বৃহতী । रा नि व ४ । भूम्यामलक्याम् । ভুঁই আমলা । प मु । शतावर्य्याम् । र मा ।

बहुपुत्रिका । स्त्री । क्षुद्रशतावर्य्याम् । শতমূলী । भव स्वल्पविषलतेति । चरका स्वा चि विशुक्ले । भूम्यामलक्याम् । प मु । अनुका लतायाम् ।

बहुपुत्री । स्त्री । शतावर्य्याम् । भूम्यामलक्याम् ।

**লক্ষ্মীবান্‌**। পু। পনসবৃক্ষে। কাঁঠাল গাছ। শমা। শ্বেতরোহিতকে। শ্বেত রোড়া। রা নি ব ৮। অশ্বত্থবৃক্ষে। বৈ নিঘ।

**লক্ষ্মীবিলাসরস.**। পু। জ্বরে বাতব্যাধৌ চ রস। পাঠ—"পল কৃষ্ণাভ্রচূর্ণস্য তদর্দ্ধা রসগন্ধকৌ। বলা নাগবলাভোঃ বিদারীকন্দমেব চ। কৃষ্ণধুস্তূরনিচুল গোক্ষুরবৃদ্ধদারযোঃ। বীজ মকামনস্যাপি জাতীকোষফলে তথা। কর্পূরস্যৈব কর্ষাংশ শ্লক্ষ্ণচূর্ণং পৃথক্‌ পৃথক্‌। গৃহীত্বা চাষ্ট মাত্রেন স্বর্ণে বর্দ্ধয়েৎ চ॥" বটিকা গুঞ্জা চণকপ্রমাণা। কৃষ্ণাভ্রচূর্ণ ৮ তো পারা, গন্ধক প্রত্যেক ৪ তো (মতান্তরে রস ২ তো গন্ধক ২ তো) শ্বেত বেড়েলা, গোরক্ষচাকুলিয়ামূল, শতমূলী, ভূমিকুষ্মাণ্ড, কাল ধুতুরার বীজ, হিজলবীজ, গোক্ষুরবীজ, বিদ্ধতাড়কের বীজ, সিদ্ধিবীজ, জায়ফল, জয়িত্রী, কর্পূর ইহাদের চূর্ণ প্রত্যেক ২তো স্বর্ণভস্ম।০ চারি আনা, পাণের রসে মাড়িয়া বটী করিবে। মাত্রা সিদ্ধচণকবৎ। মতান্তরে জায়ফল, জয়িত্রী এক এক তো বৃদ্ধতাড়ক প্রভৃতির বীজ মিলিত ২ তো। অন্যা মহালক্ষ্মীবিলাস শিরোরোগে। পাঠ—'লৌহমভ্র বিষ মুস্ত ফলত্রয় কটুত্রয়। ধুস্তূর বৃদ্ধদারস্য বীজমিন্দ্রাশনস্য চ। গোক্ষুরকদ্বয়ঞ্চৈব পিপ্পলীমূলমেব চ। এতৎসর্ব্বং সম ভাগ্য রসে ধুস্তূরকস্য চ। ভাবয়িত্বা বটী কার্য্যা দ্বিগুঞ্জাফলমানত॥" লৌহ, অভ্র, বিষ, মুতা, ত্রিফলা, ত্রিকটু ধুতুরাবীজ, বৃদ্ধতাড়কবীজ, সিদ্ধিবীজ, ছোট গোখুরবীজ, বড় গোখুরীবীজ, পিপুলমূল সমভাগ। ধুতুরাবীজের রসে ভাবনা দিয়া বটী করিবে। মাত্রা ২ কুঁচ। রসার্ণ। অন্য কাসে—বঙ্গ লৌহম্‌ অভ্র তাম্র কাংস্য পারদ হরিতাল মনশিলা খর্পর ম ১ প। কিমরাজস্য কুলত্থস্য চ ক্বাথে ম দিনত্রয় ভাবয়েৎ। এলা জাতীফলং তেজপত্র লবঙ্গ যমানী জীরকং ত্রিফলা ত্রিকটু নগর গুড়ত্বক্‌ বঙ্গলোচনা ম ২ তো তেন সহ মিশ্রয়িত্বা পুনঃরস্য ভাবনা দেয়া। মাত্রা চণকমিতা। ভৈষ।

**লক্ষ্মীবিষ্ট**। পু। শ্রীবিষ্টনামসুগন্ধদ্রব্যে, সরল নির্যাসে। রা নি ব ১২।

**লক্ষ্মীশ্রেষ্ঠা**। স্ত্রী। স্থলপদ্মিন্যা। বৈ নিঘ।

**লাগজীরঃ (কঃ)**। পুং। শ্বেতজীরকে। বৈ নিঘ।

**লাঘবকঃ**। পু। হলীমকরোগে। সু উ ৪৪অ।

**লাঘবম্‌**। ক্লী। লঘুত্বে। আরোগ্যে। রা নি ব ২০। [ লিঙ্গ। শিকা।

**লাঙ্গলম্‌**। ক্লী। পুষ্পভেদে। তালবৃক্ষে। মে।

**লাঙ্গলকঃ**। পুং। লাঙ্গলাকারে ভগন্দরচ্ছেদে। "কুটারহিতহলাকার পার্শ্বয়ে যচ্ছেদ স সম্পূর্ণ হলাকার।" বা উ ২৮অ। "হাভ্যাং সমাভ্যাং পার্শ্বাভ্যা ছেদো লাঙ্গলকো মত।" সু চি ৮অ। ভা ম ৪ভ ভগন্দরচি।

**লাঙ্গলকী**। স্ত্রী। লাঙ্গলীক্ষুপে। বিষলাঙ্গুলিয়া। চ সু। রস র অর্শঃ চি।

**লাঙ্গলাখ্যা (হ্বয়া)**। স্ত্রী। লাঙ্গলিকায়াং। বিষলাঙ্গুলিয়া। ভৈষ কুষ্ঠ চি। সু সূ ২৩অ।

**লাঙ্গলিঃ (লিকা, লী)**। স্ত্রী। লাঙ্গলী বৃক্ষে। বিষলাঙ্গুলিয়া। শ র। ভৈষ স্ত্রীরোগ চি। গজপিপ্পল্যাং। রা নি ব ২২। চ দ বা খ্যা ঘৃত দ্বপাতিত্বে। চব্যে। চই। ভা পূ ১ভ। মহারাষ্ট্রী লতায়াম্‌। কাঁচড়াদাম। শ চ। রা নি ব ৪। সু সূ ২২অ। পৃশ্নিপর্ণ্যাম্‌। চাকুলিয়া। মঞ্জিষ্ঠায়াম্‌। তাম্রভক্তে। কপিকচ্ছাম্‌। আলাকুশী। বৈ নিঘ।

**লাঙ্গলিকঃ**। পুং। স্থাবরবিষভেদে। হে চ।

**লাঙ্গলিকী (নী)**। স্ত্রী। কলিকারিকায়াং। বিষলাঙ্গুলিয়া। অম। তৎপর্য্যায়া—লাঙ্গলাখ্যা লাঙ্গলী গৌরী দীপ্তা হলিনী গর্ভঘাতিনী অগ্নিজ্বালা অগ্নিজিহ্বা অগ্নিমুখী অগ্নিশিখা বহ্নিশিখা ইন্দ্রপুষ্পা কলিকারী। তদ্গুণ,—কুষ্ঠ দুষ্টব্রণনাশক। সু সূ ৫৮অ কফশোধনে।

**লাঙ্গলী (হ্ন্‌)**। পু। নারিকেলবৃক্ষে। রা নি ব ১১। সর্পে। শ চ।

**লাঙ্গলীশাক.**। পুং। জলজশাকবিশেষে। কাঁচড়া শাক। তৎপর্য্যায়া,—তোয়পিপ্পলী শলাঘী পিত্তলা শ্যামাদনী। গুণা —"লাঙ্গলী কফপিত্তঘ্নী রুচ্যা বাতবিবৃদ্ধিকৃৎ।" রাজ ২প।

**লাঙ্গুঃ**। পু। শিশ্নে।

**লাঙ্গু(ঙ্গূ)লম্‌**। ক্লী। পুচ্ছে লেজ। অটী। শিশ্নে। মে। পু। শালিধান্যভেদে।

**লাঙ্গু(ঙ্গূ)লা (লিকা,লী)**। স্ত্রী। কপি

कच्छाम् । रा नि व ३ । पृश्निपर्णाम् । चाकुलियां । रा नि व ४ । पु (स्त्री [इन्])। ऋषभके । रा नि व ५ । वानरे ।

**लाजम्** । क्ली । उशीरे । वेणा । मे । पु । आर्द्र तण्डुले । मे । पु बहु,स्त्री(जा) । भ्रष्टे । म ।

**लाजचूर्णम्** । क्ली । खधिचूर्णे । वैद्यकग्र गुँड़ा ।

**लाजतर्पणम्** । क्ली । लाजसक्तुकृततर्पणविशेषे । भा म १भ ज्व चि । "दाहवम्यर्दित चाम निरन्न तृष्णयान्वितम् । शर्करामधुसंयुक्तम् पाययेल्लाज तर्पणम् ॥"

**लाजपेया** । स्त्री । खधिकृतपेयायाम् । वैद्यकग्र मण्ड । वा चि १भ । "लाजपेयां सुखजरां ।' च द । गुणा—"पूर्ववच्च कृता लाजपेया लघ्वी मता यत । गुणैः प्रशस्ता विज्ञेया पूर्वोक्तायां गुणाधिका । विकटुसैन्धवैर्लाभियुक्तातिगुणदा मता ॥' देहिन चुत्पिपासाग्निदौर्बल्यकुक्षिरोग विनाशिनी ॥" राज २५ ।

**लाजभक्तः** । पु । खधिभक्ते । गुणा—"लाज भक्तो लघु शीतश्चाग्निदीपिकरो मधु । तृष्णी निद्रारुचिकर कफपित्तविनाशक । अग्निशोधन कारी स्यादेविभि परिकीर्तित ॥" वै निघ ।

**लाजमण्ड** । पु । खधिमण्डे । वैद्यकग्र मण्ड । गुणा—अग्निजननो दाहतृष्णानिवारण ज्वरातिसारशमनश्च । श्लेष्मल आमपाचन मन्दाग्नि विषमाग्निबालस्थविरयोषितां पेयश्च । राज २५ ।

**लाजवर्णा** । स्त्री । अष्टाविध लूताविशेषे । सु कल्प ८भ ।

**लाजश(स)क्तु** । स्त्री । खधिचूर्णे । वैद्यकग्र छातू । शीतवीर्या भवन्त् सान्निपातिके न हिता । शि यो ज्व चि ।

**लाजा** । पुं बहु । खधिकायाम् । नाठ्या, वै । भ्रष्टव्रीहिमात्रे । 'य कैविद्भोहयो भ्रष्टास्ते लाजा ।' रा नि व १६ । सतुषधान्यानि भृष्टस्फुटितानि लाजानाहु । भा । भ्रष्टधान्येषु । शि यो र पि चि सिद्धमध्वोगे । च द ४भ वर्णानाम् । गुणा—"लाजास्तृड्वमनोसारमेहमेद कफच्छिद । कास विज्ञानशमना दीपना लघवो हिमा ॥" राज २५ ।

**लाञ्जुलम्** । क्ली । धान्ये । वै निघ ।

**लाञ्छनम्** । क्ली । राशिनामकक्षधान्ये । रा नि व १६ । सनामकचन्द्ररोगे । लक्षण—"कृष्ण सित वा सहजं मण्डलं लाञ्छनं समम् ।" वा उ ३१ भ । चिह्ने । मे ।

**लाटपच, (र्णः)** । पु । लताचाम् । दारुचिनी । वै निघ ।

**लामज्ज(क)म्** । क्ली । उशीरभेदे । गन्ध वेणा । सु सू ३८भ । च द शि यो दाह चि । "लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ।" (Andropogon laniger) The Juncus odoratus उशीरवत्पीतच्छविक्षुपविशेषे, सुगन्ध व रणे । हि लामज्जक । तें नेत्रवट्टिवेर । तत् पर्यायाः,—सुनील अमृणाल लव लघु इष्टका पथिक शीघ्र दीर्घमूल जलाश्रयम् । अभावे उशीर देयम् । भा म १भ ज्व चि महालाक्षादितैले । "लामज्जक चन्दनञ्च ।" च सू २५भ । "लामज्जक यदा न स्यादुशीरं दीयते तदा ।" गुणा—हिम तिक्त मधुर वातपित्तघ्न तृष्णादाहश्रममूर्च्छारक्त पित्तज्वरघ्नञ्च । रा नि व १२ । अपिच—"लघु दोषत्रयासजित् । त्वगामयस्वेदकृच्छ्रदाहविनाश रोगहृत् ॥' भा । "दीर्घमूलं दृढं सूक्ष्मसुरभ गन्धसंयुत । ईषी साधारणे जात लामज्जं भद्रकं भवेत् ॥' मैध ।

**लालनम्** । क्ली । पियालबीजे । वै निघ । पु । मूषिकविशेषे । तद्दष्टे लालास्राव हिक्का छर्दिश्च जायते । सु कल्प ६भ । वा उ ३८भ ।

**लालसा** । स्त्री । गर्भिणीदोहदे । शब्द । ३ भ ।

**लालसीकम्** । क्ली । पिच्छिले । श र ।

**लाला** । स्त्री । मुखस्राव । लाल । तत्पर्यायाः, स्यणिका सृणीका स्यन्दिनी द्राविका मुखस्राव पिच्छिला लसिका लासिका । रा नि व १८ ।

**लालामेह** । पुं । प्रमेहभेदे । लक्षण—"लालातन्तुयुतं मूत्र लालामेहेन पिच्छिलम् । प्रमेहति ॥" निदा ।

**लालाविष** । पुं । लूतादौ । शब्द ।

**लालास्राव** । पु । लालाक्षरणे । नालपड़ा । लगमाभो । नाकड़ना । शब्द ।

**लालिक** । पुं । महिषे । शब्द ।

**लाव (क)** । पु । स्वनामख्यातस्वल्पपक्षि विशेष । दर्टैर गाछौ । पिका । मं लावुगी, लावुकपिट । तत्पर्यायाः,—लघुज्जल लावक

लव । तन्मांसगुणा—पथ्यं ग्राहि लघु च । रा नि व ७ । "पचिणास्तु महाश्रेष्ठो लावको जाङ्गलात्मक । ग्राही दीपन शीत कषायो मधुरो लघु । तथा विपाके मधुर सन्निपातेऽपि पूजित ॥" अत्रि २१ अ । अपिच—"लावा विष्किरवर्गेषु ते चतुर्धा मता बुधे । पांशुलो गौरकोऽन्यस्तु पौण्ड्रको दर्भरस्तथा ॥ लावा वह्निकरा स्निग्धा गरघ्ना ग्राहिका हिता । पांशुल श्लेष्मलस्तेषु वीर्य्योष्णोऽनिलनाशन । गौरो लघुतरो रुक्षो वह्निकारी त्रिदोषजित् । पौण्ड्रक पित्तकृत् किञ्चिल्लघुवातकफापह । दर्भरो रक्तपित्तघ्नो हृदामयहरो हिम ॥" भा । लवङ्ग । च द वा च्या महासुगन्धितैले ।

**लावण: (णिक:)** । त्रि । लवणसंस्कृते । हे च । क्ली । नस्ये । र सा स ।

**लावणिकतैलम्** । क्ली । तैलविशेषे । च सू माचाशितीय च ।

**लावण्यम्** । क्ली । लवणत्वे । लोणता । कान्तौ ।

**लावण्या** । स्त्री । ब्राह्मीक्षुपे । वै निघ ।

**लावा** । स्त्री । लावपक्षिणि । रा नि व १९ ।

**लावात्मक:** । पु । व्रीहिधान्यभेदे । व्रीहिर्गुण । सु सू ४६ अ ।

**लावु (वू) (का)** । पु, स्त्री । अलाब्वाम् । लाउ । श र ।

**लास:** । पु । यूषे । झोल । अ च ।

**लासक:** । पु । मयूरे । मे ।

**लासिका** । स्त्री । मुखस्रावे । लाला ।

**लास्फोटनी** । स्त्री । आस्फोटन्याम् । वैद्य निकायां । च टी रा ।

**लाक्षा** । स्त्री । पिचके । वै निघ ।

**लाचा** । स्त्री । (Coccus lacca) Lac स्वनामप्रसिद्धरञ्जकद्रव्ये । लाहा, गाला । हि लाहौ । मं लाख । फ चरग । तै लक्षुक, लक्क । तत्पर्य्याया,—राचा जतु अलक्तक जन्तुका याव अलक्त अलक्तक गवधिका खदिरिका रक्ता रङ्गमाता पलङ्कषा क्रिमिका क्रिमिघ्ना द्रुमव्याधि द्रुमामय पलाशी मुद्रिणी दीप्ति गन्धमादिनी शोभा द्रवरसा पित्तारि कीटजा रञ्जिका चतघ्ना चतघ्नी रक्तमातृका । चि द वि ज्व चि पद्कर्मि । "लाचानिशानीलिमयष्टिकाभि ।" गुणा—तिक्ता कषाया श्लेष्मपित्तघ्नी विषघ्नी रक्तघ्नी विषमज्व च । रा नि व ६ । 'लाचा च नूतना श्र मृत्तिकादिविवर्जिता ।" भैष ।

**लाचातरु:** । पु । पलाशवृक्षे । श मा ।

**लाचादितैलम्** । क्ली । बालरोगाधि तैलम् । पाठ—"लाचारससम सिद्ध मस्तु चतुर्गुण । रास्नाचन्दनकुष्ठाब्दवाजिगन्धानि युगे । शताह्वादारुयष्ट्याह्वमूर्व्वातिक्ताहरेणुभि बालानां ज्वररक्षोघ्नमभ्यङ्गात बलवर्णकृत महालाचादितैल यथा—"लाचारसाढके तैलस्य विपचेत्प्रियक् । मस्त्वाढकसमायुक्त चात्र समावपेत् । शतपुष्पां हरिद्राञ्च मूर्व्वां हरेणुकां । कटुकां मधुक रास्नामश्वगन्धाञ्च च । मुस्तक चन्दनञ्चैव पृथगक्षसमान द्रव्यैरेतैस्तु तत्सिद्धम् अभ्यङ्गान्मारुतापह विषमाख्यान् ज्वरान्सर्व्वानाश्वेव प्रशम नयेत अत्र दोलायन्त्रविधानात् षड्गुणजलेन लाचा विंशतिवारान् परिस्राव्य लाचारसो ग्राह्य कुट्टितलाचा ३ श वारि १८ श २१ वा दोलायन्त्रे परिस्राव्य १६ श ग्राह्यम् । श्र लाचा ८ श वारि ६४ श पक्वा शे १६ ग्राह्यम् । तिलतैल ४ श लाचारस क्वाथो १६ श दधिमस्तु १६ श । कल्कार्थे—शत हरिद्रा मूर्व्वामूल कुष्ठ रेणुक कटुकी यष्टि रास्ना अश्वगन्धा देवदारु मुस्त रक्तचन्दन प्र २ पाके सिद्धे कर्पूर शिलारस नखी प्र २ तो मिश्रयेत । रस र ।

**लाचादिवर्ग:** । पुं । लाचारेवतकुटजाश्वम कट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्य त्रायमा श्चेति । तद्गुणा—कषायतिक्तमधुर कफपित्ता शमन । कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधन सु सू ३८ अ । [ श्वेतपुष्पवृक्षे । भा

**लाचापुष्पा** । स्त्री । शतपत्राम्, गुलाब

**लाचाप्रसाद** । पु । पट्टिकारोध्रे । (श्वे लोध्र । अम ।

**लाचाप्रसादन** । पु । रक्तलोध्रे । अम

**लाचारस** । पुं । लाचाजले क्वाथे वा लाहार रस । सि यो य चा चि चन्दनादितैल तत्साधनविधि — षड्गुणमानसा लाचा दोलाय श्र्रुपचिता । त्रिसप्तधा परिस्राव्य लाचारसमि विदु ॥" पम रव ।

**लाक्षावृक्षः** । पु । कोषाम्रवृक्षे । जनपाई । रा नि व ११ । पलाशवृक्षे । हारा ।

**लिकुचम्** । क्ली । चुक्रे । टुकापालङ् । रा नि व ७ । चुद्रपणरे । ডেলো । वै निघ । पु । लकुचवृक्षे । ডেলো গাছ, মান্দার গাছ । रमा । रा नि व ९ ।

**लिकोच (ठ) क**' । पु । अङ्कोटवृक्षे ।

**लिक्षा (ख्या)** । स्त्री । केशकीटभेदे । निकि । अ र । सूर्यकिरणान्तर्गतसूक्ष्मरेणुत्रयमाने । "जालान्तरगते भानौ यच्चाणुदृश्यते रजः । तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड् भिश्च मापक ॥" प प्र ।

**लिङ्गम्** । क्ली । शिश्ने । रा नि व १८ । तत् पर्य्याया,—मेहन शिश्न मारकाम उपस्थ मदनाङ्कुश कन्दर्पमुषल विषक शेफ शेफ मेढ्र लाङ्गु ध्वज रागलता व्यङ्ग लाङ्गुल साधनं कामाङ्कुश नागलता नराङ्ग पुलिङ्ग पुश्चिह्न राजचिह्नक । तत्तु गर्भस्थस्य सप्तभिर्मासैर्भवति । चिह्ने । अम । लक्षणे । रोगव्यापकहेतौ । "सस्थान व्यञ्जन लिङ्ग लक्षण चिह्नमाकृति ।" मा नि ।

**लिङ्गक** । पु । कपित्थवृक्षे । श च ।

**लिङ्गजा** । स्त्री । लिङ्गिनीलतायाम् । शिवलिङ्गिनी । रा नि व ३ ।

**लिङ्गनाश** । पु । लिङ्गम् इन्द्रियशक्तिं दृष्टिं नाशयति । नीलिकाकाचापरनामके नेत्ररोगविशेषे । काचे उपेक्षिते तृतीय चतुर्थं वा पटल गते लिङ्गनाशो जायते । তিমির, আঁধা । छिनरुहा । स वातजादिभेदेन षट् । ते च पुनर्वर्णभेदेन षड़िति द्वादशधा । लक्षण—"स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञित । वातेन चापि रूपाणि भ्रमन्तीव च पश्यति । चाविलान्यरुणाभानि व्याविद्धानीव मानव ।" मा नि । "तथाप्युपेक्षमाणस्य चतुर्थं पटल गत । लिङ्गनाशं मल कुर्वन् छादयेद्दृष्टिमण्डलम् ॥" तत्र वातेन यथा—"सष्टारुणाभो बीलीवो मूर्त्ता वा इतदृशनः । स लिङ्गनाश ॥' पित्तजे यथा—"भृङ्गनीला निरालोका दृकस्निग्धा लिङ्गनाशत ।" कफजे यथा—"लिङ्गनाशे तु लक्ष्यते । मूर्त्तं कफो दृष्टिगत स्निग्धो दृश्यनाशन । बिन्दुजलस्येव चल पद्मिनीपुटसंस्थित । उष्णे सङ्कोचमायाति छायायां परिसर्पति । शङ्खकुन्देन्दुकुमुदस्फटिकोपमशुक्लिमा ॥" रक्तजे यथा—"लिङ्गनाशेन ताहग्दृक् निष्प्रभा हतदृशना ।" सन्निपातजे यथा—"सर्वं सन्निपातेषु विद्यात्सर्वलक्षणान् ।' कफज विना लिङ्गनाशान् चसाध्यान् विदु । वा उ १२अ ।

**लिङ्गरोग**' । पु । उपदंशे । भा ।

**लिङ्गवर्त्ति**,
**लिङ्गार्श** } स्त्री । शुक्ररोगविशेषे । लक्षण—"अङ्कुरैरिव सञ्जातैरुपर्य्युपरि संस्थितै । क्रमेण जायते वर्त्ति ताम्रचूड़शिखोपमा । कोषस्याभ्यन्तरे सन्धौ सन्धसन्धिगतापि वा । सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा । लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरे ॥ मा नि ।

**लिङ्गवर्द्धन** । पु । कपित्थवृक्षे । श च ।

**लिङ्गवर्द्धिनी** । स्त्री । अपामार्गवृक्ष । আপাঙ । श च ।

**लिङ्गसम्भवा (भूता)** । स्त्री । लिङ्गिनी लतायां । रा नि व ३ ।

**लिङ्गालिका** । स्त्री । चुद्रमूषके । हारा ।

**लिङ्गिनो (ङ्गी)** । स्त्री । स्वनामख्यातायां लतायाम् । पञ्चगुड़िया । शिवलिङ्गिनी । तत्पर्य्याया,—बहुपत्री ईश्वरी शिवजा शिववल्लिका शिववल्ली स्वयम्भु लिङ्गजा लिङ्गसम्भूता लैङ्गी चित्रफला चण्डा चाण्डाली देवी अपत्यस्निनी । गुणा —कटु उष्णा दुर्गन्धा रसायनी च । रा नि व ३ ।

**लिङ्गी (ङ्गिन्)** । पु । हस्तिनि ।

**लिप्त**' । त्रि । विषलिप्ते । विषमाखी । मे ।

**लिप्तास्यता** । स्त्री । मुखस्य श्लेष्मलिप्ततायां । মুখ চট্‌চটে করা । मा नि ।

**लिम्पाक** । पु । (Citrus acida) जम्बीरवृक्षविशेषे । পাতিলেবুর গাছ । गुणा —सुरभि स्वादु मात्यम्ल मरुरोचन द्दद्य वह्निद वातघ्न मधुर नातिपित्तकरश्च । कटुकलिम्पाक गुणा —'कटुश्च कफवातघ्नमेदोघ्नं पित्तकोपनम् ।' राज श्व ।

**लि(लो)क्षा** । स्त्री । लिक्षायाम् । निकि । अम भर । परिमाणभेदे, सर्षपषष्टांश । श च ।

**लोका** । स्त्री । क्षुद्रमूषिकमार्य्याम् । ছোট হেঁদুরমাগী । वै निघ ।

**लीलाविलासरसः**। पु। अम्लपित्ताधिकारे रस। पाठ—"रसो बलिर्व्योम रविश्च लौह धात्र्याश्च नीरैस्त्रिदिनं विमर्द्य। तदल्पदष्ट वटु मार्कवैश्च सम्मर्द्दयेदस्य च वल्लयुग्म। हन्त्यम्लपित्त मधुनावलीढ ॥" रसारु।

**लुङ्गः**। पु। मातुलुङ्गवृक्षे। ছোলঙ্গ লেবুর গাছ। वैनिघ।

**लुङ्गमांसम्**। क्ली। मातुलुङ्गमांसे। वैनिघ।

**लुङ्गाम्लम्**। क्ली। मातुलुङ्गाम्ले। रसारु अम्लवर्गे।

**लुङ्गुषः**। पु। मातुलुङ्गवृक्षे। ছোলঙ্গ লেবুর গাছ। रमा।

**लुण्टकः**। पु। शाकविशेषे। নটিয়া শাক। शच।

**लुण्ठनम्**। क्ली। लुठने। লোটা। शर।

**लुण्ठाकः**। पु। काके। त्रिका।

**लुण्डिका**। स्त्री। लोमादिगोलके। নুটী। "मेषलोमलुण्डिकाया।" भैष।

**लुब्धकः**। पु। चोरनामगन्धद्रव्ये। গেঁঠেলা। वैनिघ।

**लुलापः (यः)**। पु। महिषे। पञ्च।

**लुलाप(य)कन्दः**। पु। महिषकन्दे। शङ्कालो। रानिव ७।

**लुलाप(य)कान्ता**। स्त्री। महिष्याम्। रानिव १९।

**लुषभः**। पुं। मत्तहस्तिनि।

**लूता**। स्त्री। नाडीव्रणरोगे। रानिव २०। ऊर्णनाभौ। মাকড়শা। हि माकड़ी। तत्पर्य्याया,—मर्कट मर्कटक लूतिका ऊर्णनाभ मलक तन्तुवाय अष्टपात् किन्वनु। एषा विषात्मिका भवति कीटेभ्यश्च घोरा। "कीटेभ्यो दारुणतरा लूता पीडश ता मृगु।" निरुक्ति —"यथालूनं तृणम्नामा मुने प्रस्वेदविन्दव। तथालूता प्रभाषन्ते सङ्ख्याया तास्तु षोडश।" सुकल्प ८ अ। "अष्टाविंशतिरित्येके ततोऽप्यन्ये तु भूयसी। सप्तरात्रानुचरा वदन्त्यन्ये सहस्रश। महद्द्रव्यदर्पा तु लूतैकैव विषात्मिका॥ रूपाणि नामतश्चाप्या दुर्ज्ञेयान्यतिसङ्करात्। कृच्छ्रसाध्या प्रधानदोषैरसाध्या निचयेन सा॥" दशलक्षण—"लूता दंशश्च सर्व्वोऽपि दद्रुमण्डलसन्निभ। सितोऽसितोऽरुण पीत श्यावो वा मृदुरुन्नत। मध्ये कृष्णोऽथवा श्याव पर्य्यन्ते जालकावृत। विसर्पवान् शोफयुतस्तप्यते बहुवेदन। ज्वराशुपाकी विक्लेदकोथावदरणान्वित। क्लेदेन यत् स्पृशत्यङ्गं तत्रापि कुरुते व्रणम्। श्वासदंष्ट्राशकृन्मूत्रशुक्र लालानखार्त्तवै। अष्टाभिरुद्दमत्येषा विष वक्त्रैर्विशेषत। लूता नाभेर्दशत्यूर्द्धम् ऊर्द्धं चाधश्च कीटका।" लूतादंश दिनार्द्धं नैव लक्ष्यते। प्रथमे दिने सूचीव्यधनवत्, द्वितीये उन्नत पिडकाचित, तृतीये पुलकरक्तमण्डलातिवेदनारोमकूपस्रावश्च, चतुर्थे महाशोफताप, पञ्चमे विषकोपजविकार, षष्ठे मर्म्मव्याप्ति, सप्तमे च दिने नाश। चिकित्सा—दंशोद्धारदाहादिकं कार्य्यम्। अगदाश्चात्र पद्मक मन्दर गन्धमादनादयो हिता। वाउ ९७ अ। तदुत्पत्त्यादि यथा—"विश्वामित्रो नृपवर कदाचिदृषिसत्तमम्। वसिष्ठ कोपयामास गत्वाश्रमपद किल। कुपितस्य मुनेस्तस्य ललाटात् स्वेदविन्दव। अपतन् दर्शनादेव महतस्तीव्रवर्चस। लूने तृणे महर्षीणां धेन्वर्थं सम्भृतेऽपि च। ततो जातास्त्विमे घोरा नानारूपा महाविषा। अपकाराय वर्त्तन्ते नृपसाधनवाहने। कृच्छ्रसाध्या तथासाध्या लूतास्तु द्विविधा स्मृता। तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु। त्रिमण्डला तथा श्वेता कपिला पीतिका तथा। आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता। ताभिर्दष्टे शिरोदुःखं कण्डूर्दंशे च वेदना। भवन्ति च विशेषेण गदा श्लैष्मिकवातिका। सौवर्णिका लाजवर्णा जालिनी एणीपदी तथा। कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृता। ताभिर्दष्टे दंशकोथ प्रवृत्तिः क्षतजस्य च। ज्वरो दाहोऽतिसारश्च गदा स्युश्च त्रिदोषजा। पिडका विविधाकारा मण्डलानि महान्ति च। शोफा महान्तो मृदवो रक्ता श्यावाश्चलास्तथा॥" सुकल्प ८ अ। पिपीलिकायाम्।

**लूतारिः**। पु। दुग्धिकायाम्। থিরুই। रानिव ४।

**लूतिका**। स्त्री। लूतायां। মাকড়শা। शर।

**लून.**। त्रि। छिन्ने। अम।

**लूनक.**। पुं। पशौ।

**लूमम्**। क्ली। लाङ्गूले। अम। [ कादौ। ईच।

**लूमविष**। पुं। पुच्छदंशकप्राणिमात्रे, वृश्चि

**लेखः ।** पुं । तालवृक्षे । पत्रम् ।

**लेखनम् ।** क्ली । कार्श्ये । छिद्रकम् । लेखनाख्ये अनिलानलभूयिष्ठे द्रव्ये । सु । अथवा, —“धातून् मलान् वा देहस्य विशोष्योल्लेखयेच्च यत् । लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यवः ।” भा । भूर्ज्जत्वचि । तालपत्रे । मे । ईषत्कम्मदारस्य । तन्नामकाञ्जने । “लेखनञ्चाररतौ व्यामरसेरञ्जनं सुष्यते ।” सोऽट । भा । पु । तामवृक्षे । ९९०८ । रा नि व ८ । तन्नामकनिकुञ्जवल्ली । त्रिफलाक्वाथ गोमूत्रक्षौद्राक्षारसमायुता । ऊषकादिप्रतीवापे वंशतो लेखना स्मृता ॥” भा । त्रि । वान्ति करे । मे ।

**लेखनाञ्जनम् ।** क्ली । कषायाम्लकटुद्रव्यैरञ्जने । च द ।

**लेखनात्मकम् ।** क्ली । कतकबीजे । वै निघ ।

**लेखनी ।** स्त्री । खटिकायाम् । खड़िमाटी । तामवृक्षे । वै निघ । वर्त्ति विशेषे, चन्द्रोदयवर्त्ती । मञ्जनाभि मन शिला पथ्या बिभीतकमन्ना पिप्पली मरिचं वचा कुष्ठचेति द्रव्यै ह्यादुग्धेन वर्त्ति । सा कौ ।

**लेखनीयवर्गः ।** पु । चरकोक्तद्रव्यदशके । यथा—“मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटु रोहिणीचित्रकचिरविल्वहैमवत्य । इति दशेमानि लेखनीयानि भवन्ति ।” चिरविल्व करञ्ज । हैमवती शुक्लवचा । च सू, ४ अ । [ भा ।

**लेख(ख्य)पत्र ।** पु । तालवृक्षे । भूर्ज्ज वृक्षे ।

**लेखशा (सा)ट, (क) ।** पु । शैलुवृक्षे । वै निघ ।

**लेखार्हः ।** पु । तालवृक्षभेदे, श्रीताल इति कोङ्कणे प्रसिद्धे । श्रीताल, ल्वेड़ेट्ट । रा नि व ९ ।

**लेख्य ।** पु । श्रीतालवृक्षे । रोहिण्यादिरोगे । सु सू, ५ अ । त्रि । लेखनीये, लेखनार्हे ।

**लेण्डम् ।** क्ली । लण्डायां । न्याड । भूरिप्र ।

**लेनीतक ।** पु । औत्तरापथिकपाषाणभेदं । सियो छर्दि चि ।

**लेप (नम्) ।** पु, क्ली । सुधायाम् । चूर्ण । विष्ठ । भोजने । चन्दनादिद्रव्यलेपने । गाये लेपा । लेपस्त्रिविध —दोषघ्नो विषहा वर्ण्यश्चेति । पुनश्च तस्य द्वौ भेदौ आलेपः प्रदेहश्चेति । तयोरालेपः पित्तघ्नः आर्द्रमाहिषचर्म्मवच्छीतलः तनुर्विशोषी च । द्वितीयः वातश्लेष्मघ्नः आर्द्रः घनः उष्णश्चेति । प्रलेपनिषेधो रात्रौ केवलं व्रणे पथ्य । शुष्यमाणश्च तं न धारयेदिति । तदुक्त— “दोषघ्नो विषहा वर्ण्यो लेपस्त्रिविधो मतः । द्वौ तस्य कथितौ भेदौ प्रलेपाख्यप्रदेहकौ ॥ तमसा पिहितौ सूक्ष्मा रोमकूपेषु संस्थितः । विना लेपेन निर्य्याति रात्रौ नालेपयेदतः ॥” गुणा —“सुशीतो लेपस्तु स्यादुष्ण प्रोक्त प्रदेहकः । प्रलेपः शीतलः प्रोक्तः रक्तपित्तहरः परः । प्रदेह कफवातघ्न पाचन परिकीर्त्तितः । यदार्द्रं माहिषचर्म्म तच्छीतस्पर्शेन लेपनं । लोमाभिमुखमादेयौ प्रलेपाख्य प्रदेहकौ । अङ्गुष्ठस्य चतुर्भागो मुखलेपो विधीयते ॥ न रात्रौ लेपनं दद्यात् दत्त निष्पतितं तथा । न च पर्य्युषितं चापि शुष्यमाणं न धारयेत् । न चापि मुखमालिम्पेत तेन दोषः प्रसिच्यते ॥” सु । “अपाकि शोथे विषमे गम्भीरे कफवायुना । संयुक्त रक्ते विहितौ रात्रौ लेपश्च निश्चितम् ॥ षड्भागा पैत्तिके लेहा चतुर्भागश्च वातिके । अष्टभागास्तु कफजे स्नेहमात्रा प्रदापयेत् ॥” डल्लण । अथ क्षणान्तरेय । “षोडशांश षडंशञ्च चतुर्थांशं प्रदापयेत् । लेपप्रदेहयोः क्षौद्र विपरीते विपेत्तितम् । विकारतत्त्वप्रकृतिप्रमाणे सैन्धवादिकं । लेपनाद्ये सततञ्चात् यस्मादुपरि वर्ज्यते ॥ स्नेहाम्ललवण तत्र व्यक्तं ज्ञात्वा विनिक्षिपेत् । विषदोषहरागद्यौ सतीरघ्ने विधिस्त्वयम् ॥ यस्तु वर्ण्यो न तस्यैषा इति वृद्धपरम्परा ॥” अथ शिरोलेपविधि —“उक्तानुक्तेषु लेपेषु सवेष्टैरण्ड पत्रके । कुर्य्याद्रात्रौ दिवा स्नानं युक्तिरेषा प्रशस्यते ॥” इति लेपविधि । चन्दनलेपगुणा —

“चन्दनलेपगुणा —“चन्दनं शीतलं तिक्तं तृष्णा दाहास्रपित्तजित् ।” अगुरुलेपगुणा —“अगुरु व्रणजित्तिक्तकटूष्ण कफवातजित् ।” कुङ्कुमलेपगुणा — ‘कुङ्कुमं हि वैवर्ण्यकण्डूवातकफापहम् ।” कस्तूरीलेपगुणा —“कस्तूरी छर्द्दिदौर्गन्ध्यरक्तपित्त ज्वरापहा । लताकस्तूरीलेपगुणा —“लता कस्तूरिका हृद्या शीता तिक्तास्यरोगनुत् । तेजपत्र लेपगुणा —“पत्रकं कफवातार्शोहृल्लासारोचकाप हम् ।” कक्कोलादिलेपगुणा —“कक्कोलं कटुकं हृद्यं सुगन्धि कफवातजित् ।” मुरादिलेपगुणा —“मुरा वातकफश्वासकास ज्वरविनाशिनी ।” “उशीरं स्वेददौर्गन्ध्यदाहविनाशरोगजित् । रक्तपित्तहरं बल्यं चक्षुष्यं रक्तचन्दनम् । शीवास

सरल पूति कुन्दुरवं श्रिपथिक। शिहक मांसी देवदारु सुरा नख। सर्व्वंऽमी परमालच्मी रचोघ्न ज्वरनाशना ॥" राज २प ।

लेपन: । पु । शिह्लके । शिलारस । रा नि व १२।

लेलिह: । पु । कृमौ । पुरीषजकृमिविशेषे । च वि ७श ।

लेलीन: (क:) । पु । गन्धके । वै निघ ।

लेश: । पु । स्वल्पे ।

लेह: (नम्) । पु, क्ली । आस्वादने । चाटा। रा नि व २०। ईच । भोजने । अवलेहे । प प्र १ख । लेहपाकविधि —"लेहे यत्रास्ति यो भागो निर्द्दिष्टो द्रवकल्कयो । तत्रापि पादिक कल्क द्रवात् कार्य्यो विजानता ॥ तुलाद्रव्य जलद्रोणे द्रोणे द्रव्ये तु सा मता ॥ देयो गुड सिता वापि इति सर्व्वत्र निश्चितम्। अवलेहस्य लेहस्य तस्य मान पलद्वयम् ॥ सुखमर्द्द सुखस्पर्शो गन्धवर्णं रसान्वित । पीड़ितो भजते क्षेह लेह पाक सुपागत ॥" वा ।

लेहिन' । पु । टङ्कणचारे । সোহাগার থই। ईच ।

लेह्री । स्त्री । कर्णपालीरोगे । निदा ।

लेह्यम् । क्ली । अष्टविधान्नान्यतमान्ने । रा नि व २०। अमृते । श मा । वि । लेहनयोग्ये ।

लेह्निको । स्त्री । वमनविरेचनयो शोधनविशेषे । च द वमनाधिकारे ।

लैङ्गी । स्त्री । लिङ्गिनीलतायाम् । रा नि व ३।

लोक: । पुं । प्रसिद्ध स द्विविध स्थावरो जङ्गमश । "द्विविधात्मक एवायेय सौम्यस्य पश्चात्मको वा" इति । सु सू १श ।

लोककान्ता । स्त्री । ऋद्धिनामौषधे। रा नि व५। See ऋद्धि ।

लोकतुषार' । पु । कर्पूरे। रा नि व १२।

लोकनाथ । पुं । पारदे। वै निघ ।

लोकसञ्ज्ञा (ञ्जिका) । स्त्री । कन्दगुडूच्याम् । रा नि व ३।

लोकस्कन्द' । पु । तमालद्रुमे । वै निघ ।

लोकहिता । स्त्री । तुत्थाञ्जने । कुलत्थायाम् । वनमान्मद्रा। रा नि व ५।

लोकेश । पु । पारदे । रा नि व १३।

लोचक: । पु । नेत्रकनीनिकायाम् । कज्जले । कदल्याम् । भ्रुव शिथिलचर्म्मणि । मे । मांस लड्डु के । बदरीवृक्षे । नीलवस्त्रे । निर्म्मितौ । त्रिका । अहिनिर्मोके । श र ।

लोचककर्कट: । पु । लोचमस्तके । शठी स्त्रा ।

लोचनम् । क्ली । नेत्रे । रा नि व १८ । नीरके। वै निघ । गवाचे । वा उ ३९श ।

लोचनहिता । स्त्री । कुलत्थाञ्जने । रा नि व १३। तुत्थाञ्जने ।

लोच(भ)ना (नो,या) । स्त्री । महाश्रावणिकायां । मुण्डीरी । रा नि व ५।

लोचनामय' । पु । नेत्ररोगे । त्रिका ।

लोचमकट: । पुं। मयूरशिखायाम् । ঝুঁঝকা। शटी स्त्रा ।

लोचमस्तक' । पु । अजमोदायाम् । भा । मयूरशिखायां । अम ।

लोचशिर: । क्ली । अजमोदायाम् । वै निघ ।

लोचिका । स्त्री । लुचौति ख्याते खाद्यद्रव्ये । नूचि। पाकराजेश्वर ।

लोटा (टिका) । स्त्री । चुक्रायाम् । চুকা পালং। वै निघ ।

लोठनम् । क्ली । दलस्ततश्चालने । চালা। লোটা । मा नि ।

लोडा (णा) । स्त्री । चाङ्गेर्य्याम् । আমরুল শাক । लोणिकादये । ছোট নুনী বড় নুনী শাক। रा नि व ५। क्षुद्रलोणिकायाम् । भा ।

लोणकम् । क्ली । लवणे । वै निघ ।

लोणाढ्यम् । क्ली । लवणद्वये । रा नि व ८।

लोणा । स्त्री । क्षुद्राम्लिकायाम् । लोणिकायाम् ।

लोणाम्ला । स्त्री । क्षुद्राम्लिकायाम् । খুদে নুনী। रा नि व ५।

लोणारम् । क्ली । लवणचारे । लोणार खार इति दाचिणात्ये प्रसिद्धम् । লোণার ক্ষার। तत्पर्य्याया,—लवण लवणमद लवणचार लवणाकरज लवणोत्थं कलत्र । गुणा—कटु,च तीक्ष्ण पित्तहृद्धिकर वातगुल्मार्त्ति शूलघ्नम् कृमिलवणद । रा नि व ६।

लोणिका । स्त्री । লোণীশাক । খুদেনুনী,

वन शुनी। प सु। चाङ्गेरी। आमरूल। भा पू १म। चुक्राया। चूकापालङ्। है निघ।

**लोणी।** स्त्री। (Portulaca quadrifida Syn Meridiana or P Oleracea) Indian Purslane पत्रशाकभेद। बड़ वा वन नुनी, क्षुद्र नुनी। हि लुणियाशाक वा लुणिया, खुरका। तै पप्पुकुर। तम् कुर्का। ता कोरिलकीरद। तत्पर्य्यायो—लोणा लोणी। इद्दलोणास्तु पर्य्याय घोटिका। सा द्विधा क्षुद्रा इहती च। तयो क्षुद्रा रुचा गुरु वातश्लेष्महरी अम्ला दीपनी उष्णा मन्दाग्निहरी च। इहती अम्ला सरा उष्णा वातकृत् कफपित्तघ्नी वाग्दोषघ्नी व्रणघ्नी गुल्मघ्नी श्वासकासप्रमेहघ्नी शोथे नेत्ररोगे च हिता। भा पू १म भा व।

**लोत. (वम्)** पु, क्ली। लवणे। नेत्रजले। चिका। चिह्न। उषा।

**लोतनी।** स्त्री। महाशावरिकायाम्। बड़ थुलकुड़ि।

**लोध, (ध्र, क)।** पु। (Symplocos racemosa) स्वनामख्याततरु। लोध गाछ, लोध काठ। हि लोध। तै तल्ललोद्दुगचट्टु। गुज लादर। तत्पर्य्याया,—गालव तिल्व शाबर मलिप्रिय वानराघात लोध्रार्द्र बलभद्र रोध्र तिलक तिल्लक तिल्वतरु तिल्ली काण्ड कीलक काण्डनील काण्डनीलक लोध्रवृक्ष लोध्रकवृक्ष शम्बर हस्तिलोध्रक हेमपुष्पक शावरक तिरीट तिरीटक रक्तलोध्रस्य पर्य्याया, तिरीट माञ्जन रक्तलोध्र तिन्दुक लाक्षकम्पा। श्वेतस्य पर्य्याया,—शुक्ल शावरलोध्र शावर महालोध्र। सु सू ३०व लोध्रादि। च द ज्व चि लोध्रादि। "लोध्रोत्पलामृतापद्म।" स द्विविध वल्कसामान्यभेदात्। तत्र विशिष्टो वल्करोध्र इति। रा नि व ६। स गुणा—रोध्रद्वय कषाय शीतल वातकफरोध्र चक्षुष्य विषघ्न। "रोध्रो ग्राही लघु शीतश्चक्षुष्य कफपित्तनुत्। कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत्॥" भा।

**लोध्रपुष्प।** पुं। मधूकवृक्षे। मउल गाछ। वै निघ।

**लोध्रपुष्पक.।** पु। शालिधान्यविशेषे। भा पू १म भा व।

**लोध्रपुष्पिणी।** स्त्री। इस्वधातक्याम्। क्षुद्र धाइ फूल। वै निघ।

**लोध्रवलम्।** क्ली। तन्नामकै चक्रपाणिदत्तस्य कुले। त्रि (स्त्री)। तत्कुलसम्भूते। च द।

**लोध्रवृक्ष.।** पु। मधूकवृक्षे। रोध्रवृक्षे। वै निघ।

**लोध्रादि.।** पुं। पित्तज्वरघ्नकषाये। च द पि ज्व चि। "लोध्रोत्पलामृतापद्मशारिवाणां समाकृत। क्वाथ पित्तज्वर हन्यात्।"

**लोपाक।** पु। शृगालभेदे। स लाङ्गलकम्पन इत्युच्यते। लोपा इति लोके। खाँकशियाल। सु चि २८ व। अथ विलशयगुण।

**लोपाकि(शि)का।** स्त्री। धूर्त्तशृगालिकायाम्। खाँकशियाली। श मा। हारा।

**लोपाशक.।** पु। शृगाले। खाँकशियाल। हारा।

**लोभनम्।** क्ली। मांसे। वै निघ।

**लोभ्य।** पु। हरिताले। वै निघ। त्रिस्त्री धान्यभेदे, मुद्गे। मुग। हे च।

**लोमम्।** क्ली। लाङ्गूले। लेज। जटा।

**लोम (न्)।** क्ली। केशे। रोम्णि। रोँआ। अम। तदुक्त—"षण्णो मलानि लोमानि असख्यानि भवन्ति हि।" भा।

**लोमकरणी।** स्त्री। मांसरोहिणीभेदे। रा नि व १२।

**लोमकर्कटी।** स्त्री। अजमोदायाम्। वै निघ।

**लोमकर्ण।** पु। शशके। खरगोश। हे च।

**लोमकूप।** पु। त्वक्रन्ध्रे। "सन्ति यावन्ति रोमाणि तावन्तो लोमकूपका।" भा।

**लोमघ्नम्।** क्ली। इन्द्रलुप्तरोगे। टाक्पोका। त्रि। लोमपातने। निदा।

**लोमद्वीप।** पु। शोणितजकृमिभेदे। उडुम्बरकृमि। च वि ७व।

**लोमफलम्।** क्ली। भव्यफले। चालता। रा नि व ११।

**लोमविध्वस।** पु। कृमौ। कृमि। वै निघ।

**लोमविष।** पुं। व्याघ्रादौ। हे च।

**लोमशः।** पु। मध्याली। 'मउ' आनू। धातुकासीषे। "कासीषे तमालपत्रे च।" ष द। मेषे। त्रिका। कोकड़नामविशेषमृगे। रा नि व १९।

**लोमशकर्णः।** पु। विलेशयमृगभेदे, शशके। शशक। सु सू,४६ अ।

**लोमशकाण्डा।** स्त्री। कर्कटिकायाम्। काँकुड़ गाछ। रा नि व ७।

**लोमशच्छद.।** पु। देवताडवृक्षे। देवताड़ा। प मु। पीतदेवदाल्याम्। त्रिका।

**लोमशपत्रा (त्रिका)।** स्त्री। पीतदेवदाल्याम्। वै निघ।

**लोमशपर्णिनी।** स्त्री। माषपर्ण्याम्। माषाणी। प मु।

**लोमशपुष्पक.।** पु। शिरीषवृक्षे। रा नि व ९।

**लोमशमार्जार.।** पु। गन्धमार्जारे। गन्ध गोकुल। तत्पर्य्याया,—पूतिक मारजातक सुगन्धी मूत्रपातन गन्धमार्जारक। तद्गुणगुणा —कफवातघ्न चक्षुष्य सुगन्धि वीर्य्यकर कण्डू कोठघ्न। रा नि व १९।

**लोमशा।** स्त्री। गन्धमांस्यां, सुगन्धजटामांस्यां। गन्धमांसी, सुगन्ध जटामांसी। रा नि व १२। वचायाम्। वच। काकोल्यां। काँकुला। रा नि व २३। मिश्याम्। मउरी। च सू ३ अ। काकजङ्घायाम्। शुकशिम्ब्यां। महामेदायां। मे। शणपुष्पायाम्। एक्कारी। काँकुड़ गाछ। रा नि व ४।७। अतिबलायां। विश्व।

**लोमशातनम्।** वि। लोमनाशके हरितालादौ। तन्त्रम्।

**लोमशी।** स्त्री। कर्कटीविशेषे। वै निघ।

**लोमहर्षणम्।** क्ली। रोमाञ्चे।

**लोमहृत्।** पु। हरिताले। हे च।

**लोमा।** स्त्री। वचायाम्। वै निघ।

**लोमाद।** पु। मलजक्रिमिभेदे। च वि ७ अ।

**लोमालिका।** स्त्री। शृगालिकायाम्। शियाली। श्वाकृनिशृगाली। त्रिका।

**लोलजिह्वा।** स्त्री। महाबलायाम्। वै निघ।

**लोला।** स्त्री। जिह्वायां। त्रिका।

**लोलान्धः।** पु। अपस्माररोगे। रा नि व २०।

**लोलिका।** स्त्री। क्षुद्रीविशेषे। पाटिशाग। चाङ्गेरी। आमरुल। "क्षुद्रदलगठामलं चाङ्गेरी लोलिका च सा।" लटा।

**लोलिनी।** स्त्री। नीलदुग्धायाम्। (विन्दुघृते)।

**लोलिम्बराजः।** पु। वैद्यजीवनग्रन्थकारे।

**लोष्टम्।** क्ली, पुं। गृड। लोष्ट्र। ढेला। अम। लोहमले। लोहाचूर, मण्डूर। रा नि व १४।

**लोष्टराजः।** पु। रौप्ये। वै निघ।

**लोहम्।** क्ली, पु। अगुरुणि। काष्ठागुरुणि। रा नि व १२। च सू ३ अ। सियीयज्ञ वि। "लोहाम्रशामया।" आ यु ११ चिकित्सामज्ज वि। "लोहलामज्जर्कलामि।" कास्यधातौ। काँसा। रा नि व १३। रक्तधातौ। वङ्ग। रा नि व १८। स्वर्णे। शुद्धलोह। कान्तलोह। ताम्रे। पित्तले। रौप्ये। शीसके। वङ्गे। अस्त्रे। मे।

**लोहकण्टकः।** पुं। मदनवृक्षे। श च।

**लोहकर्ष. (कः)।** पु। लोहचुम्बके। चुम्बक पाथर। भा।

**लोहकान्त(क)म्।** क्ली। कान्तलोह। इस्पात। प मु। लोहचुम्बके। वै निघ।

**लोहकिट्टम्।** क्ली। लोहमले। मण्डूर। रा नि व १३। प्रयोगे तत्र पुराणं ग्राह्यम्। सियी इदद्रिमुखचूर्णे।

**लोहकीटः।** पुं। मण्डूरे। वै निघ।

**लोहचूर्णम्।** क्ली। लोहमले। मण्डूर। रा नि व १३।

**लोहजम्।** क्ली। रुक्मलोहे। वर्णलोहे। लोहमले। मण्डूर। रा नि व १३। कांस्ये। हे च।

**लोहद्रावी (द्रन्)।** पु। टङ्कणक्षारे। सोहागा। रा नि व ६। अम्लवेतसे। प मु।

**लोहनिर्यास।** पु। लोहकिट्टे। मण्डूर।

**लोहपञ्चकम्।** क्ली। स्वर्णरौप्यताम्रवङ्गशीसेषु, स्वर्णरौप्यताम्रपुकान्तलोहेषु वा।

**लोहपत्रिका।** स्त्री। शालिधान्ये।

**लोहपृष्ठ।** पु। कङ्कपक्षिणि। काँक पाखी। अम। च सू,२७ अ। [धान। च सू २७ अ।

**लोहवाल।** पु। शालिधान्यविशेषे। लोहराज

**लोहमलम्**। क्ली। लोहकिट्टे। मधुर। वै निघ।

**लोहमार, (कः)**। पु। शालिंचशाके। पसु। त्रिका। लोहमर्द्दकद्रव्ये। लोहमर्द्दकद्रव्यवर्गो यथा—"त्रिफला त्रिवृता दन्ती कटुकी ताल मूलिका। हरिद्राके हवीर हपवक चित्रका। शृङ्गवेरविडङ्गौ च भल्लातकौषधम्। दाडिमस्य च पत्राणि शतपुष्पा पुनर्नवा। कुठारच्छिन्नकी कन्द तन्वी मेकस्य पर्णिका। हस्तिकर्णपलाशश्च कुलिश वैशराजक। माण खण्डितकणश्च गोजिह्वा लोहमारक। गिरिग्रान्तनक प्रोक्त त्रिफलादि रयं गण॥" रसार।

**लोहराजकम्**। क्ली। रौप्ये।

**लोहरण्डक.**। पुं। मदनवृक्षे। व निघ।

**लोहल**। त्रि। अस्फुटभाषिणि। তোৎলা। श्रम।

**लोहवरम्**। क्ली। स्वर्ण। त्रिका।

**लोहविट् (ष्ठा)**। पु। लोहमले। मधुर वै निर्घ।

**लोहशुद्धिट**। पु। टङ्कणक्षारे।

**लोहश्लेषण**। पु। टङ्कणचार। সোহাগা। हेच।

**लोहसङ्करम्**। क्ली। वर्त्तलोहे, वक्मलोहे। रा नि व १३।

**लोहसार**। पु। सारलोहे। वै निघ।

**लोहसिहानम् ( निका )**। क्ली, स्त्री। लोहकिट्ट। भा।

**लोहहृत्**। पु। हरिताले। वै निघ।

**लोहाख्यम्**। क्ली। अगुरुकाष्ठे। रमा।

**लोहि**। क्ली। मुक्तटङ्कणे। শ্বেত সোহাগা। रा नि व ६।

**लोहिका**। स्त्री। लोहपात्रविशेषे। লোহাড়ি। त्रिका।

**लोहितम्**। क्ली। रक्तचन्दने। रा नि व १२। सिद्यापटकश्चरतैल। पद्मकचन्दन। वकम काष्ठे। रक्तकुङ्कुमे। हरिचन्दन। रा नि व १२। कुङ्कुमे। मे। स्वर्णगैरिके। क्षुद्रागुरुणि। वै निघ। कुसुम्भपुष्पे। पुं। माणिक्ये। पद्मराग। भा। रक्तपित्ताखौ। नाग आलू। रा नि व ७। रक्तेचौ। रक्तशाली। रा नि व १६।१६। पलाण्डौ। प सु। रोहितमत्स्य। मृगविशेषे। श र। मसूरे। श च। सप। धरणि। नदभेदे। मे। रक्तलशुने। नेत्ररोगभेदे। त्रि। रक्तवर्णे।

**लोहितकम्**। क्ली। पित्तलधातौ। পিতল। रा नि व १३। पु। माणिक्यभेदे। पद्मराग। हे च। शालिधान्यभेद। सुसू ४६अ।

**लोहितकन्द**। पु। पलाण्डौ।

**लोहितकुस्तुम्बुरुधान्यम्**। क्ली। तुरव यावनालै।

**लोहितचन्दनम्**। क्ली। रक्तचन्दने। कुङ्कुमे। श्रम।

**लोहितजम्**। क्ली। हरिचन्दने।

**लोहितपित्तम्**। क्ली। रक्तपित्ते।

**लोहितपुष्पक**। पु। दाडिमवृक्षे। भा।

**लोहितपुष्पिका (ष्पी)**। स्त्री। उष्ट्रकाण्डी पुष्पवृक्षे। वम् উট্‌কাটারা। रा नि व १०।

**लोहितमृत्तिका**। स्त्री। गैरिकमृत्तिकायां। গিরিমাটি। रक्तमृत्तिकायां। লালমাটি। पसु।

**लोहितयष्टिका**। स्त्री। मञ्जिष्ठायाम्। सि यो च द ज्व चि पट्कश्चरतैले। "लाक्षानिशा लोहितयष्टिकाभि।"

**लोहितलता**। स्त्री। मञ्जिष्ठायाम्। रत्नच।

**लोहितशालि**। पु। रक्तशाली। দাদখানি ধান, রাঙা ধান। "तथा लोहितक श्रेष्ठोदोषघ्न शुक्रमूत्रल चक्षुष्यो वर्णबलकृत् स्वर्यो हृद्य स्तृषापह॥ तथो ज्वरहरश्चैव सर्वदोषविषापह। तस्मादन्यान्तरगुणा क्रमश शालयोऽपरा।" रा नि व १६।

**लोहितशिग्रु**। पु। रक्तपुष्पशिग्रौ। লাল সজিনা। वै निघ।

**लोहितक्षया**। स्त्री। योनिव्यापद्विशेषे। लक्षणं यथा—'वातपित्ताभ्यां क्षीयते रज। सदाहकार्श्यं वैवर्ण्यं यस्या सा लोहितक्षया।' वा उ ३३अ।

**लोहिता**। स्त्री। वराहक्रान्तायाम् বরাহক্রান্তা। श च। रक्तपुनर्नवायाम्। रा नि व ५। जिह्वा भेद। मञ्जिष्ठायाम्। लाक्षायाम्। लज्जालुकायां। वै निघ। शरीरे त्वग्रनामिका द्वितीया त्वक्। "या मीह षोडशभागप्रमाणा तिलकालकाधि ष्ठाना।" सु शा ४अ।

**लोहिताङ्गः** । पुं । कम्पिल्लके । कमलागुँड़ि । रा नि व १३ ।

**लोहितानन:** । पु । नकुले । नेउल । रा नि व १९ ।

**लोहिताभः** । पु । रक्ताभमहाविषश्रयिक विशेषे । सु कल्प ८ प ।

**लोहितायः (यसम्)** । क्री । ताम्रे । तामा । विका । व्याक ।

**लोहितार्म (न्)** । क्री । शुक्लभागगतनेत्ररोगे । लक्षण—"यन्मांसप्रचयमुपैति शुक्लभागे पद्माभं तदुपदिशन्ति लोहितार्म्म ।" सु उ ४ प ।

**लोहितालु** । पु । रक्तपिण्डालौ । लाल आलू । कोङ्कणे प्रसिद्धे फोगड़ाली । रा नि व ७ ।

**लोहिताक्षम्** । क्री । तन्नामकसक्थिमर्म्म भेदे । ऊर्द्धमधोवङ्क्षणस्य ऊरुमूले ।" सु शा ६ प । पु । दर्वीकरजातीयसर्पे । सु कल्प ४ प । कोकिले । श च ।

**लोहितिका** । स्त्री । मञ्जिष्ठायाः । रामतरुण्यां । सु चि ११ प ।

**लोहितेक्षु** । पुं । रक्तेक्षौ । काशनि ईक्षु । रा नि व १४ ।

**लोहित्याज** । पु । तृणधान्यभेदे । लोहित श्यामा । गुणा—श्यामाकवत् । च सू २७ प ।

**लोहिनी** । स्त्री । श्वेतकिणिहाम् । वै निघ ।

**लोही** (हिन्) । पु । रोहितकवृक्षे ।

**लोहोच्छिष्टम्** । क्री । लौहकिट्टे । वै निघ ।

**लोहोत्तमम्** । क्री । स्वर्णे । हे च ।

**लोहोत्थम्** । क्री । मण्डुरे । वै निघ ।

**लोह** । पुं, क्री । (Ferrum) Iron स्वनाम ख्यातधातौ । लोहा । हि लोखोया । तैं इनमु । मुण्डतीक्ष्णभेदेन सामान्यसस्तद्द्विविध । तयोर्मुण्डस्य पर्य्याया,—मुण्ड मुण्डायस ध्वनत्सार शिलात्मजं चायस कृष्णलोह धार कृष्णायस । तीक्ष्णस्य पर्य्याया,—तीक्ष्ण शस्त्र शस्त्रायस पिण्ड पिण्डायसं शठ चायसं निशितं तीव्र खड्ग मुण्डजं चय चित्रायसं चीनजं । लौहस्य गुणा— लौहं तिक्तं सरं शीतं मधुरं तुवरं गुरु । रुक्षं वयस्य चक्षुष्यं लेखनं वातलं जयेत् । कफं पित्तं गरं शूलं शोथार्शःप्लीहपाण्डुता । मेदोमेहकृमीन् कुष्ठं तत्किट्टं तद्वदेव हि ॥" इति । लौहमष्टधा क्रौञ्च(काचि)कालिङ्गकालिभद्रवज्रपाण्डिनिरङ्गकान्त भेदेन गुणा—"सामान्याद्द्विगुणं क्रौञ्चं कालिङ्गो ऽष्टगुणस्ततः । कालं शतगुणं भद्रं भद्राच्च सहस्रधा । वज्रात् शतगुणं पाण्डि निरङ्ग दशभिर्गुणैः । तत कोटिसहस्रर्वा कान्तलौहं महागुणम् ॥" रस चि ८प । दोषा—"गुरुता दृढतोत्क्लेदं कश्मलं दाहकारिता । अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु ॥" इति । अशुद्धलौहदोषा— "षण्ढत्वकुष्ठामयमृत्युदं भवेत् हृद्रोगशूलौ कुरुतेऽश्मरीञ्च । नानारुजामाश्च तथा प्रकोपं करोति हृल्लासमशुद्धलोहम् ।" तत्सेवने निषध । "कुष्माण्डं तिलतैलञ्च माषान्नं राजिकान्तथा । मद्यमम्लरसञ्चापि त्यजेल्लौहस्य सेवकः ॥" लौह शोधनादिपरिभाषा—"शुद्ध्यर्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा । चतुर्गुण फलात्तोयमष्ट भागावशेषितम् । एष एव विधिर्ज्ञेयः मारणेऽपि प्रशस्यते । वधार्थं त्रिफला ग्राह्या लौहात्रित्य चतुर्गुणा । तोयमष्टगुणन्तत्र चतुर्भागावशेषितम् । भानुपाकार्थमिच्छन्ति त्रिफलामथवा समाम् ॥" पप्र । लौहमारणम्—"शुद्ध लौहभवं चूर्णं पातालगरुडीरसैः । मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयं । पुटत्रयं कुमार्य्याश्च कुठारच्छिन्नकारसैः । पुटषट्क ततो दद्यादेवं तीक्ष्णमृतिर्भवेत् ॥" अन्यत्र —"त्रिपेष द्वादशांशेन दरदं तीक्ष्णचूर्णतः । मर्द्दयेत् कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् । एवं सप्तपुटैर्मृत्यु लौहचूर्णमवाप्नुयात् ॥" इत्यादि । "लौहवत् सप्तधा तप्ता लौहपत्नी तत्ताग्निना । गोमूत्रे शुद्धिमायाति निर्विका स्वविधानतः ॥" सा कौ । मृतलौहलक्षणम्—"लौहगुणसमाकारं स्पर्शग्राह्यं प्रतीयते । यदा लौहस्तदा ज्ञेय सुमृतो वेदसत्तमैः ॥" अदद । लौहोत्पत्ति — —"पुरा लोमिलदैत्यानां निहतानां सुरैर्युधि । उत्पन्नानि शरीरेभ्यो लौहानि विविधानि च ॥" भा पू १ म भा व । लौहसंस्कार । स त्रयोदशविध । शाणितर्षणम् उद्वर्त्तनम् अम्लभावनम् आतप शोष निषेक मारण दलन क्षालन सूर्य्यपाक स्थालीपाक चूर्णन पुटपाक पाकमिश्रमिश्र । "स्यात् षोडशगुण तोयमष्टभागावशेषितम् । अन्यानि यानि वस्तूनि योक्तव्यानि पुटादिषु । तानि लौहसमान्याहुर्मतं प्रागेव कीर्त्तितम् । लभ्यते स्वरसो येषां तेषां क्वाथोऽत्र नेष्यते ॥ त्रिफला

व्यतिरेकेण मतमेतत् पतञ्जलेः । एष एव विधिरिह - चालनेऽपि प्रशस्यते ॥ लौहवत् त्रिफला ज्ञेया त्रिफलावत् पयो मतम् । प्राक्कोक्तिम जलपाक मृदुमध्यादिभेदतः ॥ मृदुमध्यकठोरत्वात् क्वाथद्रव्यं त्रिधा मतम् । क्वाथद्रव्यानुसारेण इह स्याच्च जलं त्रिधा ॥" पतञ्जलिपाक सामान्य परिभाषा लौहमारणार्थम् । "त्रिगुणा त्रिफला लौहात् फलात् षोडशिकं जलम् । अष्टभागाव शिष्टन्तु मारणे जलमिष्यते ॥ समा च त्रिफला ग्राह्या जलपाकगुणन्तथा । वधार्थे स्थापयेत्तोय तस्मिन् वस्त्रशोधितम् । वधार्थेन सम ग्राह्य पाकार्थञ्च सम फलम् । अष्टभागावशिष्टञ्च पाकार्थं जलमिष्यते ॥ एव जल फल प्रोक्त यथासङ्क्षेण योजयेत् ।" अथ लौहपाकलक्षणमाह । तदुक्तं पतञ्जलिना । 'तावल्लौह पचेद्वैद्यो यावद्दर्व्या च गालितम् । समुद्र जायते व्यक्त न निःसरति स्यन्दिभिः ॥" अन्यच - "अङ्गुलिभ्यां दृढं घृष्टं यदा चूर्णत्वमागतम् । तदा सिद्ध विजानीयाल्लौह लौहविदां वर ॥ अङ्गनाश घन स्निग्ध श्लक्ष्ण मूलमलेपनम् । अक्लिन्नमथ स्निग्ध सम्यक्पकस्य लक्षणम् ॥ मन्दपाकाद्गुणो लौहमलभ्राधिललक्षणम् । अतिपाकेन तत्त्वेऽर्थं खरसुलभिततक्षणम् ॥' अमीघतत्त्वे चोक्त । "पाकास्तु त्रिविधा प्रोक्ता मृदुमध्यमतीक्ष्णका । त्रैविध्यात् सर्वधातूनां पित्तानिलकफात्मनाम् ॥ दर्व्यासाद्यते यत्तत् स्वं स्खलति वा नवा । मृदुपाक विजानीयात् पित्ते तद्वीक्ष्य योजयेत् ॥ सिकतापुञ्जोपम यत्तु सुपिण्डेण समन्वितम् । तदय खरपाक स्यात् श्लेष्मण्येव प्रकीर्त्तित ॥ एकैकगुणयोगित्वात् न तदिच्छन्ति सद्विद । सर्व्वप्रकृतिसेव्यत्वान्मध्यम बहुपूजितम् । गुडादि प्रविशेद्यत्र मच पाकोऽस्य मुदया ॥" कान्तलौहे । तीक्ष्णलौहे । राजनिघ १३।२३ । मण्डूरे । कांस्ये । अगुरुणि । अगुरु काष्ठे । राजनिघ २३ । [ व ११ ।

**लौहकान्तकम्** । क्ली । कान्तलौहे । राजनि

**लौहाकिट्टम्** । क्ली । मण्डूरे । पशु ।

**लौहजम्** । क्ली । वर्त्तलौहे । विद्री । राजनि घ १३ । मण्डूरे । रत्ना ।

**लौहदाहः** । पु । अश्वस्य वायुप्रकोपादौ दग्ध लौहशलाकया दाहकरणे । जय १४ ।

**लौहपत्नी** । स्त्री । लौहचटकायां । लोशार चटी । सा को लौहमारणे ।

**लौहपुरोषम्** । क्ली । लौहमले, मण्डूरे ।

**लौहभाण्डः** । पुं । अश्मभाले । शामानुनिशा । भ च । क्ली । लौहनिर्म्मितभाण्डे ।

**लौहभू** । स्त्री । लौहपात्रविशेषे । भ च ।

**लौहभेकोबीजम्** । क्ली । रसजारणबीजभेदे । रसचि ३ अ ।

**लौहमलम्** । क्ली । लौहकिट्टे । मण्डूरे । राजनिघ १३ । सुश्रुत २ द्रव्यादि ।

**लौहविशुद्धिदः** । पु । टङ्कणक्षारे । सोहागा । रसास टङ्कणशुद्धौ ।

**लौहसार** । पुं । सारलौहे ।

---

# व

**व'** । पु । वायौ । बाहौ । व्याघ्रे । वस्त्रे । मालुके । (त्रि) बलवति ।

**वंश** । पु । (Bambusa arundinacea) स्वनामख्यातपत्रमाकारचे । बाँश । हि बाँस । मं वेलु । तै वेदुरु, वेन्नसुक, वेन्न् वेंग । वम् माण्डग । ता मनूगिल । तत्पर्याया — त्वक्सार कर्म्मार त्वचिसार तृणध्वज शतपर्व्वा यवफल वेणु मस्कर तेजन किलाटी पुष्पघातक दृढपत्र किष्कुपर्व्वा वृष सुपर्व्व दृढग्रन्थि कण्टालु कण्टकी महावल दृढकाण्ड दृढग्रन्थि दृढपत्र धनुर्द्रुम धानुष्य । स द्विधा सामान्यो रन्ध्रवंशश्च । गुणा —उभावेव कषायौ ईषत्तिक्तौ शीतलौ मूत्रकृच्छ्रमेहार्शोदाहपित्तास्रघ्नौ च । रन्ध्रवंशस्तु विशेषेण दीपनोऽजीर्णघ्न रुच्य पाचन इत्य शूलघ्न । राजनिघ ७ । तत्करीरगुणा — "करीरो वंशजो रुच्य वातपित्तकर कटु । स कषायी विदाही च श्लेष्मघ्न पाकत कटु ।" राज ३ प । सर्व्वार्थे । भीम शीक्ष । राजनिघ ८ ।

रुक्षी। रा नि व १४। पृष्ठास्थि। পিঠের দাঁড়া। त्रिका।

**वंशकः।** पु। इक्षुविशेषः। শামশাড়া আখ। गुणाः—शीतल मधुर स्निग्ध पुष्टिकर श्लेष्म सारक अविदाही गुरु हृद्य मलवर्द्धक। सुश्रु ४५अ। क्षुद्रमत्स्ये। বাঁশপাতা মাছ। क्ली। अगुरुकाष्ठे। हारा।

**वंशकञ्जम्।** क्ली। कृष्णागुरुकाष्ठे। वै निघ।

**वंशकफम्।** क्ली। शाल्मलीतूलके, वंशतूलि वा। यद्वत्सार्द्र वायुना नीत नभसि उड्डीयते। हारा।

**वंशकरीरः।** पु। वंशाङ्कुरे। বাঁশের কোঁড়। तत्पर्य्यायाः,—करीर वंशाग्र यवफलाङ्कुर। गुणाः—"तत्करीर कटु पाके रसे रूक्षो गुरु सर। कषाय कफकृत् स्वादुर्विदाही वात पित्तल॥" भा।

**वंशकर्पूर (रोचना)।** पु, स्त्री। वंश-रोचनायाम्। বংশলোচন। रा नि व ६।

**वंशकारः।** पु। गन्धके। व निघ।

**वंशकुटजा।** स्त्री। कृष्णकुटजे। वै निघ।

**वंशजः।** पु, क्ली। वेणुयवे। বাঁশের চাউল। रा नि व १६। अगुरुकाष्ठे। स्त्री (जा)। वंश रोचनायाम्। বংশলোচন। श र। "वंशजा तु रुक्षी वृष्या बल्या स्वाद्वी च शीतला। तृष्णा कासज्वरश्वासक्षयपित्तास्रकामला। हरेत् कुष्ठ व्रण पाण्डु कषाया वातकृच्छ्रजित्॥" भा।

**वंशतण्डुल।** पु। वेणुयवे। বাঁশের চাউল। रा नि व ६।

**वंशतैलम्।** क्ली। अक्षिविकारोगे तैलम्। "कटुतैलमक्षिविष मूले वंशफले प्रतम्।" रस र।

**वंशत्वक् (च्)।** स्त्री। वंशत्वचि। বাঁশের নীল। तद्गुण—रक्त स्रावकारित्वम्।

**वंशदला।** स्त्री। वंशपत्रतृणे। বাঁশপাতা ঘাস। रा नि व ८।

**वंशदूर्व्वा।** स्त्री। कटुकायाम्। कट्वी। शतपर्व्वायाम्। দূর্ব্বাবিশেষ। किमुकायाम्। रा नि व २२।

**वंशधान्यम्।** क्ली। वेणुयवे। বাঁশের চাউল। तच्च देशभेदाद्बहुविध। रा नि व १६। [रा नि व १४।

**वंशनेत्रम्।** क्ली। इक्षुमूले। আখের চক্ষু।

**वंशपत्रः।** पु। नल। नल। रा नि व ०।

**वंशपत्रकः।** पु। श्वेतेक्षौ। रा नि व १४। रूग्रकमत्स्ये। বাঁশপাতা মাছ। श मा। देव मणि। वै निघ। क्ली। वंशपत्रहरिताले। हेम।

**वंशपत्रिका (त्री)।** स्त्री। वेणुदले। বাঁশের পাতা। सा कौशम्बरदेशलीढ। वंशपत्राकार तृणे। বাঁশপাত ঘাস। स वेणुपत्री। कचिदि रयेते। तत्पर्य्यायाः,—वंशदला जीरका जीर्ण पत्रिका। गुणाः—मधुरा शीतला पित्तघ्नी रक्तदोषहरी रुच्या पशुदुग्धवर्द्धिनी च। रा नि व ८। नाडीहिङ्गुनि शब्दे हिङ्गुशिर्दे।

**वंशपीतः।** पु। कणगुग्गुली। रा नि व १२।

**वंशपुष्पा।** स्त्री। सहदेवायां। रा नि व ४।

**वंशपूरकम्**<br>**वंशमूलम्** } क्ली। इक्षुमूले। रा नि व १४।

**वंशबीज।** पु। वेणुयवे। বাঁশের চাউল। रा नि व १६।

**वंशयव।** पु। वेणुयवे। বাঁশের চাউল। तद्गुणाः—"तद्यवास्तु सरा रूक्षा कषाया कटुपाकिन। वातपित्तकरा उष्णा बद्धमूत्रा कफापहा।" रा नि व १६।

**वंशरोचना।** स्त्री। (The manna of the bambu वंशपर्व्वमध्यजातनीलाभधवलपदार्थ। বংশলোচন। তে তবাশীর। तत्पर्य्यायाः,—त्वक्क्षीरा तुगा तुगाक्षीरी शुभ्रा वंशजा शुभ्री वंशक्षीरी वंश क्षीरिका त्वक्क्षीरी शुभ्रा वैणवी त्वक्सारा कर्म्मारी श्वेता वंशकर्पूररोचना वंशोद्भवा तुङ्गा पिङ्गा रोचनिका वंशशर्करा। गुणाः—रूक्षा कषाया मधुरा हिमा श्वासकासघ्नी रक्त शुद्धिकरी तापघ्नी पित्तोद्रेकशमनी च। रा नि व ६। अपिच वंशजा तु रुक्षी वृष्या बल्या स्वाद्वी च शीतला। तृष्णा कास ज्वर श्वास क्षय पित्तास्र कामला। हरेत् कुष्ठ व्रण पाण्डु कषाया वात कृच्छ्रजित्। भा।

**वंशवर्द्धिनी।** स्त्री। वंशलोचनायाम्। वै निघ।

**वंशविदल।** पुं। वंशकृतसन्दंशिकायाम्। বাঁশের চিমটা। सु चि २०अ।

**वंशव्यजनवायु।** पु। वंशकृततालवृन्तवायौ। বাঁশের পাখার বাতাস। गुणाः—"वंशव्य जनजो

वात रुचौघ्नो वातपित्तद ।" राज २५ ।

**वशशर्करा** । स्त्री । इक्षुजातशर्करायाम् । शामशाड़ार चिनि । गुणा—चक्षुष्या वृष्या सुमधुरा रुचा च । रा नि व १४। वंशरोचनायाम् । रा नि व ६ ।

**वंशशलाका** । स्त्री । वीरणमूले । वेणार मूल । वंशनिर्मितशलाकायां । हे च ।

**वंशक्षीरी** । स्त्री । वंशलोचनायां । रा नि व ६ ।

**वंशाङ्कुर** । पु । वंशकरीरे । बाँशेर कोँड । रा नि व ७ ।

**वंशाग्रम्** । क्ली । वंशाङ्कुरे । बाँशेर कोँड़ । वै निघ ।

**वंशान्तर** । पु । नलाख्यतृणे । नल, खागड़ा । रा नि व ८ ।

**वंशावलेख** । पु । वंशत्वचि । बांशेर छक् । सु चि । ८ ।

**वंशास्थि** । क्ली । मर्कटास्थनि । वै निघ ।

**वंशाह्व** । पु । वेणुयवे । रा नि व १६ ।

**वंशिक** । पु, क्ली । कृष्णेक्षौ । कालिन इक्षु । वै निघ । अगुरुकाष्ठे । अम । स्त्री (का) । पिप्पल्याम् । वै निघ ।

**वंशी** । स्त्री । वंशलोचनायां । वै निघ २भ मयद्दषो चि जातीफलादिचूर्णे । इपि । कर्षचतुष्टये । ८ तो । रा नि व २१ । वसरेणुमाने । "वसरेणुस्तु पर्यायनामा वंशी निगद्यते ।" भा ।

**वंशोद्भवा** । स्त्री । वंशरोचनायाम् । वै निघ र पि चि वासाखण्डे ।

**वंश्यम्** । क्ली । वंशलोचने । वै निघ २भ चय चि सूर्य्यप्रभावट्याम् ।

**वक** । पु । अगस्तिद्रुवे । बँकफुलेर गाछ । हि वासना । मं अगस्ता । तें अविसि । ता अगति । तत्पर्य्याया,—शिववल्ली पाशुपत एकाष्ठील द्रुक वसु वसुक वसुद्रु वसूक वकपुष्प शिवप्रिय शिवमल्ली काकनामा काकमौल स्थूलपुष्प सुपुरक रक्तपुष्प सुनितक अगस्त अगस्त्य वङ्गसेन वङ्गसेन शीघ्रपुष्प सुनिद्रुम मुनिपुष्प व्रणारि दीर्घफलक वकपुष्प सुरप्रिय शिवापीड सुव्रत शिवाह्व शिवेष्ट शिवा ह्लाद शाम्भव क्रमपूरक रविसन्निभ । स तु श्वेत पीत नील लोहित रक्तपुष्पभेदेन चतुर्विध । तेषां सा गुणा,—"वकोऽतिशिशिरस्तिक्तो मधुरो मधुगन्धक । पित्तदाहकफश्वासश्रमहारी च दीपन ॥ अपिच—"अगस्ति पित्तकफजित् चातुर्थकहरो हिम । रुच्यो वातकरस्तिक्त प्रतिश्याय निवारण ॥ वकोऽनुष्ण कटुस्तिक्त कफपित्तविषा पह । योनिशूलक्षयादाहकृष्णशोथासनाशन ॥" भा । तत्पुष्पगुणा,—"अगस्तिकुसुम शीत चातुर्थकनिवारक । नक्ताम्ध्यनाशन तिक्त कषाय कटुपाकि च । पीनसघ्नं पित्तघ्नं वातघ्नं मुनिभिर्मतम् ॥" प्रजातीयजलचरपक्षिविशेषे । वक पाखी । तस्य मांस भक्ष्यात गुरु । रा नि व १७ । वातघ्न स्निग्ध सृष्टमल हृद्य रक्तपित्तहर हिमश्च । राज १५ । See प्लव ।

**वकचिञ्चिका** । स्त्री । मत्स्यविशेषे । छारा ।

**वकपुष्प (ष्पा,ष्पी)** । पु, स्त्री । अगस्तिद्रुवे । वासना फुलेर गाछ । श र । क्ली । वकपुष्पे ।

**वकाची** । स्त्री । वकचिञ्चिकामत्स्ये । छारा ।

**वकु(कू)ल** । पु (Mimusops Elengi) स्वनामख्यातद्रुवे । वकुल गाछ । हि वकुल, मौलसरी । तें पोगडचेट्टु । उत् बउडकुडि । वम् वकुली । दा घोलसरी । ता मोगदम् । तत्पर्य्याया,—केशर केसर सिंहकेसर वकूल वरलब्ध सीधुगन्ध मुकुल मुकुल स्त्रीमुख मधु दोहल मधुपुष्प सुरभि भ्रमरानन्द स्थिरकुसुम शारदिक करक विशारद गूढपुष्पक धन्वी मदन मद्यामोद चिरपुष्प । गुणा—शीतल हृद्य विषदोषहर मधुर कषाय मदाढ्य हर्षद । रुचा क्षीराढ्य सुरभि शीतल मधुर स्निग्धकषाय मलग्राहि च । इति लवपत्र पुष्पगुणा । रा नि व १० । "वकुलस्तुवरोऽनुष्ण कटुपाकरसो गुरु । कफपित्तविषश्वित्रकृमिदन्त गदापह ॥" भा । "मधुरश्च कषायश्च स्निग्ध सग्राहि वाकुल । स्थिरीकरश्च दन्तानां विशद फलमुच्यते ॥" सु सू ४६ ।

**वकुलपुष्पम्** । क्ली । वकुलकुसुमे । अम ।

**वकुला** । स्त्री । कटक्यां । कटुकी । रा नि व ६ ।

**वकुली** । स्त्री । काकोल्यां । दाँदनी । श च ।

**वकुश** । पु । पद्मगन्धे ।

**वकेरुका** । स्त्री । वलाकायां । मे ।

वकोटः । पु । वके । त्रिका ।

वक्रमः । पु । मद्यविशेषे । मध जमल एव । मदेर सिटा । गुणा,—"दश प्रवाहिकाटोप-दुर्नामानिलशोफहृत् । वक्रमो हृतसारत्वात् विष्टम्भी वातकोपन । दीपन स्पष्टविण्मूत्रो विशदोऽल्पमदो गुरु ॥" सु सू ४५ ष मद्यव ।

वक्र(क)शालिः । पु । स्वनामख्यातमध्यदेश सम्भूतशालिधान्ये । शालिधान्यविशेष, याहा मधादेशे जन्मे । म धकोइधान । गुणा —लघु सुखपाककरत्व । रा नि व १६ ।

वक्रम् । क्ली । मुखे । रा नि व १८ । तगरमूले । वै निघ । तगरपुष्पे । टगर फूल । रा नि व १० ।

वक्रकटुता । स्त्री । मुखस्य कटुतायाम् । मुखवैरस्ये । मा नि ।

वक्रखुरः । पु । दन्ते । त्रिका ।

वक्रपट्ट । पु । अश्वस्य चणकभोजनपात्रे । तोबड़ा । हे च ।

वक्रभेदी (इन्) । पु । तिक्तरसे । हे च ।

वक्रमुण्डिका । स्त्री । मुखमुण्डिकेतिख्याते बालग्रहविशेष । तदाविष्टस्य शिशोर्लक्षण,—"म्लानाङ्ग सरुधिरपाणिपादवक्त्रो बह्वाशी कलुष शिराततोदरी च । सज्ञेय शिशुरथ वक्रमुण्डिकाया सोद्वेगी भवति च मूत्रतुल्यगन्धि ॥" भा ।

वक्रवास । पु । नागरङ्गवृक्षे । लेबु गाछ । रा नि व ११ ।

वक्रशल्या । स्त्री । काकादनीलतायाम्, श्वेत गुञ्जायाम् । रा नि व ३ । रक्तगुञ्जायाम् । वै निघ ।

वक्रशोधनम् । क्ली । निम्बूफले । लेबु । वै निघ । भव्यफले । चालता । रा नि व ११ । त्रि । मुखशोधने ।

वक्रशोधी (इन्) । पु । जम्बीरे । लेबु । जटा । त्रि । मुखशोधके ।

वक्राधिवास । पु । नागरङ्गवृक्षे । वै निघ ।

वक्रालु । पु । वाराहीकन्दे । वै निघ ।

वक्रम् । क्ली । तगरे । तगरपादुका । वा उ १७ष । सियो च दष आ चि । पर्पटके । क्षेत्पापड़ा । रा नि व ५ । त्रि । तत्वा वक्रोभूते अस्थिभङ्गविशेषे । "तथाभुग्नमविद्धुतास्थि" इति लक्षणम् । सु नि १५ष । भा । त्रि । कुटिले ।

वक्रकण्टः (कः) । पु । खदिरवृक्षे । खयेर गाछ । रा नि व ८ । बदरवृक्षे । कुल गाछ । रा नि व ११ ।

वक्रगः । पु । सर्पे । वै निघ ।

वक्रगुल्फः । पुं । उष्ट्रे । वै निघ ।

वक्रग्रीव । पु । उष्ट्रे । त्रिका । [ श र ।

वक्रचञ्चु । पुं । शुकपक्षिणि । टेयाँ पाखी ।

वक्रतुण्ड । पुं । शुकपक्षिणि । श र ।

वक्रदंष्ट्रः । पु । शूकरे । वै निघ ।

वक्रदन्ती । स्त्री । हस्वदन्त्याम् । वै निघ ।

वक्रनक्रः । पुं । शुकपक्षिणि । टेयाँ पाखी । मे ।

वक्रनासिकः । पु । पेचके । त्रिका ।

वक्रपुच्छः । पु । कुक्कुरे । त्रिका ।

वक्रपुष्प । पु । बकवृक्षे । बकफुलेर गाछ । रा नि व १० । पलाशवृक्षे । पलाश गाछ । वै निघ ।

वक्रपुष्पिका । स्त्री । लाङ्गलिकायाम् । विष लाङ्गलाय । वै निघ ।

वक्रवालधिः / वक्रलाङ्गूलः } पुं । कुक्कुरे । हे च । रा नि व १९ । त्रि । वक्रपुच्छयुक्ते ।

वक्रवक्त्रः । पु । शूकरे । श र ।

वक्रशल्या । स्त्री । कुटन्निनीक्षुपे । रा नि व ५ । कटुतुम्ब्याम् । तितलाउ । रक्तलाङ्गलिकायाम् । लाल विषलाङ्गुलिया । वै निघ ।

वक्रा । स्त्री । कर्कटशृङ्ग्याम् । काँकड़ाशृङ्गी । मद व ३ । सूक्ष्मायाम् । पिड़िं शाक । वै निघ ।

वक्राग्रम् । क्ली । कवाटवक्रवृक्षे । र मा ।

वक्राङ्गः । पु । हंसे । हे च । त्रि । कुटिलाङ्गे ।

वक्री (इन्) । पु । गर्भविकारजन्यपुरुषभेदे । यथा—"मातुर्व्यवायप्रतिघेन वक्री स्याद्बीजदौर्बल्यतया पितुश्च ।" च शा २ष ।

वङ्कसेनः । पुं । अगस्तिवृक्षे । बक वृक्ष । त्रिका ।

वङ्क्षि (ङ्क्षी) । पु, क्ली (ङ्क्षि,ङ्क्षी) । पर्शुके, पार्श्वास्थनि । उणा । हे च ।

वङ्किल । पु । कण्टके । त्रिका ।

वङ्गम् । क्ली । शीसधातौ । सीसा । रङ्गधातौ ।

রাং টিন্। तत्पर्य्याया,—स्वच्छ नागजीवनं मृदङ्ग गुरुपत्र चक्रसंज्ञ श्वमर नागज कस्तीरं आलीनक सिंहलं खर्वट नाग आपुषं त्रपु त्रपु चपुषं वङ्ग कुरूप्य पिच्चट पूतिगन्ध। रा नि व १३। वङ्ग द्विविध खुरकमिश्रभेदेन। यथाह—“श्वेतं मृदु लघु स्वच्छं स्निग्धमुष्णसहं हिमम्। सुवर्णकरं कान्तं त्रपुश्रेष्ठमुदाहृतम्। खुरकं मिश्रकञ्चापि द्विविधं वङ्गमुच्यते। उत्तमं खुरकं तत्र मिश्रकं त्ववरं मतम्॥” गुणा—“वङ्गं लघु सरं रूक्षमुष्णं मेहकफक्रिमीन्। निहन्ति पाण्डुं सश्वासं चक्षुष्यं पित्तलं मनाक्॥” भा पू १भ धा व। तिक्त मधुरं मेदि पाण्डुक्रमिघ्नं वातघ्नं तुत्थनम् ईषत्पित्तलञ्च। राज। अशोधितवङ्गदोषा यथा—वङ्गं विधत्ते खलु शुद्धिहीनं। तथाह्यपक्वं किलासगुल्मौ। कुष्ठानि शूलं क्रिमि वातशोथं पाण्डुं प्रमेहञ्च भगन्दरञ्च॥ विषोपमं रक्तविकारवृन्दं क्षयञ्च कृच्छ्राणि कफं ज्वरञ्च। महाश्मरीविद्रधिमुख्य रोगान्। नागोऽपि कुर्य्यात् कथितान् विकारान्॥ तच्छोधनविधिर्यथा,—रङ्गनागौ प्रतप्तौ च गलितौ तौ निषेचयेत्। त्रिधा त्रिधा विशुद्धिः स्यात् रविदुग्धेऽपि च त्रिधा॥ तन्मारणविधिर्यथा,—“त्रपु वङ्गमयसि हृष्टे सयवचारसैन्धवं वङ्गौ। भस्मसि पटगलितमधो घृतमम्लत पुनर्म्मर्द्दम्॥” अन्यमत यथा—“वङ्गं सतालमर्कस्य दुग्धे पिष्टा च तम् पुटेत्। शुष्काश्वत्थभवैश्चूर्णैः सप्तधा भस्मतां व्रजेत्॥” समभागवङ्गतालकम् अर्कक्षीरेण पिष्टा अश्वत्थवल्कचूर्णेन सप्तधा गजपुटे पचेत्। “चुल्ल्यां दृढतरे पात्रे लौहदण्डेन बुद्धिमान्। वङ्गं सम्मर्द्दयेच्चूर्णैरमीषामतियत्नतः। प्रथमं रजनी चूर्णैर्द्वितीये जीरकस्य च। तृतीये त्रिफलाचूर्णैश्चतुर्थेऽश्वत्थचित्रयोः। एवं यामद्वयं मर्द्दं (?) तीव्र दृढाग्निना। अनेन जायते भस्म वङ्गस्य नात्र संशयः॥” सा का। अमृतीकरण लौहशब्दे द्रष्टव्यम्। पु। कार्पास। वार्त्ताकी। स।

**वङ्गजम्**। क्ली। सिन्दूरे। रमा। [श र।

**वङ्गन**। पु। वार्त्ताकुवृक्षे। বেগুন গাছ।

**वङ्गमल**। पु क्ली। सीसधातौ। वै निघ।

**वङ्गशुल्वजम्**। क्ली। कांस्यधातौ। কাঁসা। हे च।

**वङ्गसद्दृशम्**। क्ली। यशदे। দস্তা। वै निघ।

**वङ्गसेन (क)**। पुं। वकवृक्षे। বকফুলের গাছ। त्रिका। रक्तवकवृक्षे। रमा। तत्पुष्पगुणा—“वासकस्य च पुष्पाणि वङ्गसेनस्य चैव हि। कटुपाकानि तिक्तानि कासक्षयकराणि च॥” राज २प। चिकित्सासारसंग्रहकारे।

**वङ्गारि**। पु। हरिताले। हे च।

**वङ्गावलेह**। पु। मेहे अवलेहः। “वङ्गभस्म द्विवल्लञ्च लेहयेन्मधुना सह। ततो गुडसमं गन्धं भक्षयेत् कर्षमात्रकम्॥ रस चि।

**वङ्गेश्वर**। पु। मेहघ्नरसविशेषे। अत्र रस सिन्दूर वङ्गभस्मसमभागम। अन्यो यथा—“रसेन वङ्गं द्विगुणं प्रगृह्य विद्राव्य निक्षिप्य समुद्रजं तत्। विमर्दयेदम्लजलेन गोलं कृत्वा सुसंवेष्ट्य पुटेत तीव्रम्। ततः क्षिपेत्तत् जलपात्रमध्ये नीरन्तु सत्यज्य गृहाण सूतम्॥” मात्रा वल्लमिता। अत्र लवणस्य २० भागाः। रस चि।

**वङ्क्षण**। पु। सक्थिसन्धौ। কুঁচকী স্থান। रा नि व १८।

**वङ्क्षणानाह**। प। वङ्क्षणयोराकर्षणवत्पीड़ायाम्। भा म ३भ।

**वच**। पु। कीरपक्षिणि। টিয়া পাখী। मे।

**वचक्रा (ण्डी)**। स्त्री। शारिकायाम्। শালিক পাখী। त्रिका। वर्त्तौ। বাতি। श र।

**वचनम्**। क्ली। शुण्ठ्यां। শুঠ। श च।

**वचर**। पु। कुक्कुटे। কুক্‌ড়া। मे।

**वचा**। स्त्री। (Acorus calamus) The sweet flag स्वनामख्यातपण्यद्रव्ये। বচ। हि वच, घोरवच। मे वडज, नखवस। वम् वेखण्ड। ता वशम्बु। तत्पर्य्याया,—उग्रगन्धा षड्ग्रन्था तीक्ष्णा गोलोमी शतपर्व्विका जटिला मङ्गल्या विजया उग्रा रक्षोघ्नी वच्या लोमशा क्षुद्रपत्री मालिनी भद्रा। वा सू १५अ शोधनव, वचादि च। सु सू ३८अ मुस्तादि। “भाद्रवचा।” गुणा—तीक्ष्णा कटु उष्णा कफामवह्निशोफघ्नी वात ज्वरातिसारघ्नी वान्तिकृत् उन्मादभूतघ्नी च। रा नि व ६। अपिच,—“वचोद्भवा वातकफज्वरघ्नी दीपनी।” अन्यञ्च—“चहिवर्षं पयसाज्येन मासमेकन्तु सेविता। वचा कुर्य्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम्॥ चन्द्रसूर्य्यग्रहे पीतं पलमेकं पयोऽन्वितम्। वचाया तत्क्षणं कुर्य्यात् महाप्रज्ञान्वितं नरम्॥ “अपुष्पापि सदापि

